

जन्म संवत १८९९
किशनगढ

दीक्षा संवत १९३१
अमदावाद

स्वर्गारोहण
सं १९७६ ना मार्गशीर्ष वदि ३. घोघा

शान्तमूर्ति श्रीमान
मुनिमहाराज श्रीगुलाबविजयजी



राजाए पण तेमने योग्य जाणीने पोताना प्रथम शिष्य तरीके स्वीकार्या अने मुनि गुलाबविजयजी नाम राख्युं. त्यारपछी एमना गुरु
महाराजना परिवारमां मुनिराज श्री आत्मारामजी महाराजना आववाथी तेमज बीजा पण घणा मुनिराज नवा थवाथी घणी वृद्धि थइ.
एमणे पोताना ४५ वर्षना दीक्षापर्यायमां चारित्रने दीपाव्युं. शासननी शोभा वधारी. तेओ स्वभावे शांत, सौम्य, सरल,
मिलनसार, उदार, धीर, निःस्पृह तेमज मिष्टभाषी हता. तेमणे अनेक सूत्रो, ग्रंथो तेम ज प्रकरणोनो अभ्यास कर्यो हतो. विहार
पण अनेक क्षेत्रोमां कर्यो हतो अने उपदेशामृतवडे अनेक भव्य जीवो पर उपकार कर्यो हतो. ज्योतिष विद्याना पण सारा अभ्यासी
थयेला होवाथी तेमनुं आपेल दीक्षा प्रतिष्ठा विगेरेनुं मुहूर्त निर्विघ्न नीवडतुं हतुं. दररोज १५०० गाथाओनो स्वाध्याय करता
हता. आहार-विहारमां बहु नियमित हता. प्रायः मध्याह्न अगाउ आहार लेता ज नहीं. वळी आहारमां गणत्रीनी वस्तुओ ज वापरता.
ए रीते इंद्रियोनुं दमन करता हता अने कषायनो जय करवामां प्रयत्नशील हता. तेओ साहेबे गुजरात, काठीआवाड, मारवाड
अने मेवाडमां मुख्यत्वे अमदावाद, खेडा, लुणावाडा, बोरु, शीहोर, गोघा विगेरेमां विहार कर्यो हतो. शिष्यो करवानी वृत्ति
विशेष न होवाथी तेओनी देशनाथी अनेक मनुष्योने प्रतिबोध थयो हतो छतां मुनि महाराजश्री मणिविजयजी अने मुनि
महाराज श्री मंगळविजयजी ए बे शिष्यो ज कर्या हता के जेओ अत्यारे पण गुरुमहाराजना नामने शोभा आपी रह्या छे. ते
सिवाय गोघानिवासी श्रावक नानचंद गांडाभाइए पण महाराजश्रीना उपदेशथी धर्म पामीने सारी लक्ष्मीवाळी स्थिति छतां स्त्रीभर्तार
बन्नेए एक साथे चारित्र ग्रहण करी महाराजश्रीना ज शिष्य थया हता, तेमनुं नाम मुनि नरेंद्रविजयजी राखवामां आव्युं हतुं. तेओ
काळधर्म पामी गया छे. संसारीपणामां पण तेओ दिलना उदार, जीवदयाना कार्यमां तत्पर, स्वामीभाइना साचा सहायक अने दरेक

धर्मकार्यमां आगेवानीभरेलो भाग लेता हता.

महाराजश्रीए केटलाक क्षेत्रनो उद्धार तो खास प्रयत्नपूर्वक करेलो छे. लुणावाडामां श्रावकोना घर सो लगभग हता पण वधा प्राये श्रद्धाहीन वनी गया हता. देरासर हतुं पण तेनी सारसभाळ लेनारानी के पूजाभक्ति करनारनी संख्या वहु अल्प हती. त्यां चातुर्मास करीने तेम ज शेषकाळे रहीने उपदेशामृतवडे श्रावकोने आर्द्र कर्या, धर्ममां स्थिर कर्या, व्रत नियमो लेवराव्या, देरासर समराव्युं, पूजाभक्ति करनारनी सख्या वधारी, जिनपूजा, सामायिक, पोसह, प्रतिक्रमणादि क्रिया शीखवीने तेना रुचिवाळा कर्या, तेमना प्रतापथी अत्यारे पण लुणावाडा क्षेत्र सारी गणत्रीमां गणाय तेवु वर्ते छे. ए गाम उपर महाराजश्रीनो पारावार उपकार छे.

गोघामां पण ज्यारे महाराजश्री पहेलुं चोमासुं पधार्या त्यारे यात्रालुनी अथवा मुनिवंदनादि माटे कोइ श्रावको आवे तो तेमनी भक्ति करवानुं साधन ज नहोतुं. महाराजश्रीने ते वात ठीक न लागी तेथी शेठ जीवणभाई जेचंद विगेरेने उपदेश आपीने तेओ, परी. धरमचंद मगनलाल तथा शाह नानचंद गांडाभाइ एम त्रण भाग वच्चे तळाटी जेवुं खातुं शरू कराव्युं. त्यारपछी तो दोशी करमचंद वीरचद गुजरी जतां तेमनी पाछळ रु. २०००) ए खातामां आपवामां आव्या अने तेमनी विधवा श्राविका व्हेन रामबाए ए खाताने सारी रीते पोषण आपी दीपाव्युं. तेने माटे एक मकान पण सगवडवाळे स्थाने ए खातामां वक्षीश मळ्युं. ते यात्रालु विगेरेने वहु आराम आपनार स्थान थइ पड्युं. एटले ते खाताने मदद पण वहु मळवा मांडी. परिणामे ए खातुं सारी रीते पगभर थयुं एटलुं ज नहीं परंतु ते खाताना वधारामांथी बीजा साधारण खाताने पण पोषण मळवा मांड्युं. अत्यारे ए खातुं एक सारी आवकवाळुं थइ पड्युं छे. एनो दाखलो बीजा गाम ने शहेरोवाळाओए पण लेवा जेवो छे.

उपर जणावेला चे शहेरो उपरांत वोक नामनुं गाम के जे मुनिमहाराजश्री मूळचंदजीनुं क्षेत्र कहेवातुं हतुं. त्यांना श्रावको काळे
फरीने मंद श्रद्धावाळा थइ गया हता. ए वातनी चरित्रनायकने खबर पडतां तेओ साहेब त्यां पधार्या, चतुर्मास रह्या अने
शेष काळमां रोकाइने श्रावकोने पाछा दृढ कर्या जेथी प्रथम प्रमाणे देवगुरुनी भक्तिमां तत्पर थइ गया अने महाराजश्रीनो परम
उपकार मानवा लाग्या. तेओ अनेक वखत महाराजश्री ज्यां चातुर्मास होय त्यां वंदन करवा आवता अने वे पैसा सारी रीते
वापरी जता हता. महाराजश्रीना उपदेशथी उजमणा, तीर्थयात्रा माटेना संघो तथा बीजा महोत्सवो पण घणा थया छे.

छेल्लुं चतुर्मास करवा महाराज श्री गोघे पधार्या हता. गोघाना श्री संघे महाराजश्रीनी सेवा बहु ऊंचा प्रकारे करी हती.
महाराजश्रीनी शरीर परनी निःस्पृहता आ वखते खरेखरी तरी आवती हती. भक्त श्रावकोनो अत्यंत आग्रह छतां पण महाराजश्री
औषध लेवा नहोता. छेल्ला त्रण दिवसथी तो पोतानो अंतसमय चोक्कस कहेलो हतो, जेथी श्रावको सारी संख्यामां पासे ने पासे वेसी
रहेता हता. महाराजश्री पंचपरमेष्ठी महामंत्रनुं वारंवार स्मरण करता. अंते चार शरण करवा विगेरे आराधना करी, चारे आहारनो
त्याग करी, सर्व जीवोने खमावी, सर्व पापोने आळोवी, ' अरिहंत अरिहंत ' एटलो मात्र चार अक्षरनो ज जाप करता वि०
सं. १९७६ ना मागशर वदि ३ बुधवार सवारे सवा आठ कलाके शुभ ध्याने स्वर्गवासी थया. श्रावकोए तेमज जैनेतरोए घणो
भक्तिभाव वताव्यो. आरंभना कार्यो बंध कर्या. बाद योग्य रीते अग्निसंस्कारविधि करवामां आव्यो. ए गुरुमहाराजना परम
भक्तिवान् अने गोघाना संघना अग्रणी परी. धरमचंद मगनलाले तेमना संस्कारने स्थानके देरी करावीने तेमां तेमनी पादुका पध-
रावी तेमज अठ्ठाईमहोत्सव करी गुरुभक्ति प्रदर्शित करी. धन्य छे आवा चारित्रपरायण आत्मगुण साध्य करनार मुनिमहाराजने !

# प्रस्तावना

नन्दन्तु नीतिनिपुणाः शास्त्रनिष्णाताः सज्जनाः—इह खलु जन्मजरारोगमृत्यादिदुःखपूरिते संसारसागरे तिमिंगिलन्यायप्रवृत्ताः प्राणिनः पर्यटन्तः प्रचुरतरदुःखा दरीदृश्यन्ते । ते च सुखाभिलाषिणोऽपि तदुपायमजानाना एव वृथा गमयन्त्यायूंष्यन्यान्यासदुपायासक्ताः । निरपायसुखं च विना निर्वृतिं नास्त्येवेति सुप्रसिद्धं, सा च विना कर्मक्षयं न प्राप्यते, स च ज्ञानतपोभ्यामेव, तत्रापि तपो भावविशुद्धं यथाविधि कृतमवश्यं निकाचितान्यप्यनन्तभवोपार्जितानि कर्माणि क्षपयितुमलम् । यदुक्तमागमे—

" अनिआणस्स विहिए, तवस्स तविअस्स किं पससामो । किज्जइ जेण विणासो, निकाईयाणं पि कम्माणं ॥ १ ॥ "

तच्च तपोऽनेकविधं वर्णितमागमे, तथाप्यत्राचाम्लवर्धमानाख्यं तप उत्कृष्टफलदं प्रतिपादितम्, श्रीचन्द्रस्य तदनुभावादेव सुखितत्वात् । यदुक्तमत्रैव ग्रन्थे प्रथमपत्रे-" यत उक्तं सिद्धान्ते—

" एगाइआणि आयं-बिलाणि एकेकवुड्ढिमंताणि । पज्जंतं अब्भत्तट्ठाणि, जाव पुण्णं सयं तेसिं ॥ १ ॥

अयं आंबिलवद्धमाणं, नामं महातवचरणं । वरिसाणि तत्थ चउदस, मासतिगं वीस दिवसाणि ॥ २ ॥ "

उक्तं च-जं चंदणेण तइआ, तवियं अइगुरुअ वद्धमाणतवं । तस्स फलेण हु एसो, सिरिचंदनिवो सया सुहिओ ॥११॥ इति ॥

एतदर्थविस्तरार्थमेवात्र ग्रन्थे श्रीचन्द्रनृपस्य कथानुयोगः संक्षिप्य लिखितः श्रीसिद्धर्षिणा प्राक्प्राकृतचरित्रात् । तथा चात्रैव पर्यन्तपत्रे-

" वस्वंकेषुमिते ( ५९८ ) वर्षे, श्रीसिद्धर्षिरिदं महत् । प्राक्प्राकृतचरित्राद्धि, चरित्रं संस्कृतं व्यधात् ॥ ५९ ॥

तस्मात्रानार्थसंदोहा–दुष्धृतेयं कथाऽत्र च ।" इत्यादि

अनेन पर्यन्तग्रन्थेन कर्तुर्नाममात्रमेव ग्रन्थस्यास्य पुराणत्वं च निश्चीयते, अन्यच्च कर्तुर्जन्मभूम्यादिकं प्रव्रज्यादिकं गुर्वादिकं च सर्वमपि अज्ञातमेवास्ति, अस्मिन् ग्रन्थे कुत्रापि तत्संबन्ध्युल्लेखाभावात् प्रशस्तेरप्यभावात् । कदाऽयं ग्रन्थकर्ता जातः, कांस्कानन्यग्रन्थान् प्रथितवान् इत्यादि वृत्तान्तः कुतोऽपि नोपलभ्यते । किं च उपमितिभवप्रपञ्चकथायाः कर्ता श्रीसिद्धर्षिः गणी ख्यातः स एवायं न वा इति न ज्ञायते, तथापि स तु महात्माऽद्वितीय इति स एवायमिति न संभाव्यते ।

इदं कथानकं श्रीवर्धमानस्वामिना श्रेणिकराजाग्रे निरूपितं, तदनुसारेण श्रीगौतमस्वामिना वैशालीनगरीस्वामिनश्चेटकराजस्याग्रे कथितमित्येतत्कथानकमूलशुद्धिः । एतस्य संक्षिप्तः सारः किंचिल्लिख्यते—

प्रथमाधिकारे—अस्मिन् जम्बूद्वीपे भरतक्षेत्रे कुशस्थलपुरे प्रतापसिंहो राजा, तस्य पञ्चशती राज्ञीनां जयादयश्च पुत्राश्चत्वारः । एकदा नृपो दीपशिखां नगरीं गतः, तत्रत्यदीपचन्द्रनृपस्य कन्यां सूर्यवतीं परिणिनाय, तां च पट्टराज्ञीं व्यधात् । तत्र राज्योपद्रवकारकं शूरपल्लीपतिं दुःसाध्यमपि प्रतापसिंहनृपो जित्वा बबन्ध । ततः सूर्यवतीं लात्वा स्वपुरमाजगाम, सूर्यवत्या सह क्रीडन् राज्यं च पालयन् कियन्तं कालं निनाय । एकदा जयादीनां पुरः कोऽपि नैमित्तिकः समागत्य प्रथमं स्वीयमद्भुतमुपदेशदायकं वृत्तान्तं निवेद्य ततः प्रोक्तवान्–‘ सूर्यवतीपुत्रस्य भाग्यवतो राज्यप्राप्तिर्भविष्यति न तु युष्माकमिति ’ । तच्छ्रुत्वा खेदमेदुरास्ते चत्वारोऽपि भ्रातरः सूर्यवत्या जातमेव पुत्रं मारयितुं निश्चिक्युः । अयं सर्वोऽपि वृत्तान्तस्तत्र गुप्तवृत्त्या स्थितवत्या सूर्यवतीदास्या सैन्ध्या श्रुत्वा गत्वा च स्वस्वामिन्यै निवेदितो रहसि । एकदा शुभस्वप्नचतुष्केण सूर्यवती सगर्भा जाता । तज्ज्ञात्वा नृपेण पृष्टः स्वप्नपाठको भाग्यव-

त्पुत्रोत्पत्तिं जगाद। ततः सूर्यवत्याश्चन्द्रपानदोहदो जातः, स च नृपाज्ञया मन्त्रिणा पूरितः। तत एकदा राजा कणकोटनगरस्य दुर्दान्तौ मल्लमहामल्लौ जेतुं सर्वसामग्र्या सपुत्रः प्रस्थितः, जयस्त्वाहूतोऽपि मायया न जग्मिवान्। चिरकालेन शत्रू जित्वा तत्पुरं स्वायत्तीकृत्य चिरं तत्रैव क्रीडन् स्थितवान्। इतश्च सूर्यवतीप्रसूतिकाले जयकुमारसुभटाः प्रच्छन्नास्तत्रागत्य स्थिताः। तज्ज्ञात्वा भीता सूर्यवती सैंद्रीसखीबुद्ध्या पुष्पहारिण्या दास्या सुगुप्तं प्रसूतं पुत्रं पुष्पवाटिकायां निर्माल्यपुष्पप्रच्छन्नं कृत्वा मोचयामास। ततो जयेन सूतिकागृहे सर्वत्र शोधितोऽपि स न लब्धः, निराशश्च स्वस्थानं गतः। ततो दासी वाटिकां गत्वा तत्र पुत्रमदृष्ट्वा प्रत्यागत्य स्वामिन्यै तदप्राप्तिं निवेदितवती। तच्छ्रुत्वा राज्यादीनां महान् शोको जातः। रात्रौ स्वप्ने कुलदेव्या राज्ञ्याः कथितं—' अन्यत्र मया रक्षितस्ते पुत्रस्ते द्वादशे वर्षे नृपीभूय मिलिष्यतीति शोको न कर्तव्य ' इति। इतश्च तस्मिन्नेव पुरे धर्मी धनी च लक्ष्मीदत्तो वणिग् लक्ष्मीवतीप्रियोऽपत्यरहित आसीत्। तेन तत्रैव रात्रौ स्वप्नो दृष्टः, गोत्रदेव्या पुत्ररत्नलाभः प्रोक्तः। प्रातस्तदुत्सवार्थं पुष्पाण्यानेतुं तस्मिन्नेवोद्याने गतेन तेन स एव बालो लब्धः प्रियायाश्च समर्पितः। गूढगर्भाया मे भार्यायाः पुत्रो जात इति कथनपूर्वं जन्मनामकरणाद्युत्सवाश्चक्रिरे श्रीचन्द्रश्चेति नाम पप्रथे। तद्भाग्येन लक्षेश्वरः श्रेष्ठी कोटीश्वरोऽभूत्। मंत्रिभ्रातृजो गुणचन्द्रस्तस्य मित्रो जातः सवयाः। गुणंधरोपाध्यायसमीपे शस्त्रशास्त्रधनुर्विद्याद्यखिलकलानिष्णातो बभूव। इतोऽष्टवर्षान्ते रत्नपुरं साधयित्वा प्रतापसिंहराजः स्वपुरमागतः सूर्यवतीवृत्तान्तं श्रुत्वा शुशोच। इतः श्रीचन्द्रोऽष्टानां श्रेष्ठिनामष्टौ कन्याः परिणीतवान् ताभिः सह भोगांश्च भुक्तवान्। एकदा समित्रः स पुराद्बहिरुद्यानं गतस्तत्र सरस्वतीरेऽश्वविक्रयकात् सुवेगावश्वौ सुलक्षणौ महामूल्येन गृहीत्वा सुवेगाख्यं रथं कारयित्वा नृपसारथिपुत्रं धनंजयं सारथीकृत्य विजहार। एकदा सुप्रसन्नाद् भैरवाभिधयोगिनः सकाशात्

क्षुद्रप्राण्यन्धकारिणीं मूलिकां लब्धवान् । इत्यादि ॥

द्वितीयाधिकारे—तिलकपुरनगरे श्रीतिलको राजा, रतिः पट्टराज्ञी, पुत्री तिलकमञ्जरी । तस्याः स्वयंवरे नानादेशराजपुत्रा विजयादयश्च कुमारा गताः । तच्छ्रुत्वा स्वयंवरदिने एव श्रीचन्द्रः पित्रादीनकथयित्वा समित्रः सुवेगेन रथेन तत्र गत्वा केनापि राजपुत्रादिनाऽसाधितं राधावेधं हेलया साधयामास। तत्क्षणं तिलकमञ्जर्या तत्कण्ठे वरमाला चिक्षिपे । तदा सर्वैर्नृपादिभिः साश्चर्यैः कोऽयं कोऽयमित्युक्तवद्भिर्महान् संमर्दश्चक्रे । तदवसरं प्राप्य श्रीचन्द्रकुमारः समित्रः प्रच्छन्नं रथमारुह्य स्वपुरं तदैवाजगाम । ततः कन्यावचनेन श्रीतिलकनृपेण सर्वतस्तच्छुद्धिः कारिता, तथापि स न लब्धः । जयादयः कुमाराः सखेदाः स्वपुरमायाताः । प्रताप-सिंहराजेन तद्वृत्तान्तं ज्ञात्वा सश्रेष्ठिनं श्रीचन्द्रमाहूय सादरं प्रशस्य तस्मै ग्रामादिकं ददे । एकदा रथमारुह्य समित्रः कुमारो वन-मियाय । तत्र रात्रौ वृक्षतले सुप्तः, तदा तद्वृक्षस्थेन कीरेण राज्यमंत्रिपदप्रापकं फलद्वयं दत्तं, भक्षितं चैकैकं श्रीचन्द्रगुणचन्द्राभ्याम् । अग्रे गच्छन् कुमारः समित्रः साधुं दृष्ट्वा तं नत्वा तदुपदेशेन ससम्यक्त्वं धर्मं प्राप्य नमस्कारमन्त्रजापं नियमितवान् । अत्र देशनायां मुनिना सामायिकनमस्कारमन्त्रयोर्महिमा विस्तरेण प्रोक्तोऽस्ति । ततो गच्छन् दीपशिखानगर्यां चन्द्रकलाभिधां पद्मिनीं कनीं यथाविधि सविस्तरं परिणिन्ये कुमारः, सा च पट्टदेवी भाविनी । ततस्तया पत्न्या सहितः स्वगृहमागत्य सुखेन तस्थौ । अयं कुमारो महादाता कर्णादिरिवाभूत्, ततोऽपि स महाख्यातिमानासीत् । तेनैव दातृगुणेन जयादिप्रेरितेनैकेन मागधेन श्रीचन्द्रस्य समीपे वरं मार्गयता वायुवेगाश्वयुगलादेकोऽश्वो मार्गितः, ततः श्रीचन्द्रेण सरथं तदश्वयुगं दत्तं । एतद्दातृगुणं दृष्ट्वा पितरं खेदयुक्तं ज्ञात्वा कुमार एकाकी प्रच्छन्नः स्वपुरान्निर्गत्य देशान्तरमियाय । इत्यादि ॥

तृतीयाधिकारे—श्रीचन्द्रो विदेशे सर्वतः संचरन् अदृश्यपुरुषच्छायामपश्यत्, तदनुसारेण स तद्गुहां यावद्गतः, बहिः स्थित्वा पश्यति स्म। ततः स पुरुषस्ततो निर्गत्य गुटिकां मुखे क्षिप्त्वाऽदृश्यो भूत्वा पुरं प्रति प्रस्थितः। तदा कुमारो महतीं शिलामपाकृत्य गुहायां प्रविष्टः। तत्रैकां रूपवतीं तरुणीं वीक्ष्य 'हे भगिनि! कासि त्वं?' इति पप्रच्छ। साश्रुलोचनया तया कथितम्—"नायकाख्यनगरे नृपस्य मंत्री रविदत्तस्तस्य भार्या शिवमती नाम ब्राह्मण्यस्मि। तत्र नगरेऽयं सिद्धचौरः सदा चौर्यं करोति, तेनाहमत्र बलादानीताऽतीव दुःखिनी तिष्ठामि" इत्यादि श्रुत्वा कुमारेण दयालुना तां बहिर्निष्कास्य तद्विवरानने तां शिलां दृषदं चान्यां प्रौढां मुक्त्वा तां शिवमतीं स्वस्थाने प्रापयत्, तद्भर्त्रा मंत्रिणा स प्रशंसितः। ततः श्रीचन्द्रस्तद्वने गत्वा तत्र युक्त्या बलेन च तामदृश्यीकरणगुटिकां गुहान्तर्वर्तिनं स्वर्णरत्नादिभृतमावासं च लब्धवान्। ततः पर्यटन् कुतोऽपि वृक्षोपरिस्थितात् शुकात् औषधद्वयं प्राप्य महेन्द्रपुरं प्राप्तः, तत्र त्रिलोचनाभिधो नृपस्तत्प्रिया गुणसुन्दरी, तयोः सुतां सुलोचनानाम्नीं जात्यन्धामौषधेन सुलोचनां कृत्वा परिणीतवान्, ततो गच्छन् मार्गे कुंडलाख्यपुरे राक्षसोपद्रवं शमयित्वा तन्नृपपुत्रीमपि चन्द्रमुखीमुपयेमे। राज्यद्वयं च लेभे, चौराद्युपद्रवान् च नाशितवान्। इत्याद्यनेकविद्यौषधिसमन्वितः श्रीचन्द्रः स्थाने स्थाने महतादरेणानेकानि राज्यानि प्राप राजपुत्रीश्च पर्यणैषीत्। परोपकारकार्याण्यपि बहूनि कृतवान्। अग्रे गच्छन्मार्गे क्वचिद्वनमध्ये चन्द्रहासखड्गं प्राप्तवान्, तेन तत्परीक्षार्थं वंल्ली चिच्छेद, तन्मध्यस्थितस्य विद्यासाधकविद्याधरस्य शीर्षं छिन्नं, तन्महत्पातकं लग्नं ज्ञात्वाऽतीवात्मानं निनिन्द। ततोऽग्रे पातालमन्दिरे वानरीरूपां मदनसुन्दरीं राजकन्यामौषधिप्रयोगेण मानुषीं कृत्वा वृत्तान्तं ज्ञात्वा परिणिनाय। वानरीकरणौषधिं सप्रतिपक्षां च प्राप। अथान्तरा साधुसमागमे तेभ्योऽन्नपानादिदानं दत्त्वा तदुपदेशं श्रुत्वा दृढधर्मा जातः। एकदा वनान्तः कस्यचिद्योगिनः सुवर्णपुरुष-

साधकस्य तत्प्रार्थनया तस्योत्तरसाधको जातः, परं नमस्कारप्रभावात् स्वयमक्षत एव विद्यादेव्याऽग्निकुण्डमध्ये क्षिप्तं योगिशरीरमेव सुवर्णपुरुषीभूतं प्राप्तवान्। एकदा स कुमारः कनकाख्यपुरे जगाम। तत्रापुत्रे राज्ञि मृते पञ्चदिव्येन तद्राज्यं प्राप्य तन्नृपकन्यां कनकावलीं च पर्यणयत्। तत्र स्वमित्रो गुणचन्द्रो मिलितः। तं तत्र प्रधानपदेऽस्थापयत्। इत्यादि सविस्तरं निरूपितम् ॥

चतुर्थाधिकारे—एकदा समित्रः श्रीचन्द्रोऽरण्ये विचरन् वंशजाल्या मौक्तिकयुग्मं प्राप। तत्र च पर्वते स्थितां भिल्लीं लोहकुंभं स्वर्णकुंभं कृत्वा तस्यै दत्त्वा च दुःखमुक्तामकरोत्। ततो वीणापुरमागत्य तद्राजपुत्रीं पद्मश्रियं तन्मंत्रिपुत्रीं कमलश्रियं चोपयेमाते कुमारमित्रौ। तदवसरे कुमारजननी सूर्यवती राज्ञी सुदुःखिता मिलिता। तां तत्र सगौरवं स्थापयामास। एकदा श्रीचन्द्रश्चतसृभिः श्रेष्ठिपुत्रभार्याभिः सह विद्यया गगनमार्गयायिनं शमीवृक्षमदृश्यीभूयावलम्ब्य प्रच्छन्नं कर्कोटद्वीपे ययौ। तत्रत्यरविप्रभराजस्य नव कन्या उपयेमे। ततो निवृत्ताभिस्ताभिः सहैव शमीवृक्षमवलम्ब्य कुशस्थलपुरमाजगाम। तत्र सूर्यवतीविरहार्दितं काष्ठभक्षणतत्परं स्वपितरं प्रतापसिंहनृपं नैमित्तिकवेषधारी श्रीचन्द्रो ररक्ष। ततः पितृमारणतत्परैर्जयादिकुमारैर्निर्मापिताल्लाक्षागृहादपि स एव पितरं रक्षितवान्। तत्रैवैकदा क्षोभितसकलपौरनृपादिलोकं मत्तं गजं वशीकर्तुं नृपादिभिर्वार्यमाणोऽपि स नैमित्तिकस्तं वशीकृत्योपर्यारुरोह। स च गजो वेगेन वनमियाय, त्रिदिन्या निर्मदो भूत्वा सरसि स्थितः। कुमारोऽपि ततोऽवतीर्य जलं पपौ। तत्र गजजिघृक्षून् भिल्लान् जिगाय। तदा भिल्लकनी मोहिनी अनिच्छन्तमपि श्रीचन्द्रं वव्रे, ततः श्रीचन्द्रः तान् भिल्लान् सविस्तरं धर्मोपदेशेन धर्मपरायणान् चक्रे। ततः कुंडिनपुरे यक्षमंदिरे सुप्तं श्रीचन्द्रं नृपपुत्री सरस्वती बलात्पर्यणयत्। तस्याः पित्रा प्रहितं सैन्यं स जिगाय, ततो राजा तं क्षामयित्वा महान् विवाहोत्सवश्चकार। ततो महाटव्यां पातालनगरे श्रीचन्द्रो गतः। तत्र स्वप्रिया मदनसुन्दरी आसीत्, तस्या वचनेन तं ज्ञात्वा रत्न-

किं च ग्रन्थोऽयं पुरा श्रीजामनगरपुरे पं. शा. हीरालाल हंसराजेन स्वमुद्रालये मुद्रितः, सोऽयमस्माभि अमदावादनगरादाचार्यश्रीविजयसिद्धिसूरीश्वरसकाशादस्य ग्रन्थस्य प्रायः शुद्धा हस्तलिखितप्रतिं मार्गयित्वा ससच्छास्त्रिणा जेठालालेन शोधयित्वा मुनिवरश्रीमंगलविजयोपदेशेन साहाय्यकर्तुः श्रीशिहोरवास्तव्यश्रेष्ठित्रयस्य द्रव्यव्ययेनास्मिन्मुद्रालये मुद्रापितः। शोधनसमये मुद्रितप्रतेर्हस्तलिखितप्रतेश्च बहुपाठव्यत्ययो दृष्टिपथमायातस्तत्र क्वचित्क्वचित् अस्मिन् ग्रन्थे लिखितप्रतेः पाठः (  ) कौंसमध्येऽधो वा पृथग् लिखितः मुद्रितप्रतिपाठश्च तदवस्थ एव स्थापित, क्वचिच्च लिखितप्रत्यनुसारेणाशुद्ध इति मत्वा प्रतिक्षिप्तोऽप्यस्ति, परंतु बुद्धिकल्पितपाठः कुत्रापि न लिखितोऽस्ति।

अस्य प्रुफवाचने कृतेऽपि प्रयत्ने दृष्टिदोषात् मुद्रणालयदोषाच्च क्वचित् स्खलना दृश्यते चेत्सा सुधीभिः शोधनीया ज्ञापनीयाश्च वय, येन पुनर्मुद्रणादिसमये सावधाना भवाम इति प्रार्थयति प्रसिद्धकर्ता। इति शम्। शुभं भवतु ॥

स. १९९२ ज्येष्ठशुदि पूर्णिमा

शा. कुंवरजी आणंदजी,
भावनगर

नराधिप ! ॥८॥ एकैकवर्धमानाभि-र्यावदष्टोत्तरं शतं । आचामाम्लौलिकाभिस्त-त्पारणैश्चोपवासकैः (पारणेषूपवासकैः) ॥९॥
एतत्उक्तं सिद्धांते—
एगाइआणि आयं-बिलाणि एकेक्कवुड्ढिमंताणि । पज्जंतं अब्भतट्ठाणि, जाव पुण्णं सयं तेसिं ॥ १ ॥
अयं आंबिलवद्धमाणं, नामं महातवचरणं । वरिसाणि तत्थ चउदस, मासतिगं वीस दिवसाणि ॥ २ ॥
आचामाम्लैर्वर्धमानं, तपः स्यादतिदुष्करं । य एतत्कुरुते सोऽत्ते, श्रीचंद्रवत्सुखी भवेत् ॥ १० ॥ उक्तं च—
जं चंदणेण तइआ, तवियं अइगुरुअ वद्धमाणतवं । तस्स फलेण हु एसो, सिरिचंदनिवो सया सुहिओ ॥ ११ ॥ तथाहि—
जंबूद्वीपाभिधे द्वीपे, क्षेत्रे भरतनामनि । पुरं कुशस्थलं नाम, पूर्वमासीन्महत्तरं ॥ १२ ॥ तत्र प्रतापसिंहोऽस्ति, दशलक्ष-पुराधिपः । न्यायवान् नृपतिस्तस्य, राज्ञीनां शतपंचकं ॥ १३ ॥ जयश्रीरग्रिमा ( रत्तिमा ) तत्र, चत्वारः संति तत्सुताः । जयश्च विजयश्चैवा—पराजयजयंतकौ ॥ १४ ॥ कोटिसंख्यैर्भटैरश्वै—र्दशलक्षमितैस्तथा । यशोधवलमुख्यैश्च, सहस्रैर्दशभिर्गजैः ॥ १५ ॥ तावद्भिः स्यंदनैस्तूर्यैः, करभैश्च ध्वजैश्वरैः । मामंतैर्मंत्रिभिर्लोकैः, श्रीमान् राज्यं करोति सः ॥१६॥ युग्मं ॥ एकदा पर्षदि क्ष्मापो, व्यवसायार्थमागतं । श्रेष्ठिनं वरदत्ताख्यं, पप्रच्छ वसतिः क्व ते ॥ १७ ॥ ईदृगस्मादपूर्वं वा, पुरमन्यच्चया क्वचित् । दृष्टं चेति ततो भूपं, नत्वा सार्थेश्वरोऽब्रवीत् ॥१८॥ संति देव ! त्वदाज्ञायां, नगराणि बहून्यपि । परं दीपशिखा-नाम्नी, पुर्यस्तींद्रपुरीसमा ॥ १९ ॥ चैत्यप्राकारसौधाद्यै—र्नान्येदृशी महीतले । यस्या मध्ये चतुर्द्वारः, प्रासादः प्रथमेशितुः

१ कोंसे निहितः पाठः पुराणलिखितप्रतिसंबन्धी ज्ञेयः, एवं सर्वत्र बोध्यम् ।

|| २० || तच्चतुर्द्वारमारभ्य, हट्ट ( गृह ) श्रेण्यश्चतुर्दिशि ( शं )। प्रतोलिकाश्चतस्रश्च, संति तद्वारसंमुखं || २१ || ईशान्यां
राजवर्गीया, आग्नेय्यां व्यवहारिणः। वायव्यां क्षत्रियाः सर्वे, नैर्ऋत्यामितरे जनाः || २२ || यस्या बहिर्देपदर्द्धं, बृहत्पद्मसरोवरं
( सरः सरः )। वापीकूपप्रपोद्यान–मुख्यं चापि महाद्भुतं ||२३|| तेन देव ! विलोक्यास्ति, सा तस्यां च वसाम्यहं। तस्येमां
वाचमाकर्ण्य, भूमान् विस्मितमानसः || २४ || तत्पुरीदर्शनोत्कंठा–प्रेरितः पृतनान्वितः। प्रधानमंत्रि (मति) राजेन, प्रोत्सा-
हितस्ततोऽचलत् || २५ || युग्मं || प्रयाणसमये तस्य, प्राप वातोऽनुकूलतां। दिशोऽपि जज्ञिरे शांता, विहगाश्चाभवन् शुभाः
|| २६ || एकदा गच्छतो मार्गे, प्रतिहारेण सूचिताः। चत्वारः सुभटा राज्ञः, सेवायै प्रापुरंतिकं || २७ || नरेंद्रः प्राह विज्ञानं,
विद्यते भवतां किमु ?। ऊचुः क्रमेण ते सर्वे, स्वस्वकर्मप्रवीणतां || २८ || विहगानां स्वरज्ञानं १, स्वामिचित्तोपलक्षिता २।
नरस्त्रीलक्षणज्ञानं ३, रथस्य भ्रामरीकला४ || २९ || इत्येता नः कलाः संति, गुरुदासां गुणंधरः। अथ श्रीक्रमसेवार्थं, प्राप्ताः-
स्मोऽन्नाधुना वयं ||३०|| मानं दत्त्वा नृपेणापि, ग्रासं तच्चित्तचिंतितं। हर्षाद्विधाय ते सर्वे, चक्रिरे स्वसमीपगाः ||३१|| यतः—
आहारनिद्राभयमैथुनानि, तुल्यानि सार्धं पशुभिर्नराणां। ज्ञानं विशेषः खलु मानुषाणां, ज्ञानेन हीनाः पशवो मनुष्याः ।१।
ततो भूमिपतिर्मार्गे, क्रीडां कुर्वन्निजेच्छया। निम्नगोद्यानकासार–वाप्यादिषु पदे पदे || ३२ || नृपलोककृतानेक–ढौक-
नानि यथोचितं। स्वीकुर्वंस्तेषु सन्मानं, यच्छन् दानं ददन्नृषु || ३३ || विलोकयन्ननल्पानि, कौतुकानि क्रमेण सः। पुरीं
दीपशिखां प्राप, श्रुतश्च विहगस्वरः ||३४|| त्रिभिर्विशेषकं || सुस्निग्धलाभो भविता, ह्यनेनात्र न संशयः। स्वरज्ञेनेति विज्ञप्तो,
गुणो दृष्टः स्वचेतसि ||३५|| इतश्च तत्प्रभुर्भूपो ( भूभुग् ), दीप (प्र) चंद्रो ननाम तं। पादावधार्यतां देव !, पुर्यंतरिति चोक्त-

धपद्धतिवान् ॥ ३६ ॥ यावत्पद्मसरःपाल्यां, स्वैरं तिष्ठति भूमिपः । तावद्ददर्श पुर्यंत–श्चित्रकृत्सौ ( पुर्यंतः, स तस्मिन् सौ ) ॥ ३७ ॥ प्रविवेश पुरीं द्रष्टुं, समं तेन स सर्वतः । विलोकयन् प्रतोल्यादि, हट्टालीस्तोरणानि च ॥ ३८ ॥ सप्तभौमिकसौधाना–मुधद्गवाक्षमालिकां । राजमार्गे दृशा भूमानं, पवित्रयन्नितस्ततः ॥ ३९ ॥ वातायने ददर्शैका–मेकस्मिन् सुमुखीं कनीं । तन्मनो भृंगरत्तस्याः, पपात मुखपंकजे ॥ ४० ॥ त्रिभिर्विशेषकं ॥ तदैव स्मरभिल्लेन, शरैर्विद्धो हृदंतरा । स क्षणं शून्यवत्तस्थौ, योगींद्र इव सल्लयात् ॥ ४१ ॥ इतश्चित्तज्ञस्तद्भावं, ज्ञात्वा विज्ञसवानिदं । पृथ्वीप ! तव पुण्यौघै–र्भाव्येतदपि वांछितं ॥ ४२ ॥ चमत्कृतो नृपः प्राह, साध्वेवावगतं त्वया । कस्यैतद्भवनं भद्र !, कैषा च सुमुखी वद ॥ ४३ ॥ स आह तव भक्तस्य, दीपचंद्रमहीपतेः । राज्याः प्रदीपवत्याश्च, सदनं नवभूमिकं ॥ ४४ ॥ एषा तत्कुक्षिकासार–कलहंसी मनोहरा । नाम्ना सूर्यवती पुत्री, कुमारी रूपसेवधिः ॥ ४५ ॥ अन्यच्च दीपचंद्रस्य, चिंता चेतसि वर्तते । कैः कैः प्राभृतिकैरेष, प्रभुः संतोषमाप्स्यति ? ॥ ४६ ॥ अन्याऽग्रेऽप्यभवच्चिंता, देयैषा कस्य कन्यका । कुलरूपबलैश्वर्य–गुणैर्युक्तोऽस्ति को भुवि ? ॥ ४७ ॥ इति चिंतयतस्तस्यै–तद्वार्ताज्ञापनं हि यत् । इष्टं वैद्योपदिष्टं तद्, दुग्धे तु शर्करागमः ॥ ४८ ॥ रूपेण सुरतुल्यस्त्वं, तादृश्येषा कुमार्यपि । देवायं युवयोर्योग–श्चंद्रिकाचंद्रवन्ननु ॥ ४९ ॥ दृक्पुटेन कुमार्यापि, तथा पीतं पुनः पुनः । नृपरूपामृतं सा हि, यथाप निर्निमेषतां ॥ ५० ॥ ततस्त्रिकं चतुष्कं च, विलोक्य सकलं पुरं । सोऽर्हच्चैत्ये युगादीशं, नत्वागो राजसद्मनि ॥ ५१ ॥ वीक्षमाणो विना चित्तं, तद्राजास्थानमंडपे । रम्यसिंहासनासीनः, सभाशोभामपूरयत् ॥ ५२ ॥ चित्तज्ञपुरुषस्याथ, युक्तोक्तैर्वचनैस्तु तैः । दीपचंद्रो भृशं हृष्टः, केकीव घनगर्जितैः ॥ ५३ ॥ ततः प्रतापसिंहस्य, कन्याकरग्रहाग्रहं । कृत्वोत्सवैः सुतोद्वाहं, चकार विस्तरेण सः ॥ ५४ ॥

इतः सामुद्रिकज्ञेन, कनीं दृष्ट्वा सुलक्षणां । विज्ञप्तो भूधवः स्वामिन् !, पट्टयोग्येयमद्भुता ॥ ५५ ॥ भर्तृश्वशुरयोर्मूर्ध्नि, पितुः
पितामहस्य च । मातामहस्य च छत्रं ( मातामहस्याविच्छिन्नं ) स्यादस्याः पुत्रपौत्रयोः (?) ॥ ५६ ॥ योग्येयं ( योगोऽयं )
लाभकृच्चास्याः, कुक्षौ तनययुग्मकं ( यामलं ) । चिंतारत्नं च रत्नं च, रत्नभूमाविवास्ति यत् ॥ ५७ ॥ ततो हृष्टेन भूपेन,
गुणरूपातिरेकतः । शुद्धांतेषु तदा पट्ट-देवी सूर्यवती कृता ॥ ५८ ॥ अहो भाग्यमहो रूप-महो सौभाग्यमद्भुतं । लोकैरुक्त-
मभूदस्या, धर्मद्रुमः फलेग्रहिः ॥ ५९ ॥

इतश्च दीपचंद्रस्य, राज्ञः सिंहपुरात्पुरात् । भ्रातृजायाश्चंद्रवत्याः, पत्युर्दूतः समायशौ ॥ ६० ॥ तं दूतं स समादाय,
प्रतापसिंहभूभुजः । पुर एव हि तत्रत्यं, तत्स्वरूपमवीवदत् ॥ ६१ ॥ तथाहि—देव ! वासुतिका नाम, विद्यतेऽत्र महाटवी ।
तस्यां पल्लीपतिः शूरो, दुर्जयोऽखिलभूभुजां ॥६२॥ तस्याः पश्चिमदिग्भागे, रम्यं सिंहपुरं वरं । भूभर्ता सुभगांगोऽस्ति, तत्र चंद्र-
वतीपतिः ॥ ६३ ॥ एकदा तस्करैः कैश्चि-त्प्रविश्य नृपसद्मनि । राज्ञ्या एकावलीहारं, लात्वा चक्रे पलायनं ॥ ६४ ॥ आर-
क्षकनरैः पादान्, विलोक्यानुगतैस्ततः । दृष्टा (ष्ट्वा) बद्धाश्च ते नीताः, प्रभुपार्श्वे च सत्वरं ॥ ६५ ॥ पार्थिवेन ततः सर्वे, ताडितास्ते
जगुर्वयं । शूरपल्लीपतेर्भिल्ला-स्तदादेशादिहागताः ॥६६॥ श्रुत्वेति सुभगांगेन, लात्वा हारं तदंतिकात् । रुषादिष्टस्तलारक्षो,
व्यधात्तच्चौरनिग्रहं ॥ ६७ ॥ ज्ञात्वा व्यतिकरं चैत-त्तेन पल्लीमहीभुजा । रोषेण सहसागत्य, रुरुधे तत्पुरं हठात् ॥ ६८ ॥
अतः संप्रति दूतं मां, स प्रैषीदिह वेगतः । अत्र किंकार्यतादक्षः, त्वमेव वर्तसे प्रभुः ॥६९॥ अत्रांतरे दीपचंद्रो-ऽब्रवीन्नृदेव !
निश्चितं । विग्र(शो)लोगम्य दुष्टस्य, भयात्पुरीयमप्यलं ॥ ६९ ॥ व्यवसायो न कैर्लोकैः, शक्यते कर्तुमिच्छया । पंथानोऽपि

भयेनास्य, दुर्गमा इव जज्ञिरे ॥ ७० ॥ निशम्येति तयोर्वाचः, कुंभिनादानिव स्फुटं । केसरीव प्रजापाल-स्तच्छिक्षायै समुद्यौ ॥ ७१ ॥ ताडयित्वा प्रयाणस्य, भेरीं स च चमूधृतः । चचाल शूरभिल्लेशो-परि शीघ्रप्रयाणकैः ॥ ७२ ॥ ययौ सिंहपुरागम्र-प्रदेशे निम्नगातटे । भृत्यान् वस्त्रपटावास-करणे स समादिशत् ॥ ७३ ॥ ज्ञात्वा भूपेन भिल्लेश-सैन्येयत्तां चरैस्तदा । मंत्र्येव मंत्रमालोच्य, सज्जीचक्रे निजा चमूः ॥ ७४ ॥

इतस्तत्सैन्यमालोक्य, भिल्लैर्ज्ञापि शूरराट् । स्वामिन् ! प्रतापसिंहोऽय-मागारकुशस्थलेश्वरः ॥७५॥ वृद्धभिल्लांस्ततोऽपृच्छ-त्पल्लीशः किं करिष्यते । ते प्राहुर्नश्यते देव !, बलीयान्नृपकेसरी ॥७६॥ पुनः स आह भो वृद्धा !, नंष्ट्वा स्थाने क्व गम्यते ? । तन्न किंचिदगम्यं य-द्यमस्येवास्य भूभुजः ॥ ७७ ॥ तूष्णीं स्थितेषु सर्वेषु, किंचिद्विमृश्य चेतसि । प्रवरं गंधहस्तींद्र-मारुरोह स भिल्लपः ॥ ७८ ॥ समं स्वपरिवारेणाप, रणक्षेत्रं स्यादसौ । इतः प्रतापसिंहोऽपि, तं वीक्ष्य तत्र चागमत् ॥ ७९ ॥ यावत्स्वकटकं दृष्ट्वा, विलोकयति तावता । निद्रायमाणान् सोऽद्राक्षी-न्निर्मदानखिलान् गजान् ॥ ८० ॥ किमेतदिति संपृष्टे, नृपेण दीपचंद्रराट् । जगौ नेतरयं पट्ट-हस्ती गंधगजो द्विपः ॥ ८१ ॥ तेन तद्गंधतोऽमी हि, जज्ञिरे निर्मदा इभाः । श्रुत्वेति चिंतयामास, राजा किमधुनोचितं ? ॥ ८२ ॥ तदा पुमान् स विज्ञप्ति-मकरोद्रथखेटकः । आरु( रो )ह स्वरथं देव !, विलोकय कलां तु मे ॥ ८३ ॥ ततः कोदंडमादाय, रथमारुह्य पार्थिवः । अरिं समभिगम्यास्था-द्यावद् दुष्टः स धावति ॥ ८४ ॥ तावत्तन्नागमभितः, सूतेन भ्रामिते रथे । भूपः शरैः करींद्रस्थं, जघान शूरभिल्लपं ॥ ८५ ॥ युग्मं ॥ गिरेः शृंगमिवोत्तुंगं, पातयित्वा गजाद्रिपुं । जीवंतं नृपतिः काष्ठ-पंजरे तमचिक्षिपत् ॥ ८६ ॥ तं श्रीजयकलशाख्य-मपूर्वं गंधहस्तिनं । स्वीचक्रे

च ततो भिल्लै-रन्यैः सर्वैः पलायितं ॥ ८७ ॥ तदा जयजयाराव, उच्चचाल समंततः । सुभगांगः पुरादेत्य, ननाम तं नरो-
त्तमं ॥ ८८ ॥ तस्मै दत्वातिसन्मानं, सार्थं लात्वा च भूपराट् । ततस्तस्यामटव्यां स, ययौ पल्लीं ललौ च तां ॥ ८९ ॥ लुंट-
यित्वा स्वभृत्यैस्ता-मेकं मौक्तिकमूट (ढ) कं । षट्पंचाशत्स्वर्णकोटीः, स्वकोशेऽन्यच्च सोऽक्षिपत् ॥ ९० ॥ शेषं धनं विभ-
ज्याथ, सोऽदाद् भूधवयोस्तयोः । पट्टकूलादिवस्तूनि, भटानां च यथाक्रमं ॥ ९१ ॥ ततो हृष्टो नृपोऽवादी-द्भोः चत्वारोऽप्यमी
नराः । प्राप्ता मम परीक्षायां, सत्याः स्वस्वकलागुणैः ॥ ९२ ॥ यन्मेऽत्राभून्महालाभ-श्चेतोऽप्यवगतं तदा । कन्या फलवती
चापि, जयश्च रथखेटनात् ॥ ९३ ॥ अहो ज्ञानमहो बुद्धि-रहो शास्त्रपरिश्रमः । अहो कलाविदग्धत्वं, तानाहूय शशंस सः
॥ ९४ ॥ महाप्रसाददानैश्च, तान् सन्मान्य पृथक्पृथक् । तत्र सूर्यवतीनाम्ना, पुरं सूर्यपुराभिधं ॥ ९५ ॥ स्थापयित्वा तयो
राज्ञोः, समर्प्य कियतीं भुवं । काश्यपीशस्ततः सिंह-पुरे पुनः समभ्यगात् ॥ ९६ ॥ युग्मं ॥ विलोक्य नगरं तस्मा-त्सोऽचल-
द्विससर्ज च । सुभगांगनृपं प्राप्तः, क्रमाद्दीपशिखां पुरीं ॥ ९७ ॥ दिनानि कतिचित्स्थित्वा, पुरस्तस्याश्चचाल सः । लात्वा
सूर्यवतीं देवीं, सैंध्यादिसखीसंयुतां ( च सैंध्यादिसखीयुतां ) ॥ ९८ ॥ पुरीजनयुतं दीप-चंद्रं स्थापितवान्नृपः । शिक्षां
कुलांगनायोग्यां, पुत्र्याः प्रदाय सांजसं ॥ ९९ ॥ ववले साऽश्रुनीरार्द्र-नेत्रा प्रदीपवत्यपि । ततः स्तोकैर्दिनैराप, राजा कुशस्थलं
पुरं ॥ १०० ॥ युग्मं ॥ महोत्सवैस्तदा नाना-विधैः शृंगारिते पुरे । प्रतापसिंहः पृथ्वीशः, प्रविवेश शुभेऽहनि ॥ १ ॥ समं
ताभिः स्वराज्ञीभि-र्भोगान् मानुष्यकान् नृपः । भोक्तुं लग्नः सुखेनोच्चैः, प्राच्यपुण्यप्रसादतः ॥ २ ॥ यतः—

धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ।

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ३ ॥ इत्यादि ॥

अथान्यदा सुता राज्ञ–श्चत्वारोऽपि जयादयः । जयावासे गवाक्षस्थाः, संति क्रीडंत (ति) इच्छया ॥ ४ ॥ तदा राजपथे लोकान्, बहूनेकत्र संस्थितान् । दृष्ट्वा तैर्भोः किमित्येत–त्पृष्टाः स्वसेवका जगुः ॥ ५ ॥ क्षितिपालांगजन्मानः, कोऽपि नैमित्तिकोऽधुना । पुरेऽस्मिन्नागतोऽस्त्यत्र, सोऽयं पुरजनैर्वृतः ॥ ६ ॥ कौतुकेन कुमारैस्तै–राकारितो निजैर्भटैः । तत्रायया निमित्तज्ञ, आशीर्वादपरायणः ॥ ७ ॥ उचितप्रतिपत्त्या ते–रादिष्टः स उपाविशत् । तस्मिन् सुखासनासीने, कुमारैः पृच्छ्यते स सः ॥८॥ कस्त्वमागाः कुतो भद्र, कुत्र गंतासि वेत्सि किं । इति पृष्टेऽत्र कालज्ञो–ऽवादीद्भो नृपनंदनाः ॥ ९ ॥ शृणुतात्र समस्तीनः, पश्चिमाशास्यमंडनं । पुरं सिंहपुरं नाम, धर्मलक्ष्मीमनोहरं ॥ १० ॥ तत्रास्ति सुभगास्येंदुः, सुभगांगो नराधिपः । तस्मिन् बभूव वित्ताढ्यो, गणकः श्रीधराभिधः ॥ ११ ॥ तस्याभून्नागिलानाम्नी, वल्लभा प्राणवल्लभा । धरणस्तु तयोः पुत्रः, प्राप्तस्तरुणतां क्रमात् ॥ १२ ॥ इतस्तत्पुरवास्तव्यो, गणकोऽस्ति प्रियंकरः । भार्या शीलवती तस्य, श्रीदेवी तनया तयोः ॥ १३ ॥ सा क्रमाद्यौवनं प्राप्ता, रूपलावण्यशालिनी । कलाकुशलिनी जैन–धर्मे रता विशेषतः ॥ १४ ॥ तां कनीं मार्गयित्वा च, श्रीधरः समहोत्सवं । विशुद्धेऽह्नि निजं पुत्रं, धरणं पर्यणाययत् ॥१५॥ सा सुता (मती) सुविशुद्धास्या, लज्जानतमुखी च सा । सार्हद्धर्मक्रियासक्ता, सानिशं मित (सत्य) भाषिणी ॥१६॥ परं सा नागिला श्वश्रू–स्तस्या निष्ठुरभाषिणी । अहर्निशमभूत्सर्वकर्मकर्या अपि ध्रुवं ॥१७॥ वहमानेऽप्यहेऽपि, खटत्कारविधायिनी । काष्ठयष्टिर्यथा कूपे, तथा तस्यास्तु साभवत् ॥१८॥ यतः–

शय्योत्पाटनगेहमार्जनपयःपावित्र्यचुल्लीक्रिया, स्थालीक्षालनधान्यपेषणभिदा गोदोहतन्मंथने ।

डिंभानां परिवेषणादि च तथा पात्रादिशौचक्रिया, श्वश्रूभर्तृननांददेवृविनयैः कष्टं वधूर्जीवति ॥ १९ ॥

नित्यं सा जिनवाग्भक्ता, पितृभ्यां प्रातिवेश्मिकैः । शं तवास्तीति पृष्टेऽपि, चार्वेव तद्गृहं जगौ ॥२०॥ किं च ममचिन्ह्रादि, दर्शयित्वा च नागिला । सुतं रोषाकुलीचक्रे, रुष्टस्तां कुट्टयत्यसौ ॥ २१ ॥ तथापि सा कुलोत्पन्ना, न तस्या दूषणं ददौ । प्राक्कर्मणां विपाको ही, ममायमिति चिंतयेत् ॥ २२ ॥एवं कियत्सु यातेषु, दिनेषु तद्गृहांतरा । पतितं विस्मृतं चापि, श्वशुरस्यांगुलीयकं ॥ २३ ॥ ततः प्रातस्तया वध्वा, प्रमार्ज्य प्रचयीकृते । पुंजके मुद्रिका लेभे, मुक्ता चांतर्गृहालये ॥ २४ ॥ इतस्ततस्मृतिसद्भावे, श्रष्टुं लग्नाश्च ते मिथः । दृष्टास्ति केनचिन्मुद्रा, विलोकितापि नाप सा ॥ २५ ॥ गोमयार्थं वधूः सा च, गतासीत्पशुवाटके । तदा तत्रागताथोपी–द्रुतंव ॥ गतैव सा ॥ २६ ॥ तत् श्रुते सहसा गत्वा, तामादाय तदालयात् । ददौ श्वशुरवर्गस्य, करे हृष्टास्ततोऽखिलाः ॥२७॥ अस्मिन् व्यतिकरे ज्ञाते, श्वश्रूस्तच्छिद्रमासदत् । हुं हुमस्तीदृशी यत्र, वधूरूपेण तस्करी ॥ २८ ॥ गमनात्सर्ववस्तूनां, कथं स्थास्यति मद्गृहं । विलोकयत भो लोका, गृहस्याचरणानि नः ॥ २९ ॥ युग्मं ॥ एषा यदीदृशी दारा ( सदेदृशाचारा ), कः शृणोत्यत्र मद्वचः । सर्वस्यापि गृहे चास्ति, वधूः कुत्रापि नेदृशी ॥ ३० ॥ अहो एतन्नूहृदो दार्ढ्यं, चोरिता पूज्यमुद्रिका । वाढं गाढस्वरेणैव, तथा प्रेक्षणकं कृतं ॥ ३१ ॥ इतो गृहागतं पुत्रं, सर्वमश्रावयच्च सा । अहो सुकुलजा पत्नी, गृहे तवैव नंदति ॥ ३२ ॥ श्रुते व्यतिकरे तस्मिं–स्तयोदिते यथा तथा । धरणः स रुषा सम्यगविचार्य च तां सतीं ॥ ३३ ॥ जघान लकुटेनोच्चै–स्तच्छिरः स्फुटितं ततः । पपात सा रयाद् भूमौ, जल्पंत्यर्हन्नमस्क्रियां ॥ ३४ ॥ युग्मं ॥ ततो रक्तप्रवाहश्च, निःसृतो मूर्च्छितापि सा । हा हा हेत्युच्चरद्भिस्तै–रौषधादिक्रिया कृता ॥ ३५ ॥ केनापि

तत्र तत्पित्रो-स्तत्स्वरूपेऽवबोधिते । तावप्याजग्मतुः शीघ्रं, शिरःकुट्टनपूर्वकं ॥ ३६ ॥ हा वत्से किमिदं जातं, भ्रमनं (भ्रमणं) तव नेत्रयोः । विलोक्य मदास्यं त्व, लात्वांके रुरुदेंबया ॥ ३७ ॥ हा पुत्रि तव वाक्यानि, कानि कानि स्मराम्यहं । मातर्मातरिति प्राज्ञा, कथयिष्यति का पुनः ॥ ३८ ॥ हा सुते वस्तु तचत्वां, विना का मार्गयिष्यति । तैस्तैः क्रीडनकैर्भद्रे, खेलनं का करिष्यति ॥ ३९ ॥ हा नंदिनि लघुत्वेऽपि, न ते सन्मुखभाषणं । पित्राद्यालापितापि त्वं, लज्जया न स्फुटोत्तरा ॥ ४० ॥ उपालंभोऽपि नो कस्य, रुदनं न मुखे तथा । शिक्षायां मुखवक्रत्वं, न हि मुग्धे तवैकदा ॥ ४१ ॥ सा क्रिया सार्हती पूजा, साप्यभिग्रहधारिता । तत्तपो विरतिः सापि, त्वय्येवान्यत्र नांगजे ॥ ४२ ॥ हा पुत्रि किं स्थितेति त्वं, मातुर्देहेकमुत्तर । ईदृशं मे सुतारत्नं, विधातापि न मासहिः ॥ ४३ ॥ विललाप पिताप्येवं, भर्तापि धरणोऽरुदत् । अविमृश्य कृतं रोपा-त्किं हा पापात्मना मया ॥ ४४ ॥ अस्या असति दोषेऽपि, मन्निष्ठुरप्रहारतः । यायी कदापि जीवश्चे-द्धत्याकृत्तदहं ननु ॥ ४५ ॥ धिक्कृता नागिला लोकैः, मदैषा कूटभाषिणी । मरयैषा छुटिता मृत्वा, मंडूकीग्राहिवक्त्रतः ॥ ४६ ॥ एवं वदत्सु लोकेषु, तद्भाग्येन कुतोऽप्यथ । वैद्यः कोऽप्याययौ तत्र, मंत्रांभसा सिषेच तां ॥ ४७ ॥ मनागवाप्तचैतन्या, बहुवारांबुसेकतः । स तत्स्वरूपमालोक्य, धर्मौषधमकारयत् ॥ ४८ ॥

इतोऽथ सा पितृभ्यां स्व-गृहे नीता सुसाधुतः । सावधानतया सर्वं, श्रद्धे जिनभाषितं ॥ ४९ ॥ कृत्यान्याराधनादीनि, सर्वसत्त्वक्षमापनं । वस्त्वेकपातकस्थान-मोचनं चित्तशोधनं ॥ ५० ॥ पुण्यानुमोदनं सप्त-क्षेत्र्यां स्वधनरोपणं । संघभक्ति नमस्कार-गुणनं च तपःश्रुति ॥५१॥ सद्भावं हन्यमानांगि-मोचनं मयतोज्झनं । सम्यक्त्वानशनब्रह्म-व्रताद्युच्चारणं विधेः ॥५२॥

चतुर्भिः कलापकं ॥ कियत्यपि कृते
विधाय प्रांतकालं सा, साधयामास सुंदरं । तेन पुण्यप्रसादेन, श्रीदेवी प्राप सद्गतिं ॥५३॥ इतस्तत्र जनैर्ज्ञाते, तद्वृत्तांते निराकृतः ।
शोके, सुताशोकं विहाय तौ । धर्मोद्यताविभूतां हि, यद्धर्मात्सुखमंगिनां ॥ ५४ ॥ श्रीधरोऽपि पुरेऽन्यस्मिन्, गत्वा
श्रीधरस्तु न शक्नोति, मुखं दर्शयितुं पुरे ॥ ५५ ॥ पुनः पुरांतरग्रास-कन्यो धरणहेतवे । अत्युद्धतातिरोपा सा, सर्वस्य प्रतिभाषिणी ॥ ५७ ॥
गणकनंदिनीं ॥ ५६ ॥ नाम्ना कामप्युमादेवीं, स्वसुते (तं) पर्यणाययत् । पदे पदे च तेषां त-त्कर्ममर्मप्रकाशिनी ॥५८॥ तया तथा कृता श्वश्रूर्यथा
युक्तं ॥ सा हठाद् गृहकर्माणि, करोति नैव कान्यपि । कालेनाथ श्वशुरयो-र्मृतयोः साथ वल्लभं । धरणं
कर्मकरी स्वयं । भयेन तद्वशा साभू-द्व्याघ्या अग्रे यथा त्वजा ॥ ५९ ॥ सोऽप्यार्हतो हितं प्राह, सखे सत्यमिदं
स्ववशीचक्रे, मायया भक्तियुक्तितः ॥ ६० ॥ सोऽभूत्प्रियागुणग्राही, सोमदेवसुहृत्पुरः । कर्मांते दासभृत्याश्च, पुत्रा नैव मृताः स्त्रियः ॥ १ ॥
परं ॥ ६१ ॥ यतः-प्रत्यक्षे गुरवः स्तुत्याः, परोक्षे मित्रबांधवाः । मनोऽन्यच्च वचोऽप्यन्य-
निस्त्रिंशयत्सुनिस्त्रिंशा, कुटिला मृगशृंगवत् । नदीवन्नीचगा नारी, वज्रवत्कठिना हृदि ॥ ६२ ॥ धरणेन किमित्येत-त्पृष्टे पुनः सखाह
घत्क्रियान्नैव दृश्यते । तदस्याः कः प्रिये स्नेहः, किं व्याख्यासि च मुग्धतां ॥ ६३ ॥ ग्रामांतरमिपाद्रात्रौ,
सः । त्वत्पत्नी मित्र जाने यद्, गृहे तिष्ठति नैकदा ॥ ६४ ॥ तन्मायाचरणैरेषां-तःस्नेहा नैव भाविनी । रागी सोऽगात्सुहृद्गृहे ॥६६॥
विधेहि तत्परीक्षणं ॥ ६५ ॥ ओमित्युक्त्वा ततस्तेन (?), गृहे गत्वातिकष्टतः । तस्या आदेशमादाय, चौरवत् ॥ ६७ ॥ दत्त्वा तथैव तद्द्वारं,
इतोऽन्यत्र क्वचित्तस्यां, गतायां रजनीमुखे । मित्रोक्त्या निजगेहांत-रुपर्यस्थात्स चौरवत् ॥ ६७ ॥ दत्त्वा तथैव तद्द्वारं,
सखागात्स्वगृहे ततः । उमा क्षणांतरे तत्र, कुतोऽप्यागात्समुत्सुका ॥ ६८ ॥ निर्मंसे च विशेषान्न-पाकं तल्पक्रियादि च ।

तत्र तत्पित्रो-स्तत्स्वरूपेऽवबोधिते । तावप्याजग्मतुः शीघ्रं, शिरःकुट्टनपूर्वकं ।। ३६ ।। हा वत्से किमिदं जातं, भाग्यं (भ्रमणं) तव नेत्रयोः । विलोकय मदास्यं त्वं, लात्वांके रुदंतया ।। ३७ ।। हा पुत्रि तव वाक्यानि, कानि कानि स्मराम्यहं । मातर्मातरिति भाषा, कथयिष्यति का पुनः ।। ३८ ।। हा सुते वस्तु तत्त्वां, विना का मार्गयिष्यति । तैस्तैः क्रीडनकैर्भद्रे, खेलनं का करिष्यति ।। ३९ ।। हा नंदिनि लघुत्वेऽपि, न ते सन्मुखभाषणं । पित्राद्यालापितापि त्वं, लज्जया न स्फुटोत्तरा ।। ४० ।। उपालंभोऽपि नो कस्य, रुदनं न सुखे तथा । शिक्षायां मुखवक्रत्वं, न हि मुग्धे तवैकदा ।। ४१ ।। सा क्रिया सार्हती पूजा, साप्यभिग्रहधारिता । तत्पो विरतिः सापि, त्वय्येवान्यत्र नांगजे ।। ४२ ।। हा पुत्रि किं स्थितेति त्वं, मातुर्देहैकमुत्तरं । ईदृशं मे सुतारत्नं, विधातापि न मासहिः ।। ४३ ।। विललाप पिताप्येवं, भर्त्तापि धरणोऽरुदत् । अविमृश्य कृतं रोषा-त्किं हा पापात्मना मया ।। ४४ ।। अस्या अमति दोषेऽपि, मन्निष्ठुरप्रहारतः । यायी कदापि जीवश्चे-द्धत्याकृत्तदहं ननु ।। ४५ ।। धिग्कृता नागिला लोकैः, मदैषा कूटभाषिणी । मत्यैषा छुटिता मृत्वा, मंडूकीवाहिवक्त्रतः ।। ४६ ।। एवं वदत्सु लोकेषु, तद्भाग्येन कुतोऽप्यथ । वैद्यः कोऽप्यायथौ तत्र, मंत्रांभसा सिषेच तां ।। ४७ ।। मनागवाप्तचैतन्या, बहुधारांबुसेकतः । स तत्स्वरूपमालोक्य, धर्मौषधमकारयत् ।। ४८ ।।

इतोऽथ सा पितृभ्यां स्व-गृहे नीता सुभायुतः । सावधानतया सर्वं, श्रद्दधे जिनभाषितं ।। ४९ ।। कृत्यान्याराधनादीनि, सर्वसत्त्वक्षमापनं । वस्त्वेकपातकस्थान-मोचनं चित्तशोधनं ।। ५० ।। पुण्यानुमोदनं सप्त-क्षेत्र्यां स्वधनरोपणं । संघभक्ति नमस्कार-गुणनं च तपःश्रुति ।।५१।। सद्भावं हन्यमानांगि-मोचनं ममतोज्झनं । सम्यक्त्वानशनव्रत-व्रताद्युच्चारणं विधेः ।।५२।।

वशीकृतो
विससर्ज तां। यांत्या तयांजलिं कृत्वा, वश्यचूर्णं ततोऽ(द)र्थितं ॥८६॥ साह प्रागर्पितं चूर्णं, तत्कागादंब तेन ना। वशीकृतो
मृतः सोऽद्य, तद्योगिन्या समर्पितं ॥८७॥ ततः प्रणम्य तां भक्त्या, सा तथैवागतालये। घरणोऽप्येवमस्यास्तद्, दृष्ट्वा श्रुत्वा
च भीतवान् ॥८८॥ भयाश्चर्यरसौ रौद्र–रसेन सह तद्धृदि। वीरशोकौ च बीभत्स–रसयुक्तौ बभूवतुः ॥८९॥ विहाय हास्यशृं-
गारौ, स शांतरसमाश्रवान्। धिगेनां कुटिलां माया–विनीं दुश्चारिणीमिति ॥९०॥ अचिंतयच्च वश्यर्थं, चूर्णेनाहं वशीकृतः।
कथमन्यत्र यास्यामि, शृंखलाबद्धगौरिव ॥९१॥ विमृश्येति सुहृद्गेहे, गतः पृष्टश्च तेन सः। प्रियाव्यतिकरं सर्वं, यथा जातं
जगौ तदा ॥९२॥ सखाह मित्र! किं दुःखैः, किं निंदाभिर्भयेन किं। स्वभावचपला नार्यः, कर्मणां गतिरीदृशी ॥९३॥ यतः–
रविचरियं गहचरियं, ताराचरियं च राहु ( चंद ) चरियं च। जाणंति बुद्धिमंता, महिलाचरियं न याणंति ॥९४॥
जलमज्झे मच्छपयं, आकासे पंखियाण पयपंती। महिलाण हियमग्गो, तिण्णिवि लोए न दीसंति ॥१॥
अथ त्वं किमु कर्तासि, स आह गद्गदस्वरः। तदास्यमविलोक्यैव, गंता देशांतरे क्वचित् ॥९५॥ हत्याख्यां पातकीभूतः,
कर्तास्मि प्राणमोचनं। मित्रैवं ननु मा कार्षी–र्धनं गृह्ण (?) निजाद् गृहात् ॥९६॥ भाविनी स्वेन सोन्मत्ता, दुग्धेनेव च
सर्पिणी। क्वचिद्गच्छ गुरोर्वाक्या–त्तत्प्रायश्चित्तमाचर ॥९७॥ युग्मं ॥ ततः सुहृद्गिरा सोऽपि, प्रातः प्राप्तः स्वसद्मनि। पादा-
वधार्यतां नाथ!, सोत्तस्थौ गुरुसंभ्रमात् ॥९८॥ कुर्वती कृत्रिमस्नेह–मनिष्टा तस्य साभवत्। घातस्येव मनस्तृप्त्यै, कथिता
क्षिप्रमेव हि ( घातस्य वमनोत्पत्तौ, क्व ( कु )थिता क्षिप्रकेन हि ) ॥९९॥
इतश्च रणधीरं तं, कूपान्निष्कासितं तदा। जनैर्दृष्ट्वा हहा चक्रे, पत्यग्रे चोमयापि हि ॥२००॥ ततस्तेन निजां लक्ष्मी–

तदा स्वमुखमाच्छाद्य, कोऽप्यागात्तद्गृहे पुमान् ॥६९॥ विस्मयाद्धरणेनापि, कोऽयमित्यवलोकितः । आः पाप्मा रणधीरोऽयं, धनियो मद्गृहे कथं ॥ ७० ॥ ततस्तया गृहद्वारं, दत्त्वा स प्रीणितो भृशं । स्नानान्नपानविधिना, रंत्वा सुप्तौ च तत्र तौ ॥ ७१ ॥ तथाविधौ च तौ दृष्ट्वा, रोषात्सोऽथः समाययौ । द्वावेतौ हन्मि नवरं, स्त्रीहत्योऽहं यदग्रतः ॥ ७२ ॥ विमृश्येति तलारक्ष-सुतस्तेन हतोऽसिना । द्वारमुद्घाट्य तत्रैव, सोऽस्थादथात्र (दधात्र) भावि किं ॥ ७३ ॥

इतस्तत्कंठरक्तौघ-शैत्यात्सुप्तोत्थिता तु सा । हा हा हा किमिदं जातं, हतोऽयं केनचिन्मृतः ॥७४॥ द्वारमुद्घाटितं दृष्ट्वा, नन्वयं मारितोऽरिणा । तं च खड्गादिसामग्री-युतं बबंध वाससा ॥ ७५ ॥ शिरस्याधाय सा गेहा-न्निर्ययौ धरणोऽप्यनु । क्वचित्कूपे स्यारमोज्झ्य, सा तथैवाययौ गृहे ॥७६॥ धरणोऽपि गृहद्वारा-द्बहिःस्थोऽचिंतयद् हृदि । अहो क्रौर्यमहो धार्ष्ट्य-महो अस्याः कुकर्मता ॥७७॥ सापि क्षिप्रादिकान्नानि, निक्षिप्य प्रौढभाजने । अररिं सुदृढं दत्त्वा, तच्छात्वा निरगात्पुनः ॥७८॥ सोऽपि कौतुकतश्छन्नं, प्रियापृष्टिस्थितोऽचलत् । सा पुरीजलमार्गेण, बहिर्निर्गत्य निर्भया ॥७९॥ श्मशानमभ्यतिक्रम्या-विश-द्गिरिगुहांतरे । तदंतर्गृहमस्त्येकं, दीपमालामहोयुतं ( महाद्युति ) ॥ ८० ॥ शुभ्रं ॥ तत्रास्ति योगिनीवृंद-वृता सत्पीठिकासिता । विकटा योगिनी नाम्नो-ग्रमुखी खर्परीमुखी ॥ ८१ ॥ ताः सर्वा अपि तां दृष्ट्वा, रे रे उमा समागता । हर्षकोलाहलं चक्रु-स्तद्दत्तान्नातितोषिताः ॥ ८२ ॥ सा तां प्रणम्य पादाग्रे, स्थिता चालापिता तया । भद्रे स साधितो मंत्रः, स्वामिनि त्वत्प्र-सादतः ॥ ८३ ॥ पुनः किं वदसि प्राज्ञे, माहेश्वरि प्रसीद मे । तरूत्पतनविद्यां ता-मर्थये तव शिष्यिणी ॥ ८४ ॥ खर्पर्याह शुभे तर्हि, मम देहि महाबलिं । साह मातर्बलिं भर्तु-र्दास्यामि कृष्णक्(त)त्तिथौ ॥ ८५ ॥ भव्यमित्युक्तवत्येषा, योगिनी

विजहार महीतले ॥ १९ ॥
कियद्दिनानि संसेव्य, तं सिद्धपुरुषं ततः । तदादेशात् पुनः सोऽपि, विजहार महीतले ॥ १९ ॥
वनारण्यगिरिग्राम–कौतुकादि विलोकयन् । एकदाम्रतरुच्छाया–संस्थं साधुं ददर्श सः ॥ २० ॥ भक्त्या ननाम तत्पादौ,
स्वं धन्यं गणयन् स्थितः । धर्माशीःपूर्वकं तेन, चक्रेऽर्हद्धर्मदेशना ॥ २१ ॥ तद्यथा–दुर्गतिप्रसृतान् जंतू–नयं धारयते यतः ।
धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ २२ ॥ अपरं च–नमस्कारसमो मंत्रः, शत्रुंजयसमो गिरिः । प्राणिरक्षासमो
धर्मो, निर्द्वंद्वं भुवनत्रये ॥ २३ ॥ आद्यस्य स्मृतिमात्रेण, प्राणभाजां भवे भवे । विपदो हि विपद्यंते, संपद्यंते च संपदः
॥ २४ ॥ यत्रानंतजिनैः स्पृष्टं, यत्रानंतमहर्षयः । सिद्धिमीयुस्ततश्चैत–त्सिद्धिक्षेत्रमिति स्मृतं ॥ २५ ॥ कृत्वा पापसहस्राणि,
हत्वा जंतुशतानि च । इदं तीर्थं समासाद्य, तिर्यंचोऽपि दिवं गताः ॥ २६ ॥ यथा मम प्रियाः प्राणा–स्तथान्यस्यापि
देहिनः । इति ज्ञात्वा प्रयत्नेन, कार्या प्राणिदया बुधैः ॥ २७ ॥ श्रुत्वेति देशनां साधो–र्धरणो धर्मवन्मनाः । करौ नियोज्य
तत्पापं, प्रकाश्य स्वं निनिंद च ॥ २८ ॥ पूज्यास्म्यहं महापापी, हत्याद्वयश्च कुकर्मकृत् । हत्याभ्यां मम किं भावि, का
गतिश्चैतदुच्यतां ॥ २९ ॥ मुनींद्रः प्राह पुण्यात्मन् !, पापभीरुतयानया । निश्चितं लघुकर्मासि, तपःक्रियोद्यमं कुरु ॥ ३० ॥
गत्वा शत्रुंजये तीर्थे, तपो विधेहि दुष्करं । विधेर्जप नमस्कारान्, हत्याभ्यां मोक्ष्यसे क्षणात् ॥ ३१ ॥ सोंगीकृत्य मुनेर्वाचः,
प्रपद्य धर्ममार्हतं । परोपकारिणो यूय–मेवेति प्रशशंस च ॥ ३२ ॥ ततः प्रणम्य तेनैत–त्प्रायश्चित्तचिकीर्षुणा । तत्तीर्थाभिमुखी-
भूय, हृष्टेन चलता क्रमात् ॥ ३३ ॥ ग्रामं कुशस्थलं नाम, पुरं संप्रति नन्विदं । सोऽहं धरणनामाथ, यास्यामि विमलाचले
॥ ३४ ॥ युग्मं ॥ जाने सिद्धप्रसादेना–तीतं किंचिच्च भाव्यपि । नैमित्तिकोऽयमित्यस्मा–त्सर्वत्राप्युच्यते जनैः ॥ ३५ ॥

मादाय कसनिन्मिषात्। मित्रगेहेऽदनं कृत्वा, निर्गतं नगराद् बहिः ॥ १ ॥ आत्तावधूतवेषः सन्, स बभ्राम पुरात् पुरं । कचिद्ग्रामे प्रपासंस्थं, सोऽद्राक्षीत्सिद्धपूरुषं ॥ २ ॥ गत्वा तत्पादयोर्नत्वो-पविष्टः स तदंतिके । विनयादिगुणैर्युक्तं, तं दृष्ट्वा सिद्धना जगौ ॥ ३ ॥ कस्त्वं भद्रेति पृष्टः स, यथास्थितं तदुक्तवान् । अपरं च कथं हत्या-द्वयं मे यास्यतीत्यपि ॥ ४ ॥ नूनं मुग्धोऽयमत्यर्थं, गुह्यमप्यवदन्मम । विचिंत्येति पुनः प्राह, सिद्धिनिलमन्मते शृणु ॥ ५ ॥ सचितोऽहमपि प्रायो, बुद्धिस्तु स्वच्छचेतमः । का चिंता श्रीमतां भद्र, पुरा मद्गुरुभिर्मम ॥ ६ ॥ संतुष्टैः प्रददे विद्या, सा सुवर्णेन सिद्ध्यति । तद्विना शल्यवच्चिंता, बाधते मम मानसं ॥७॥ युग्मं॥ स आह तत्कियन्मात्रं, स्वर्णमत्र विलोक्यते । अंतःप्रहस्य तेनोक्तं, धीमन् क तत्प्रभो(दो)ऽस्ति मे ॥ ८ ॥ तत्सुवर्णमयं विद्या-सिद्ध्यै मे नरमर्पय । तेनोचे नाथ रत्नानि, संत्यमूनि बहूनि मे ॥ ९ ॥ चल्यतामेभिरासोत्त्या, कार्यते हेमपूरुषः । ततस्तदग्रतः स्वीयां, विद्यां साधय सद्विधेः ॥ १० ॥ ततो हृष्टः पुमान् सिद्ध-स्तदौदार्यादिकैर्गुणैः । अहो अज्ञातपूर्वोऽपि, मयि विश्वासभागयं ॥ ११ ॥ संचिंत्येत्यब्रवीन्मुग्ध, रत्नैर्न मे प्रयोजनं । मया परीक्षितो हि त्वं, संवृण्वेतानि सत्वरं ॥ १२ ॥ यतः-बालेनाचुंबिता नारी, ब्राह्मणस्तृणहंसकः । वने पक्षी सुखं काष्ठे, ग्रामे ऊपरजीवकः ॥ १३ ॥ ग्रामं ग्रामं मयाप्येषा, प्राप्ता चतुष्पदान्विता । गाथाख्या ततो मन्ये, न हि विश्वस्यते कचित् ॥ १४ ॥ किंत्व-सुवर्णपुरुषोऽप्यत्र, न हि हेममयो नरः । किं तु मद्वर्णसंयुक्तो, नरः पात्रं विलोक्यते ॥ १५ ॥ यस्माद्गुरूक्तविद्यां तां, पृच्छत्यासो ददाम्यहं । परं त्वद्विनयाकृष्टः, सद्भाग्याच्चमिहागतः ॥ १६ ॥ शृणु कल्याण विद्यास्ति, मम कर्णपिशाचिका । यया त्रिकालसंबंधि-वस्तु सद् ज्ञायतेऽखिलं ॥ १७ ॥ तत्त्वां गृहाण तेनापि, सा विद्यात्ता सुभक्तितः । कृतश्च तद्विधिः सर्व-स्तस्य सा स्फुरिता स्फुटं ॥ १८ ॥

विजहार महीतले ॥ १९ ॥
कियद्दिनानि संसेव्य, तं सिद्धपुरुषं ततः । तदादेशात् पुनः सोऽपि, विजहार महीतले ॥ १९ ॥ भक्त्या ननाम तत्पादौ,
वनारण्यगिरिग्राम-कौतुकादि विलोकयन् । एकदाम्रतरुच्छाया-संस्थं साधुं ददर्श सः ॥ २० ॥ भक्त्या ननाम तत्पादौ,
स्वं धन्यं गणयन् स्थितः । धर्माशीःपूर्वकं तेन, चक्रेऽर्हद्धर्मदेशना ॥ २१ ॥ तद्यथा-दुर्गतिप्रसृतान् जंतू-नयं धारयते यतः ।
धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ २२ ॥ अपरं च-नमस्कारसमो मंत्रः, शत्रुंजयसमो गिरिः । प्राणिरक्षासमो
धर्मो, निर्द्वंद्वं भुवनत्रये ॥ २३ ॥ आद्यस्य स्मृतिमात्रेण, प्राणभाजां भवे भवे । विपदो हि विपद्यंते, संपद्यंते च संपदः
॥ २४ ॥ यत्रानंतजिनैः स्पृष्टं, यत्रानंतमहर्षयः । सिद्धिमीयुस्ततश्चैत-त्सिद्धिक्षेत्रमिति स्मृतं ॥ २५ ॥ कृत्वा पापसहस्राणि,
हत्वा जंतुशतानि च । इदं तीर्थं समासाद्य, तिर्यंचोऽपि दिवं गताः ॥ २६ ॥ यथा मम प्रियाः प्राणा-स्तथान्यस्यापि
देहिनः । इति ज्ञात्वा प्रयत्नेन, कार्या प्राणिदया बुधैः ॥ २७ ॥ श्रुत्वेति देशनां साधो-र्धरणो धर्मवन्मनाः । करौ नियोज्य
तत्पापं, प्रकाश्य स्वं निनिंद च ॥ २८ ॥ पूज्यास्म्यहं महापापी, हत्यावांश्च कुकर्मकृत् । हत्याभ्यां मम किं भावि, का
गतिश्चैतदुच्यतां ॥ २९ ॥ मुनींद्रः प्राह पुण्यात्मन् !, पापभीरुतयानया । निश्चितं लघुकर्मासि, तपःक्रियोद्यमं कुरु ॥ ३० ॥
गत्वा शत्रुंजये तीर्थे, तपो विधेहि दुष्करं । विधेर्जप नमस्कारान्, हत्याभ्यां मोक्ष्यसे क्षणात् ॥ ३१ ॥ सोंगीकृत्य मुनेर्वाचः,
प्रपद्य धर्ममार्हतं । परोपकारिणो यूय-मेवेति प्रशशंस च ॥ ३२ ॥ ततः प्रणम्य तेनैत-त्प्रायश्चित्तचिकीर्षुणा । तत्तीर्थाभिमुखी-
भूय, हृष्टेन चलता क्रमात् ॥ ३३ ॥ प्राप्तं कुशस्थलं नाम, पुरं संप्रति नन्विदं । सोऽहं धरणनामाथ, यास्यामि विमलाचले
॥ ३४ ॥ युग्मं ॥ जाने सिद्धप्रसादेना-तीतं किंचिच्च भाव्यपि । नैमित्तिकोऽयमित्यस्मा-त्सर्वत्राप्युच्यते जनैः ॥ ३५ ॥

श्रुत्वेति चरितं तस्य, भूपपुत्राश्चमत्कृताः। विमृश्य किंचिदन्योन्यं, चतुर्णामग्रणीर्जयः ॥३६॥ अग्रे फलं च सद्रव्यं, मुक्त्वा नैमित्तिकं जगौ। कालज्ञैतरपितू राज्य—ममीषां कस्य संभवि ॥ ३७ ॥ युग्मं ॥ विलोक्य विधिना तेन, विज्ञाय धूनितं शिरः। किमित्युक्तस्तु सोऽवादी-दनिष्टं किमु पृच्छसि ॥ ३८ ॥ चतुर्णां भवतां मध्ये, राज्यं न कस्य दृश्यते। किं तु भावी नयोदायाः, सूर्यवत्याः सुतोऽद्भुतः ॥ ३९ ॥ स जीविष्यति चेद्भाग्य-लक्ष्मीकेलिगृहं तदा। इयं तस्यैव राज्यश्री-र्भविष्यतीति मे मतिः ॥ ४० ॥ युग्मं ॥ कटुवाक्यं निशम्यैत-द्गणकस्य नृपात्मजाः। रुष्टा इव जगुर्वेत्सि, न किंचित्त्वं वदन्निदं ॥ ४१ ॥ भटानामपि सर्वेषा-मग्रणीरेष यज्जयः। तं विहाय विहायास्मा-नन्यः को राज्यभाग्भवेत् ॥ ४२ ॥ तांस्तादृशान् स दृष्ट्वाह, व्यग्र( द्विधा )चित्तोऽस्मि तेन भोः। पुनर्विलोकयिष्यामि, सम्यक्संप्रति याम्यहं ॥ ४३ ॥ फलं लात्वा धनं मुक्त्वा, स स्थान्निर्गतस्ततः। क्रमाच्छत्रुंजये प्राप्त-श्चक्रे साधूक्ततद्विधिं ॥ ४४ ॥

ततस्ते कुमराश्चिंता-भोनिधौ मग्नमानसाः। प्रकटं चिंतयांचक्रुः, सत्यमेतन्न वाथ किं ॥ ४५ ॥ तेष्वेकोऽवग्निमित्तज्ञ-सत्का वाग्देवगीरपि। असत्यापि भवेत्काचिद्, ज्ञातं ( नं ) न प्रभवत्यपि ॥ ४६ ॥ यथा प्राग्मंत्रिणा स्वीय-पुत्रादात्मकुलक्षयं। ज्ञात्वा कालज्ञतो बुद्धि-प्रपंचकरणात्तदा ॥ ४७ ॥ कष्टं भूपसुतावेणी-छेदकव्यंतरोद्भवं। सर्वं निर्गमितं तद्व-दस्माभिस्तत्करिष्यते ॥ ४८ ॥ युग्मं ॥ तथा-यथा च मंत्रिपुत्रस्य, रौहिणेयस्य संकटं। देव्योक्तमपि भूम्यंत-र्गृहस्थस्य स्वयं गतं ॥ ४९ ॥ तथास्माभिरिहोपायः, क्रियते कोऽप्यलं ततः। भव्यं भावि बृहत्कीर-धीवत्तत्र जयो जगौ ॥५०॥ युग्मं ॥ अमुना किं विचारेण, स सर्वज्ञोऽस्ति किं यतः। नानृतं भाषते किं वा, तथाप्येतत्करिष्यते ॥५१॥ यदा सूर्यवतीदेव्या, भावी कदापि नंदनः।

सदात्मभिर्विनाश्योऽयं, जानाति न परो यथा (ज्ञास्यतेऽतः परं हि यत्) ॥५२॥ मंत्रयंतो रहस्येते, ज्ञाता निःश्रेण्यधःस्थया ।
सैन्या (न्या) सूर्यवतीसख्या, श्रुतं नैमित्तिकं वचः ॥ ५३ ॥ शाखाग्रफलभु(भ्र)क्त्यर्थं, तदा तत्रेतया तया । तद्विज्ञाय क्षणादेत्य,
ज्ञापिता स्वामिनी निजा ॥ ५४ ॥ तदा हर्षविषादाभ्यां, समं सूर्यवती श्रिता । जंबूद्वीपे दिवारात्रि-विभागाभ्यां सुमेरु-
वत् ॥ ५५ ॥ देव्याह सैन्द्रि किं भावि, यद तद् ज्ञाप्यते नृपः । किं वानेन विकल्पेन, यद्भाव्यं तद्भविष्यति ॥ ५६ ॥
तपोभर्म प्रकुर्वत्या, निद्रायामन्यदा निशि । सुखासया तया लब्धा, स्पष्टं स्वप्नचतुष्टयी ॥ ५७ ॥ तथा ह्यमलराकायां,
निशायां चंद्रमंडलं । स्थानात्तत्रोत्प्लुत्य वेगेन, तत्रैव पुनरागमत् ॥ ५८ ॥ अन्यत्र विकचं पद्मं, केनानीय समर्पितं ।
पुनस्तत्संकुचद्देव्या, सत्करेण विकासितं ॥ ५९ ॥ तथा सुधोज्ज्वलं चैत्यं, दृष्टया च श्यामलीकृतं । एवं पुनः पुनर्भू-द्राक्या-
कारि मणीमयं ॥ ६० ॥ एकं मुकुलितं छत्रं, कुतोऽप्यागत्य केनचित् । राज्ञीमूर्ध्नि धृतं ताव-त्स्वतोऽभूत्तद्विकस्वरं ॥ ६१ ॥
इत्थं स्वप्नानि चत्वारि, दृष्ट्वा प्रबुद्धवत्यसौ । राज्ञोऽग्रे तानि सा व्यक्तं, विनयादुक्तवत्यपि ॥ ६२ ॥ श्रुत्वा नृपतिरेतानि,
विचार्याथ पृथक्पृथक् । प्राह देवि शुभं दृष्टं, भावी ते भाग्यवान् सुतः ॥ ६३ ॥ एवमस्त्विति सा प्राह, धर्मेच्छुः पुष्पितोऽद्य
नः । प्रभाते तु स आस्थाने, सभां सभामपूरयत् ॥ ६४ ॥ आहूय गणकान् स्वप्न-पाठकान् मंत्रिणोऽखिलान् । स्वप्नानि
निशिना भूपो-ऽपृच्छद्विचार्य ते जगुः ॥ ६५ ॥ भावी नृदेव सूनुस्ते, कलावान् पूर्णचंद्रतः । श्रीनिवासस्तु राजीवा-चैत्याद-
पृथक्पर्यकृत ॥ ६६ ॥ छत्रेण निखिलक्षोण्याः, स एकच्छत्रराज्यभुक् । भावस्त्वेषां हि दुर्ज्ञेयः, परं भव्यान्यमून्यलं ॥ ६७ ॥
तान् गत्वान्य नृपेणापि, देव्यास्तद् ज्ञापितं ततः । तत्कुक्षौ वर्धते गर्भो, रत्नचक्रोहणक्षितौ ॥ ६८ ॥ उत्पेदे त्वेकदा देव्याः,

शीतांशुपानदोहदः । तदपूर्तौ शनैस्तस्या, विच्छायं च कृशं वपुः ॥ ६९ ॥ दृष्ट्वोर्वीशेन पृष्टा सा-वादीद्राज्ञो यथास्थितं । ततस्तेन सचिंतेना-दिष्टो मंत्र्यकरोन्मति ॥ ७० ॥ युग्मं ॥ नवप्रसूतधेनूनां, दुग्धमानाय्य सुंदरं । शर्कराभिः समीकृत्य, जलेनोत्कालितं ततः ॥ ७१ ॥ कणोंच्चरजतस्थाल्यां, क्षिप्तं तद्रहसि क्षणात् । स्त्यानीभूतं मणीदीप्रं, स्थाल्यां चंद्र(स्थूलं चक्र) मिवोज्वलं ॥ ७२ ॥ ततस्तृणकुटीमध्ये, रात्रौ नृपप्रियासिता । छन्नं छिद्रं विनिर्माय, चंद्रं तत्प्रतिबिंबितं ॥ ७३ ॥ स्वबुद्ध्या प्रकटीकृत्यो-परिस्थनरलाघवात् । अग्रे तत्पाययामास, ततस्तुष्टा च साभवत् ॥ ७४ ॥ युग्मं ॥ तद्दोहदेन तौ हृष्टा-वजातेऽपि सुतेऽभिधां । श्रीचंद्र इति चक्राते, तत्स्वमाद्यनुसारतः ॥ ७५ ॥ गूढव्रज्याऽभितो हैमी, कारिता नाममुद्रिका । तयोश्चित्तगतो हर्षो, न माति त्रिजगत्यपि ॥ ७६ ॥

इतः प्रतापसिंहेऽत्र, क्रीडां कर्तुं वने गते । वेगेन केऽपि तत्रैयु-र्बुंबारवकराश्वराः ॥ ७७ ॥ किं किं पृष्टा जगुर्देव, नैर्ऋत्यां नीरधेस्तटे । कणकोट्टपुरं नाम, पुरं रत्नपुरं ययोः ॥ ७८ ॥ ईशौ मल्लमहामल्ला-वेकीभूयागताविह । प्लावयंतौ स्वदेशांत-ग्रीमक्षेलपुरादि च ॥७९॥ युग्मं॥ श्रुत्वैतत्स्वालयेऽभ्येत्या-दिश्य भट्टान् ( भूपान् ) यथोचितं । अताडयत्प्रया-णस्य, ढक्काममुच्चैर्नराधिपः ॥ ८० ॥ ततश्चांतःपुरे गत्वा , भूभुक्सूर्यवतीं जगौ । प्रिये विजययात्राद्या-कास्मिकी समुपस्थिता ॥ ८१ ॥ त्वं सुखेन तिष्ठात्र, वेगान्निर्जित्य विद्विषः । आगंतास्मि तु सावादी-देष्यामीश त्वया समं ॥८२॥ गर्भे प्रौढे निषिद्धा सा, प्रोवाच गद्गदस्वरा । सर्वं जयादिवृत्तांतं, नैमित्तिकवचोऽपि तत् ॥ ८३ ॥ तेन स्थास्यामि नात्रैतत्, श्रुत्वा विमृश्य स क्षणं । प्राह प्राणप्रिये दुःखं, मा धा भाव्यखिलं शुभं ॥८४॥ चतुरोऽपि सुतानेतान्, सार्धे लास्याम्यहं ततः ।

तं निर्भयीव, तिष्ठन्, सिंहीव गिरिगह्वरे ॥ ८५ ॥ इतस्ते कुमराः किंचि-द्विमृश्य जयमग्रजं । गृहे मुक्त्वा गतास्तत्र, सामं-ताद्याश्च ते क्रमात् ॥ ८६ ॥ तान् गुप्तानागतान् ज्ञात्वा, पृष्टं जयः क भूभुजा । तैरुक्तं तद्वपुर्माद्यं, तथाप्याकारितो भटैः ॥ ८७ ॥ ज्वराजीर्णमिषाज्ज्ञो, दूता ये तेन वालिताः । पुनः पुनः स आहूतः, परं नाप नृपांतिकं ॥ ८८ ॥ अत्यौत्सुक्यात्ततो भूप-श्चचाल पृतनायुतः । उपक्रमे कृतोऽप्युग्रै-र्दुर्लंघ्या भवितव्यता ॥ ८९ ॥ यतः—

उदयति यदि भानुः पश्चिमायां दिशायां, प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां, तदपि चलति नो या भाविनी कर्मरेखा ॥ १ ॥

रथारूढानागतैर्भूपैः, सरसीवाह्निकैरिव । वर्धमाना नृपचमू-र्नदीव कमलान्विता ॥ ९० ॥ राजहंसाश्रिता वल्ग-त्तुरंगमत-रंगिता । प्रयाणैः पूरयन्क्षोणी-र्मंडितस्यापगोस्तटं ॥ ९१ ॥ युग्मं ॥ तत्र प्रदाय विश्रामं, कटकस्य निजस्य सः । चरैर्विज्ञाय तौ शत्रू, जगाम संनिधौ तयोः ॥ ९२ ॥ सज्जीभूय रणक्षेत्रे, रणतूर्यसमाकुले । रिपुभ्यां सह भूभर्त्रा, प्रारेभे दारुणो रणः ॥ ९३ ॥ कुंतिनः कुंतिभिः सार्धं, खड्गिनः खड्गिभिः सह । चापिनश्चापिभिः साकं, गदाभृद्भिर्गदाधराः ॥ ९४ ॥ सादिनः सादिभिः सार्धं, हस्तिपैः सह हस्तिपाः । सामंतैः सह सामंता, रथिनो रथिभिः सह ॥ ९५ ॥ त्रिभिर्विशेषकम् ॥ एवं भवति संग्रामे, क्षीणे सैन्ये गुरुण्यपि । भग्नं वैरिभटैर्ज्ञात्वा, जयस्तो विजयादयः ॥ ९६ ॥ ढुढौकिरे गजारूढाः, शत्रुसेनां प्रति द्रुतं । [illegible]-र्विद्रुतश्च पराङ्मुखौ ॥ ९७ ॥ युग्मं ॥ ततो मदमहामल्लौ, काकानिव दिशोदिशं । नश्यतः स्वभटान् दृष्ट्वा, कृपाणाश्च बलिष्ठिनः ॥ ९८ ॥ रोषारुणाक्षौ शूरौ-र्द्वीभूय च चेलतुः । रौद्रं विदधतां युद्धं, चिरं तैश्च सहाद्भुतं

शीतांशुपानदोहदः । तदपूर्तौ शनैस्तस्या, विच्छायं च कृशं वपुः ॥ ६९ ॥ दृष्ट्वोर्वीशेन पृष्टा सा–वादीद्राज्ञो यथास्थितं । ततस्तेन सचिंतेना–दिष्टो मंत्र्यकरोन्मतिं ॥ ७० ॥ युग्मं ॥ नवप्रसूतधेनूनां, दुग्धमानाय्य सुंदरं । शर्कराभिः समीकृत्य, जलेनोत्कालितं ततः ॥ ७१ ॥ कणोंचरजतस्थाल्यां, क्षिप्तं तद्रहसि क्षणात् । स्त्यानीभूतं मणीदीप्रं, स्थाल्यां चंद्र(स्थूलं चक्र)मिवोज्वलं ॥ ७२ ॥ ततस्तृणकुटीमध्ये, रात्रौ नृपप्रियासिता । छन्नं छिद्रं विनिर्माय, चंद्रं तत्प्रतिबिंबितं ॥ ७३ ॥ स्वबुद्ध्या प्रकटीकृत्यो–परिस्थनरलाघवात् । प्रगे तत्पाययामास, ततस्तुष्टा च साभवत् ॥ ७४ ॥ युग्मं ॥ तद्दोहदेन तौ हृष्टा–वजातेऽपि सुतेऽभिधां । श्रीचंद्र इति चक्राते, तत्स्वमाद्यनुसारतः ॥ ७५ ॥ गूढवज्राऽभितो हैमी, कारिता नाममुद्रिका । तयोश्चित्तगतो हर्षो, न माति त्रिजगत्यपि ॥ ७६ ॥

इतः प्रतापसिंहेऽत्र, क्रीडां कर्तुं वने गते । वेगेन केऽपि तत्रैयु–र्वृंवारयकराश्चराः ॥ ७७ ॥ किं किं पृष्टा जगुर्देव, नैर्ऋत्यां नीरधेस्तटे । कणकोट्टपुरं नाम, पुरं रत्नपुरं ययोः ॥ ७८ ॥ ईशौ मल्लमहामल्ला– [illegible]

ं सखि ॥ १६ ॥ प्रयाणसमये राज्ञा–म्याहूतेऽपि पुनः पुनः । बलाद्दुष्टे स्थितेऽत्रास्मिन्, ज्ञायते न हि.
। तत्कृतोपायाः, सर्वे जाता निरर्थकाः । धर्मा इव विना भावं, विना नीरमिवांकुराः ॥ १८ ॥
गें, नृपकांता शुभेऽहनि । शुभनक्षत्रगे चंद्रे, शुभोच्चेषु ग्रहेषु च ॥ १९ ॥ रजन्यर्धे प्रसूते स्म, प्रभाधः-
त्नं तदा सोऽभा–न्मूर्तिमानिव भानुमान् ॥ २० ॥ तं दृष्ट्वा हृत्सरो राज्या, भृतं हर्षांबुभिस्तथा । निःसृतं
ंचिमिषतो बहिः ॥ २१ ॥ तं सुरूपं सुभाग्यं च, सर्वलक्षणसंयुतं । पूर्णचंद्रमुखं फुल्ल–राजीवदललोचनं ॥ २२ ॥
दुलसद् ) भालं, बालं वीक्ष्य नृपांगना । द्वारे जयभटांश्चापि, स्थितान् यमभटानिव ॥ २३ ॥ सैंद्रीमपरचेटीश्च,
दस्वरं । सख्यः पश्यत मे कर्म, नृपोऽप्यद्य गृहे न हि ॥ २४ ॥ त्रिभिर्विशेषकं ॥ नायपौ पितृवर्गोऽपि । वर्धापनि-
ऽनया । हर्षः कस्याद्य संपाद्यो, धिग्मां दुःकर्मशेखरां ॥ २५ ॥ वादित्रगीतनृत्याद्या–स्तावद् दूरे महोत्सवाः । संदेहः सम-
भूदद्य, भाजनस्यापि वादने ॥ २६ ॥ सुतस्तावदयं सर्व–गुणमाणिक्यरोहणः । समयस्त्वीदृशो भीत्या, निःशेषहर्षशोषणः
॥ २७ ॥ श्रुत्वैतदभवन् सख्य–स्तद्दुःखेन सुदुःखिताः । नदीतटांकुराः किं न, प्रौढा मेघांबुसेकतः ॥ २८ ॥ ऊचुस्ता दीर्घ-
निःश्वासां, तादृशीं स्वामिनीं निजां । चित्ते दुःखमिदं मा धा, यद्भूत्प्रसवोऽधुना ॥ २९ ॥ चिंतया वर्धते व्याधि–श्चिंतया
क्षीयते तनुः । चिंतया हीयते बुद्धि–स्तस्मात्कार्या न सा बुधैः ॥ ३० ॥ किं दुःखेन विकल्पैः किं, किं वा ह्यचिंतयानया ।
भाग्येनास्य सुतस्यैव, भव्यं भाव्यखिलं खलु ॥ ३१ ॥ स्वमनोरथकल्पद्रुः, पुष्पितः फलितोऽधुना । तनूजजन्मना तस्मा–

१ 'अपरशमनप्रतालं' इति प्रतिपाठः ।

॥ ९९ ॥ युग्मं ॥ हतवानसिना मल्लो, विजयं स मुमूर्छ च । ततः सुतान् भटांश्चापि, खिन्नान् दृष्ट्वा नृपार्यमा ॥ २०० ॥ दीप्तिमत्खड्गमाकृष्य, क्व रे मल्लः स दुष्टधीः । स्यादिति वदन् रोषा-द्रिपुपार्श्वे समाययौ ॥ १ ॥ युग्मं ॥ ततः प्रतापसिंहेन, क्षणादसिप्रहारतः । छिन्नं मल्लशिरस्तत्र, तत्त्रासेन सहापतत् ॥ २ ॥ ततः कौशस्थले सैन्ये, स्वनेतरि जयान्विते । उच्चच्छाल चिरं नंद, जय जीवेति सध्ध्वनिः ॥ ३ ॥ मल्ले यमगृहे प्राप्ते, महामल्लः स्वजीवितं । सैन्यं शेषं च तज्ज्ञात्वा, नंष्ट्वा रत्नपुरेऽगमत् ॥ ४ ॥ ततः प्रतापसिंहोऽपि, कणकोट्टपुरादिकं । तद्देशं सर्वमादाय, सप्रतिज्ञस्तमन्वगात् ॥ ५ ॥ महामल्लस्य तं देशं, स्वीकुर्वन्नखिलं नृपः । तत्पुरं तं पुरांतःस्थं, परिवेष्टितवानपि ॥ ६ ॥ तं रिपुं सबलं ज्ञात्वा, तत्र वार्धितटादिषु । कुर्वन्नावादिभिः क्रीडां, सुखेनास्थान्महीधवः ॥ ७ ॥

इतः सूर्यवती देवी, नृनाथे चलिते सति । हृदि दुःखं जायमानं, निराकृत्य जिनोक्तिभिः ॥ ८ ॥ कुर्वंत्यकृत्रिमं धर्ममेकदा स्वगृहाद्बहिः । सायुधान् सुभटान् दृष्ट्वा, जगाद च निजां सखीं ॥९॥ युग्मं ॥ सैंद्रि पश्य नरा एते, कस्य के किमिहागताः । सैंध्या तत्रैतया पृष्टं, के यूयमिति ते जगुः ॥ १० ॥ भूपभृत्या वयं सुभ्रु, राज्ञा रत्नपुरादिह । देव्या गर्भस्य रक्षार्थं, मुक्ताः स्मो मा भयं कृथाः ॥ ११ ॥ श्रुत्वेत्यसदृशं वाक्यं, तान् विलोक्य पृथक्पृथक् । पश्चादागत्य सा राज्ञीं, जगौ देवि निशम्यतां ॥ १२ ॥ द्वारि स्थिता भटा एते, ज्ञायंते जयसेवकाः । राजकीया वयं चेति, जल्पंतोऽनृतभाषिणः ॥ १३ ॥ विपरीतमनस्कृत्वा, दुष्टबुद्ध्या जयेन च । गर्भरक्षामिषान्मन्ये, स्थापिता अत्र भाविनः ॥ १४ ॥ ज्ञात्वैतद्दुःखसंवेशा-द्राज्ञी निःश्वासपूर्वकं । जगावस्मामिरत्रार्थे, हा सैंद्रि किं करिष्यते ॥१५॥ स्मरत्यदस्तदाश्रौषी-र्यद्यन्नैमित्तिकं वचः । मंत्रितं

च रहस्येभिः, कुलस्यानुचितं सखि ॥ १६ ॥ प्रयाणसमये राज्ञा–न्याहूतेऽपि पुनः पुनः। बलाद्दुष्टे स्थितेऽत्रास्मिन्, ज्ञायते न हि.
भावि किं ॥ १७ ॥ ततश्च तत्कृतोपायाः, सर्वे जाता निरर्थकाः । धर्मा इव विना भावं, विना नीरमिवांकुराः ॥ १८ ॥
[redacted] समये पूर्णे, नृपकांता शुभेऽहनि । शुभनक्षत्रगे चंद्रे, शुभोच्चेषु ग्रहेषु च ॥ १९ ॥ रजन्यर्धे प्रसूते स्म, प्रभाधः-
कृतदीपभं । पुत्ररत्नं तदा सोऽभा–न्मूर्तिमानिव भानुमान् ॥ २० ॥ तं दृष्ट्वा हृत्सरो राज्या, भृतं हर्षांबुभिस्तथा । निःसृतं
तद्यथा देहा–द्रोमांचमिषतो बहिः ॥ २१ ॥ तं सुरूपं सुभाग्यं च, सर्वलक्षणसंयुतं । पूर्णचंद्रमुखं फुल्ल–राजीवदललोचनं ॥ २२ ॥
अंष्टमींदुसमं ( तुलसद् ) भालं, बालं वीक्ष्य नृपांगना । द्वारे जयभटांश्चापि, स्थितान् यमभटानिव ॥ २३ ॥ सैंद्रीमपरचेटीश्च,
जगाद गद्गदस्वरं । सख्यः पश्यत मे कर्म, नृपोऽप्यद्य गृहे न हि ॥ २४ ॥ त्रिभिर्विशेषकं ॥ नाययौ पितृवर्गोऽपि । वर्धापनि-
कयाऽनया । हर्षः कस्याद्य संपाद्यो, धिग्मां दुःकर्मशेखरां ॥ २५ ॥ वादित्रगीतनृत्याद्या–स्तावद् दूरे महोत्सवाः । संदेहः सम-
भूदद्य, भाजनस्यापि वादने ॥ २६ ॥ सुतस्तावदयं सर्व–गुणमाणिक्यरोहणः । समयस्त्वीदृशो भीत्या, निःशेषहर्षशोषणः
॥ २७ ॥ श्रुत्वैतदभवन् सख्य–स्तद्दुःखेन सुदुःखिताः । नदीतटांकुराः किं न, प्रौढा मेघांबुसेकतः ॥ २८ ॥ ऊचुस्ता दीर्घ-
निःश्वासां, तादृशीं स्वामिनीं निजां । चित्ते दुःखमिदं मा धा, यदभूत्प्रसवोऽधुना ॥ २९ ॥ चिंतया वर्धते व्याधि–श्चिंतया
क्षीयते तनुः । चिंतया हीयते बुद्धि–स्तस्मात्कार्या न सा बुधैः ॥ ३० ॥ किं दुःखेन विकल्पैः किं, किं वा हार्चितयानया ।
भाग्येनास्य सुतस्यैव, भव्यं भाव्यखिलं खलु ॥ ३१ ॥ स्वमनोरथकल्पद्रुः, पुष्पितः फलितोऽधुना । तनूजजन्मना तस्मा–

१ ' अष्टम्यमृतसद्भालं ' इति प्रतिपाठः ।

न्मुद्रयायं ( न्मुदेऽयायं ) विभूष्यते ॥ ३२ ॥ इत्युक्त्वा स्नपयित्वा च, स ताभिर्भूरिभूषणैः । श्रीचंद्र इति नामांक-मुद्रयालंकृतः
कृतः ॥ ३३ ॥ तं विलोक्याभितः कम्रं, पुरंदरमिवाद्भुतं । अवक्सैंद्री भगिन्योऽस्य, विधात्रा सुभगं वपुः ॥ ३४ ॥ मन्ये रत्नादि-
सारेभ्यः, सारं संगृह्य निर्ममे । पिंडको नवनीतस्य, गोरसादिव सुस्त्रिया ॥ ३५ ॥ युग्मम् ॥ राज्ञः प्रतापसिंहस्य, गृहे कल्पद्रु-
मोपमः । अथोत्पेदे कुमारोऽयं, परं रक्ष्यः सुयत्नतः ॥ ३६ ॥ किं वाधुना विधेयं किं, प्रभातं यद् भविष्यति । पुत्रं तदात्म
संशोध्य, ग्रहीष्यंति क्षणादिमे ॥ ३७ ॥ तदात्मभिरनाथाभि-रिव निष्पत्स्यतेऽत्र किं । अधुनैव ततः किंचि-द्विमृश्य क्रियतेऽ-
नघं ॥ ३८ ॥ इत्युक्त्वा विरता साथ, तासामेकावदत्सखी । पेटादौ क्रियते गुप्तो-गजस्तैर्ज्ञास्यते कथं ॥ ३९ ॥ तन्निशम्यापरा
प्राह, न हि भव्यमिदं यतः । बलात्प्रविशतामेषां, वारयिष्यति को ( का )ऽत्र नः ॥ ४० ॥ एतत्क्रूरदृशामग्रे, तिष्ठेच्छन्नोऽर्भकः
कथं । अभ्राघृतोऽपि (हि) शीतांशु-स्तमसा ग्रस्यते न किं ॥ ४१ ॥ तेन सैंद्रि किमप्यत्र, तव बुद्धिविजृंभणं । रुचिरं भूगृह-
स्यांत-र्यथा दीपप्रकाशनं ॥ ४२ ॥ बुद्ध्या यत्क्रियते कार्यं, तद्बलेन न पार्यते । न बंधुभिः सहायैश्च, भूरिभिश्चापि नो धनैः
॥ ४३ ॥ ततश्च सूर्यवत्याह, सखि प्राच्यभवे मया । चक्रे पुण्यानुगं पुण्यं, येन पुत्रोऽजनीदृशः ॥ ४४ ॥ अथ तद्रक्षणोपायः,
कृत एव विलोक्यते । प्रपंचय सतीं बुद्धिं, सैंद्रि बुद्धिमतल्लिके ॥ ४५ ॥ विमृश्याह ततः सैंद्री, पट्टराज्ञ्यवधार्यतां । निर्बुद्धे-
रपि मे बुद्धि-रीदृश्यत्र विचार्यतां ॥ ४६ ॥ गृहाद्बहिः शुभेऽन्यत्र, प्रदेशे मुच्यते यदि । कुमारोऽयं तदा चारु, परं तदपि
दुष्करं ॥ ४७ ॥ यच्च द्वारि स्थिता एते, गेहान्निर्गच्छतां सतां । सर्वेषां शोधयंत्युच्चैः, पृच्छंतीति क्व यास्यथ ॥ ४८ ॥
का बुद्धिरत्र पृष्टेति, सा जगौ या सखी सदा । गृहोपवनिकामध्या-त्संध्यायां कुसुमोच्चयं ॥ ४९ ॥ अत्रानयति शय्यार्थं,

प्रत्यूषे तु तथोज्झति । प्रभातेऽथ तया रीत्या, सैव निःशंकतान्विता ॥ ५० ॥ पुष्पनिष्कुटके क्षिप्त्वा, यत्नात्कुमरपुंगवं । गत्वारामे तया नित्य-संचिते पुष्पसंचये ॥ ५१ ॥ पुष्पाणि विरलीकृत्य, विमुच्य कुसुमावृतं । तथैव हि समेत्यत्र, ज्ञास्यते तु च भावि यत् ॥ ५२ ॥ चतुर्भिः कलापकं ॥ वरं वरमिति प्राह्वे, हृष्टा सूर्यवती जगौ । सुरिशेमुष्यधःकर्त्री, शेमुषी वर्तते तव ॥ ५३ ॥ निशाया विरमेऽथोच्चै-रुदयाद्रिं शनैः शनैः । भानुरेति स्म तद्रूप-दिदृक्षयेव सस्पृहः ॥ ५४ ॥ ततो विकसितास्यं तं, तत्सख्यश्च पृथक्पृथक् । लात्वांके तिलकोत्तंसं, नेत्रांजनाद्भुतं व्यधुः ॥ ५५ ॥ तासामेकापि तं पुत्रं, मोक्तुं नेच्छति हस्ततः । बुभुक्षितः करायातं, मोदकं किं नु मुंचति ॥ ५६ ॥ ततो देव्या निजोत्संगे, लात्वालिंग्य मुहुर्मुहुः । स्वमंगजं दृढस्नेहा-चिरं स्तन्यमपाययत् ॥ ५७ ॥ स्थास्यस्येकक एव त्वं, कथं श्रीचंद्र तत्र हि । किं वा गिरिदरीमध्ये, त्राता केसरिणोऽस्ति कः ॥ ५८ ॥ वत्स स्ववदनांभोजं, दर्शयेथा ममाचिरात् । देव्यामित्युक्तवत्यां प्रा-गादिष्टा पुष्पलाविका ॥ ५९ ॥ निर्ययौ तं तथाकृत्य, लात्वा पुष्पकरंडकं । भटानामग्रतो भूत्वा, गतोपवनिकांतरा ॥ ६० ॥ त्रिभिर्विशेषकं ॥ तस्मादादाय हस्ताभ्यां, रत्नकंबलवेष्टितं । पुष्पोच्चयांतर्निर्बाधं, सा मुमोच नृपांगजं ॥ ६१ ॥ एषां शंकास्तु मात्रेति, स्थातुं शक्नोमि न क्षणं । याम्यहं तेन पुत्र त्वं, नंद चैष्यामि सत्वरं ॥ ६२ ॥ सिंहावलोकनन्याया-त्पश्यंती तं पुनः पुनः । आगमत्स्वामिनीपार्श्वे, संजज्ञे चारुणोदयः ॥ ६३ ॥

इतश्च जयभृत्यैस्तैः, ज्ञातवासगृहांतरा । यावद्विलोकितं तावद्, दृष्टा च प्रसवस्थितिः ॥ ६४ ॥ पृष्टं च तैरहो सख्यः, स्वामिनी किमजीजनत् । न ददत्युत्तरं तास्तु, ज्ञापितं तज्जयस्य तैः ॥ ६५ ॥ रयादेत्य जयस्तत्र, गर्भाप्राप्तौ च तद्गृहं ।

भटैर्गवेषयामास, पेटाभूमिगृहाद्यपि ॥ ६६ ॥ शोधितेऽपि चिरं राज्याः, प्रत्यंशमाखिलं गृहं । न कुत्रापि किमप्याप, विषण्णो-
ऽभूज्जयस्तदा ॥ ६७ ॥ किमिदं किमभूदत्रा-पृच्छि सैंद्री जयेन सा । तया जरादिकं तस्य, घनीकृत्य च दर्शितं ॥ ६८ ॥
प्रोचे चाद्य जयास्माक-मंतर्लीना मनोरथाः । देव्या दूरे सुतस्ताव-त्सुताप्यत्र हि नाभवत् ॥ ६९ ॥ निशम्येति जयो हृष्ट-
श्चित्ते चिंतितवानिदं । विनौषधं गतो व्याधि-र्यदभूदिदमीदृशं ॥ ७० ॥ प्राह चानीदृशं हा हा, जज्ञेऽद्य सैंद्रि निश्चितं । मया
ज्ञातमभूच्चित्ते, जनन्याः पुत्रजन्मनि ॥ ७१ ॥ पुर्यंतरभितो भ्रातु-र्विधास्यंते महोत्सवाः । कृत्वेति कृत्रिमं शोकं, भटैः सह
जयो ययौ ॥ ७२ ॥ युग्मं ॥ स्वस्थाने च गते तस्मिन्, जातेऽत्र विजने तदा । राज्ञी जगाद सैंद्यत्र, पश्यैभिः कीदृशं
कृतं ॥ ७३ ॥ सत्वर गच्छ वत्सं मे, समानीय प्रमोदय । पुत्रः क्षुधा रुदन् भावी-त्यादिष्टा तत्र सा ययौ ॥ ७४ ॥ विलोक-
यति पुंजं तं, सा न पश्यति तत्सुतं । शोधितेऽप्यखिले पुंजे, पर तत्र ददर्श न ॥ ७५ ॥ अप्राप्ते कुमरे तत्र, सा मुमूर्छ रुरोद
च । इतस्ततश्च पश्यंती, विलपंत्यागमद् गृहे ॥ ७६ ॥ निशम्य रुदनं दूरा-त्तस्याः सूर्यवती जगौ । क्षेमं सख्यस्ति सूनोर्मे,
सावदद्रुद्रुदस्वर ॥ ७७ ॥ स्यादेवं तर्हि किं दुःखैः, पर पुत्रो न दृश्यते । न ज्ञायते स कुत्रागा-दग्रेरुपरि रूतवत् ॥ ७८ ॥
श्रुतैस्तैः कटुभिर्वाक्यै-र्वज्राहतेव साभवत् । पपात मूर्छया भूमौ, सहसा तत्सखीजनैः ॥ ७९ ॥ प्रादुःकृते च चैतन्ये, कद-
लीदलवायुभिः । कुर्वती रुदनं तस्मा-दारामेऽगात्सखीयुता ॥ ८० ॥ युग्मं ॥ क मुक्तोऽभूत्सुतश्चेटि, प्राह सात्रेति सद्दृशा ।
तया तत्र सखीभिश्च, स व्यलोकि समंततः ॥ ८१ ॥ पर न प्राप सुप्रापः, कल्पद्रुः किं हि देहिनां । चिंतामणिः करेऽप्यास-
स्तिष्ठेद्वा किं दरिद्रिणां ॥ ८२ ॥ किमभदिह पत्रस्य, केन किं वा व्यपोहितः । केनाप्यपहृतः किं वा, यदयं नैव दृश्यते

भिश्चालं, शोकेन बहुनापि किं ॥४७७॥ गतशोचं न कर्तव्यं ( गते शोको न कर्तव्यः ), भविष्यन्नैव चिंतयेत्। वर्तमानेन कालेन, वर्तयंति विचक्षणाः ॥ १ ॥ गतः कुतश्चिदभ्येति, चिंताभीष्टोऽपि किं वद ( किंवदः )। यल्लभ्यं लभ्यते तच्च, नालभ्यं लभ्यते क्वचित् ॥ २ ॥ एवमेषामिमां वाचं, श्रुत्वा बुद्धवती तु सा। परं प्राग्दोहदस्वप्न-स्मृत्या प्राप्नोति दुःखतां ॥३॥ पुनस्तैरार्हतैर्वाक्यै-र्दुःखतापो हृदुद्भवः। शाम्यते च तयाशेषो, घनांबुभिर्दवाग्निवत् ॥ ४ ॥ स्वस्थाने च गते बंधु-वर्गे निशि तदोचितं। कृत्वा पंचनमस्कार-ध्यानं सुप्ता क्षणं हि सा ॥ ५ ॥ तदा स्वप्नांतरा कापि, श्वेतवस्त्रांचिता सुरी। एत्य तत्र जगौ राज्ञीं, वत्से! जागर्षि किं न वा ॥६॥ तां दृष्ट्वा संभ्रमात्साह, मातर्निद्रात्र मे कुतः। दिष्ट्यागतासि मद्भाग्या-त्का त्वं नेत्रप्रमोददा ॥ ७ ॥ देव्याह कुलदेवीं मां, भद्रे जानीहि मा मुहः। मा कृथास्त्वं वृथा दुःखं, विजयी ते सुतोऽस्ति यत् ॥ ८ ॥ पुण्यपुंजान्मयान्यत्रा-लयेऽमोचि सुखालये। सपुण्योऽयं तथाप्यस्य, किंचिद्विघ्नं त्वदंतिके ॥ ९ ॥ तेनैवं कृतमत्राथ, द्वादशाब्दा अनंतरं। श्रीचंद्रस्ते स्वनायासा-न्नृपो भूत्वा मिलिष्यति ॥ १० ॥ इत्युक्त्वा शंसयित्वा तां, निर्जरी सा तिरोदधे। तत्क्षणान्मुक्तशोका( निद्रा )भू-द्राज्ञी हृष्टा सविस्मयं ॥ ११ ॥ स्वप्नेऽदर्शि मयेदं किं, साक्षादिव परं शुभं। विचिंत्येत्यखिलं राज्ञ्या, सैंध्यादीनां न्यवेदि तत् ॥ १२ ॥ एवमप्यस्त्वथेत्युक्त्वा, त्यक्त्वा सख्यः मशोकतां। मांगल्यं चक्रिरे किंचि-त्स्वस्वामिन्याः प्रमोदतः ॥ १३ ॥ ततः स्वर्धवती देवी, जीवत्पुत्राशयांचिता। सखीभिः सह हृद्भावा-द्व्यधाद्धर्मक्रियादरं ॥ १४ ॥ देवार्चा गुणनं पंच-परमेष्ठिनमस्कृतेः। आवश्यकादिकं सर्वं, सविशेषं चकार सा ॥ १५ ॥

इतश्च तत्पुरीमध्ये, लक्ष्मीदत्ताभिधो वणिक्। लक्ष्मीवतीप्रियायुक्तो, वसति श्रेष्ठिनां वरः ॥ १६ ॥ धर्मवान् धनवांश्चापि,

निरपत्यः परं न हि । तस्मिन्नेव रजन्यर्धे, दृष्टवान् स्वप्नमीदृशं ॥ १७ ॥ जानात्येवं स निद्रायां, श्वेतभृंगारया स्यात् । गोत्रदेव्या कुतोऽप्येत्य, वर्धाप्य जगदे प्रियं ॥ १८ ॥ श्रेष्ठिन्नुत्तिष्ठ कल्पद्रु–स्त्वद्गेहे प्रावरेष्यति । तेनाहूय निजान् बंधून्, कुरु हारया महोत्सवान् ॥ १९ ॥ तन्निशम्य क्षणाच्छ्रेष्ठी, मुक्तनिद्रस्तदोत्थितः ( द्रोऽतिहृष्टवान् )। चारु चारु मया स्वप्नं, दृष्टं पुण्यमिदं ततः ॥ २० ॥ स तदैव समुत्थाय, स्वप्नवर्धापनादिकं । प्रियाया ज्ञापयित्वा चा–मंत्र्य बंधून् समंततः ॥ २१ ॥ हर्षभोजनवात्सल्य–मारभंशान् सविस्तरं । क्षणाद्भोज्यविधिः सर्वो–ऽभूत्सहायैर्न किं हि यत् ॥ २२ ॥ युग्मं ॥ अन्यत्र कुसुमाप्राप्तौ, पुष्पानयनहेतवे । प्रातः प्राभृतिकं लात्वा, श्रेष्ठी राजकुलेऽगमत् ॥ २३ ॥ तत्र गत्वा जयं नत्वा, सुमान्यर्थयति स सः । जयादिष्टस्ततः सोऽपि, तद्देवोद्यानमासवान् ॥ २४ ॥ तत्पुष्पपुंजपार्श्वस्थ–वदुल्लकेषु सत्वकैः । भृत्यैश्च तानि पुष्पाणि, संमील्य क्षिपति स्वयं ॥ २५ ॥ इतश्च दैवयोगेन, प्रतापसिंहसूनुना । मनागाकुंचितः स्वांहिः, शुष्कपुष्पस्थितेन च ॥ २६ ॥ दृष्ट्वा चलंति पुष्पाणि, दध्यौ श्रेष्ठी किमित्यदः । यावद्विलोकयेत्तत्र, तावद् दृष्टोऽद्भुतोऽर्भकः ॥ २७ ॥ रविबिंबमिवोद्दीप्रं, सौम्यं सुधांशुबिंबवत् । मंदारवच्च सश्रीकं, विभूषाभिर्विभूषितं ॥ २८ ॥ रत्नकंबलनामांक–मुद्राभिः शोभितं हि सः । वीक्ष्य मनाः प्रद्यौ तं, बालं लात्वा च हृष्टवान् ॥ २९ ॥ युग्मं ॥ प्रददे सुतरत्नं मे, वनदेवतयानया । गोत्रदेव्या च यद्रात्रौ, प्रोचे भूत्तथैव तत् ( प्रोपेऽभूत्सत्यमेव तत् ) ॥ ३० ॥ ध्यात्वेति सुमभांडांत–श्छन्नं मुक्त्वा ततश्च तं । पुष्पैरावृत्य तल्लात्वा, गतो श्रेष्ठी निजं गृहं ॥ ३१ ॥

ततः श्रेष्ठी रहस्येनं, लक्ष्मीपत्न्याः समार्पयत् । अभाषिष्ट च तत्प्राप्ति–स्वरूपं विस्तरात्ततः ॥ ३२ ॥ मा यभागे वरं जज्ञे,

साधु लब्धं त्वया प्रभो । रूपतेजस्विनानेन, पूरिताः स्वमनोरथाः ॥ ३३ ॥ अहो बुद्धिप्रपंचोऽय–महो धैर्यं च साहसं । राज-
सद्मगतं ह्येनं, कथमानीतवान् प्रिय ॥ ३४ ॥ अहो प्राचीनपुण्यानि, पूरयंत्यत्र वांछितं । न करोति परं प्राणी, तदेव शर्म-
कारणं ॥ ३५ ॥ भोजनांते ततः श्रेष्ठी, बंधून् परिजनान् जगौ । गूढगर्भा प्रियासीन्मे–ऽधुनैव प्रसवोऽभवत् ॥ ३६ ॥ ततश्च
कुंकुमांभोभि–रभितः सिक्तभूतलं । पुष्पप्रकरविन्यस्त–मौक्तिकस्वस्तिकांचितं ॥ ३७ ॥ तोरणप्रोल्लसद्द्वारं, नानाचंद्रोदयाद्-
भुतं । पुष्पमालावलीवल्गु, कृतकुंकुमहस्तकं ॥ ३८ ॥ उच्चैरविधवादीय–मानैर्धवलमंगलैः । याचकध्वनिसंमिश्रैः, पूर्यमाणदि-
गंत(ब)र ॥ ३९ ॥ अखंडाक्षतसंपूर्णैः, स्वर्णस्थालैः सहस्रशः । प्रविशद्भिः सुसंकीर्ण–मुद्यद्वाद्यरवोद्धुरं ॥ ४० ॥ अनेकमार्गणा-
दीनां, वितीर्यमाणसद्धनं । बंधुसाधर्मिकादीनां, विधीयमानभक्तिकं ॥ ४१ ॥ चक्रे स्वसदनं श्रेष्ठी, पुत्रप्राप्तिप्रमोदतः । हर्ष-
कोलाहलश्चाभू–न्महांस्तत्र समंततः ॥ ४२ ॥ षड्भिः कुलकं ॥ कृते महोत्सवे सूनुः, श्रीचंद्र इति संज्ञया । श्रेष्ठिनामंत्रितस्तद्व–
त्सर्वैरपि च बंधुभिः ॥ ४३ ॥ ततः पार्थिवसूर्धात्री–पाल्यमानः क्रमात्क्रमात् । ववृधे श्रेष्ठिनः सौधे, सुरद्रुरिव नंदने ॥ ४४ ॥
लक्षेश्वरोऽपि तद्भाग्या–च्छ्रेष्ठी कोटीश्वरोऽभवत् । धनधान्यमणिस्वर्णा–दिभिश्च तद्गृहं भृतं ॥४५॥ षष्ठीजागरणं श्रेष्ठं, विदधे
तस्य सोत्सवं । अन्यानपि कुलाचारान् , क्रमाच्चक्रे स विस्तरात् ( विश्रुतान् विनयान्वितः ) ॥ ४६ ॥ नानाक्रीडनकैर्वर्यैः,
क्रीडन् प्रतापसिंहसूः । बिभर्ति स क्रमात्तत्र, क्रमाभ्यां क्रमपद्धतीः ॥ ४७ ॥ बंधुभिः स्वजनैर्लोकै–रन्यैस्तु सुहृदादिभिः ।
अंकादंके निजे लात्वा, मुच्यतेऽपि चिरान्न सः ॥४८॥ सर्वेषां निकटे सोऽगा–त्सर्वेषां सुखकारणं । सर्वेषां हस्तचक्रा(वक्त्रा)ब्जः,
सर्वेषां वल्लभोऽभवत् ॥ ४९ ॥ कदापि शिशुना तेन, कश्चित्कस्यापि वस्तुनः । नो कदापि हठश्चक्रे, चिकृतं नैव चाननं ॥ ५० ॥

सोऽथाभूत्पंचवर्षीयो, बालोऽप्यबालविक्रमः । संकेतादिव तं भेजुः, प्रभासुप्रतिभेंदिराः ॥ ५१ ॥ एकदा यत् श्रुतं दृष्टं,
ज्ञानं विज्ञानमप्यहो । तत्सर्वं हेलया तस्य, पूर्वाभ्यस्तमिवाययौ ॥ ५२ ॥
अन्यदा बहिरुद्याने, पित्रा सह कुमारराट् । रथारूढो ययौ क्रीडा–यात्रायै कौतुकान्वितः ॥ ५३ ॥ विलोकयति कंकेल्लि–
नागपुंनागचंपकान् । रसालान् (सारसान्) दीर्घिकाश्चापि, यावत्तावदितस्ततः ॥ ५४ ॥ वाद्यमाने च वाद्यौघे, गीयमाने
च गायने । दीयमाने महादाने, जायमाने च नाटके ॥ ५५ ॥ गरीयःकुंजरारूढां, छत्रचामरशोभितां । अनेकच्छेकलोकेन,
परितस्तु परि(री)वृतां ॥५६॥ उत्पत(उन्माद्य)त्सादिसंदोह–मोहिताशेषपूर्जनां । धावद्भिः पृष्ठतोऽग्रेऽपि, मंत्र्यमात्यादिभिः परां
॥ ५७ ॥ राज्ञीवत्सारिकामेकां, महाश्चर्यैककारणं । पुराद्बहिः समायांतीं, वने तस्मिन् ददर्श सः ॥५८॥ चतुर्भिः कलापकं ॥
मा तत्रैत्य युगादीश–प्रासादद्वारमादरात् । विवेश गर्भगेहांतर्गजादुत्तीर्य लीलया ॥ ५९ ॥ तथाविधां स तां दृष्ट्वा–श्चर्यार्णःपूर-
पूर्णहृत् । किमेतन्मानुषी वै(चै)षा, कर्त्री ज्ञात्रीत्यचिंतयत् ॥ ६० ॥ तावता तत्र नार्येका, समुत्तीर्य सुखासनात् । आदिशंती
निजान् भृत्यान्, ददृशे तेन सुस्थिता ॥ ६१ ॥ पित्रादिष्टः कुमारोऽथ, तां जगौ मधुरस्वरं । कासि त्वं सुभ्रु का चेयं, पशु-
रप्यपशुक्रिया ॥ ६२ ॥ जिनमद्मागमोदंतः, कोऽत्रायं चित्रकृन्महः । श्रुत्वैतदथ हेलातः, [illegible] महिला तमब्रवीत् ॥ ६३ ॥
ईशितुर्नगरस्यास्या–धुना रत्नपुरस्थितेः । राज्ञी सूर्यवती तस्याः, सैन्द्राख्या मुख्यसख्यहं ॥६४॥ कुमार कुलशृंगार, शृण्वेतत्
श्रव्यकौतुकं । मत्स्वामिन्याः प्रेमपात्रं, सारिकैषातिवल्लभा ॥ ६५ ॥ पूर्वं कर्कोटकद्वीप–मस्याश्च जन्मभूरभूत् । तस्मान्नौवणि-
जैकेना–नीता रत्नपुरे त्वियं ॥६६॥ तत्र प्रतापसिंहस्य, राज्ञोऽग्रे तेन ढौकिता । सा प्रियापूर्वसूक्तादि–गोष्ठीभिस्तमरंजयत् ॥ ६७ ॥

इतः सूर्यवतीदेव्याः, पुत्ररत्नवियोगजं । हहा जज्ञे च यद्दुःखं, श्रुतं भावि त्वयापि तत् ॥ ६८ ॥ लेखाद् ज्ञात्वा स्वरूपं तद्, भूपोऽपि दुःखभूरभूत् । दैवेन किं कृतं हाहा, मुग्धा स्थास्यति सा कथं ॥ ६९ ॥ विमृश्य मंत्रिणा सार्धं, दुःखविस्मृति-हेतवे । भूभृता शुकपुत्रीयं, ददती नरभाषया ॥७०॥ जिनोक्तश्लोकवैराग्यो-पदेशविदुषी ततः । राज्ञ्याः श्रीजिनभक्तायाः, अग्रेऽपि (ग्राः, ग्रेपि च) स्वांतशर्मणे ॥७१॥ युग्मं ॥ ततो देव्यनया साकं, धर्मशास्त्रकथानकैः । विविधध्यानवार्ताभि-र्गमयत्यात्मवासरान् ॥७२॥ पुरानया जनुर्भूमौ, ज्ञानिवाक्यात्सधर्मतः । विधीयते तपस्तीव्रं, सम्यक्त्वं पाल्यतेऽनघं ॥ ७३ ॥ नृपपुत्री भवित्री त्वं, भवेऽग्रे ज्ञानिसाधुगीः । इति तस्माद्विशेषेण, धर्मकर्मणि सा स्थिता ॥ ७४ ॥ देव्या निवार्यमाणापि, हार्दभावादुपोषधैः ( दुपोषणैः ) । अष्टाह्निकातपश्चके, संप्रत्यस्यास्ति पारणं ॥ ७५ ॥ ततोऽद्य नृपपत्न्येषा, हर्षेणैवंविधोत्सवैः । एनामकारयच्चैत्य-परिपाटीं समंततः ॥ ७६ ॥ तेनैषापि फलस्वर्ण-मणिमौक्तिकढौकनैः जिनार्चापूर्वकं स्वीयं, विधत्ते सफलं जनुः ॥ ७७ ॥ एवमुक्त्वा स्थिता मैत्री, श्रीचंद्रोऽपि जगौ मुदा ( प्रोच्यते स्माद्ववनुना ) । अहो भाग्यमहो शक्ति-रस्या वैराग्यमप्यहो ॥ ७८ ॥ तिर्यग्योनिगताऽप्यत्र, शुभकर्मोदयादहो । कारुण्यपुण्यसामग्री-श्रद्धादि प्राप्तवत्यसौ ॥ ७९ ॥ इत्थं सोऽप्यसकृत्तस्याः, प्रशंसां विदधे ततः । गत्वा चैत्यांतरर्हतं, नत्वास्थात्तां विलोकयन् ॥ ८० ॥ सापि कृत्वार्हतीं पूजां, चंच्वा पुष्पादिभिर्विधैः । चकार मंगलान्यष्टौ, नत्वा स्तुत्वाखिलान् जिनान् ॥ ८१ ॥ यावद्वलति सा पश्चा-त्तावत्तस्या विधेर्वशात् । अकस्मात्स कुमारेंद्रो, दृष्टिगोचरमागमत् ॥ ८२ ॥ सुरूपं तं च सा दृष्ट्वा, पुनरादिजिनांह्रिगा । नत्वा गाढस्वरादूचे, स्वामिन् जन्मां-तरेऽपि चेत् ॥ ८३ ॥ भर्ता स्यान्मम तर्ह्यस्तु, कुमारोऽयं वरोऽद्भुतः । देवस्त्वमेव निर्ग्रंथो, गुरुर्धर्मो जिनोदितः ॥ ८४ ॥

युग्मं ॥ इत्युक्त्वानशनं लात्वा, सा युगादिपदांतिके । तस्थौ तावजगौ श्रेष्ठि–स्नुत्तां शुकसुंदरीं ॥ ८५ ॥ हा ! हा ! निदानमीदृक्षं, मा कार्षीनोंचितं ह्यदः । अनिदानं जिनैः पुण्यं, प्रोचे तत्त्वं च मा मुहः ॥ ८६ ॥ साह मास्तु निदानं मे, कुमार किं तु कुप्रभोः । न सिद्ध्यति मनाग्धर्मो, तेनोक्तमिति तद्धिया ॥ ८७ ॥

इतस्तत्रैतया संद्री–ज्ञापिततत्स्वरूपया । सारिकां स्वर्यवत्योचे, सखि ! मा साहसं व्यधाः ॥८८॥ वपुरेतत्त्वाहार–प्रत्याख्यानं तु दुष्करं । कुर्वत्यसि तपांस्यग्रे, तान्येन पुनराचर ॥ ८९ ॥ माथ नेत्युत्तरं मूर्ध्ना, ददौ देव्यास्ततस्तया । ऊचेऽद्य तावदुत्तिष्ठ, पारणं तपसः कुरु ॥ ९० ॥ आवासे सकृदागत्य, स्वालापैर्मां मुदं नय । आयुर्मानमनापृच्छ्य, त्वयेदं क्रियते कथं ॥ ९१ ॥ स्वामिनीमिति जल्पंतीं, सा जगौ देवि यन्मया । श्रीयुगादीशदृष्यग्रे, प्रोक्तं तन्नान्यथा भवेत् ॥ ९२ ॥ किं च ज्ञानिवचोऽप्यस्ति, तदभिज्ञानयोगतः । एतदेवं मया चक्रे, मिथ्यादुष्कृतमस्तु नः ॥ ९३ ॥ इत्युक्त्वा मौनमालंब्य, स्थिता सा जगदे तया । त्वां विना सखि मेऽनाथ, कथं यास्यंति वासराः ॥ ९४ ॥ ततो राज्या मरीभिश्च, तत्र पौरजनैरपि । चक्रेऽनेकविधस्तस्या, महाननशनोत्सवः ॥ ९५ ॥ साथ त्रिभिर्दिनैः सिद्धा, संस्कृता चंदनादिभिः । ततो विमुच्य शोकं सा, तां स्मरंत्यनिशं स्थिता ॥ ९६ ॥ कुमारोऽपि तदा तत्रा–गतो दृष्ट्वा नृपप्रियां । तस्मान्निर्गत्य तद्राद्यं, ज्ञात्वा तामनुमोदयन् ॥ ९७ ॥ पित्रा महाखिलां वार्ता, तदीयां निर्मदं वदन् । वयस्यैः सवयस्कैश्च, शतशः सुभटैर्वृतः ॥ ९८ ॥ अप्युच्चैः प्रोच्य किं शुक्या, महसानशनं कृतं । एतन्न ज्ञायते सम्यक्, शृण्वन्निति प्रजागिरः ॥ ९९ ॥ एत्य धामनिधिर्धाम्नि, स्वीये स्वीयानमोदयत् । व्योमाश्रितो यथा चंद्र–श्चकोरान् खलु निर्मलः ॥ ५०० ॥ चतुर्भिः कलापकं ॥

अन्यत्र धीधनो मंत्री, तत्राभूत्तस्य नंदनौ। मतिराजसुधीराजौ, वसतस्तत्पुरांतरा ॥ १ ॥ आद्योऽमात्यपदं धत्ते-ऽनुजोऽप्यथानुजप्रिया । कमला तत्तनूजोऽस्ति, गुणचंद्रो गुणांबुधिः ॥ २ ॥ श्रीचंद्रस्य वयस्तुल्यः, प्रीतिस्थानमभूत्र सः । यभौ मिथस्तयोर्मैत्री, क्षीरनीरप्रयोगवत् ॥ ३ ॥ विनयेन विवेकेन, भक्त्या च भूरिसेवया। तेनाकारि तथा सोऽभूत्, श्रीचंद्रस्तन्मना यथा ॥ ४ ॥ विश्रब्धस्यापि तस्याभू-न्मनसः पश्यतोहरः । गुणचंद्रस्तथाप्येष, जज्ञे चित्रं सतां वरः ॥ ५ ॥ इतश्च चिंतयामास, पिता बाल्ये वयस्ययं । कुमारः पाठ्यते नूनं, तादृशः कोऽस्ति पाठकः ॥ ६ ॥ अथ गंगा (प्राच्य) नदीतीरा-त्कुर्वन् ग्रामानितस्ततः । गुणंधर उपाध्याय-स्तत्रैतः श्रेष्ठिना श्रुतः ॥७॥ ये चित्तज्ञादयो भृत्या, भूपस्य संति विश्रुताः । तेषां गुरुरयं सर्व-विद्याप्रवीण आर्हतः ॥ ८ ॥ बृहस्पतिरिवाशेष ( बृहत्परंपरायात )-शास्त्राम्नायविशारदः। ना(नी)तिवृद्धः सुधीः शांतः,क्षमावान् स्फुटवाग्वशी ॥ ९ ॥ शस्त्रशास्त्रार्थमर्मज्ञो, बुध्ध्वेति श्रेष्ठिना ततः । निमंत्र्य बहुसन्माना-त्सोऽर्थितः पुत्रपाठने ॥ १० ॥ त्रिभिर्विशेषकं ॥ तेन पृष्टः क ते सूनु-स्तदा श्रेष्ठ्याह्वयत्सुतं । श्रीचंद्रः पितुरादेशा-ल्लावण्यशीलतागृहं ॥११॥ तत्रागत्य गुरोः पादौ, नत्वा पितुरपि क्रमौ । विनयादुचितस्थान-मशिश्रयच्छमाश्रयः ॥ १२ ॥ युग्मं ॥ पंडितोऽपि कुमारं तं, सर्वलक्षणलक्षितं । विनयादिगुणैः पूर्णं, योग्यं विज्ञाय सर्वतः ॥ १३ ॥ अपि गंतुमनास्तस्य, भक्त्या रंजितमानसः । ओमित्युवाच पुण्यार्थ-मुपाध्यायः स निःस्पृहः ॥१४॥ युग्मं ॥ बलाद्ददद्धनं श्रेष्ठी, तेनोचे श्रेष्ठिपुंगवं। धनैः किमुपकाराय, नाहं च श्रुतविक्रयी ॥१५॥ विनयेन गुरुर्विद्यां, दत्ते विद्यां च विद्यया । विद्यां धनैश्च तत्राद्यः, पुण्यात्मा द्वौ तु लोभिनो ॥१६॥ महर्घ्याभरणैरेनं सत्करिष्याम्यनुक्रमात् । विमृश्येवं जगौ श्रेष्ठी, तत्किमत्र विलोक्यते ॥१७॥ विद्या-

नाह ततः श्रेष्ठिन्, स्थानं तत्कापि त्व कुरु । श्रेष्ठ्याह प्रागमयावासा, लक्ष्मीपुर नृपाज्ञया ॥ १८ ॥ तत्र संति ममावासा, भूमिरप्यस्ति पुष्कला । पूज्य प्रसीद नस्त्वं यत्, सन् स्वयं ह्युपकारकः ॥ १९ ॥ युग्मं ॥ ततो विलोक्य स प्राज्ञः, स्थानकं तत्समंततः । शास्त्राभ्यासयोग्यत्वा–द्रमेतजगाविति ॥ २० ॥ ततो मुहूर्त्तमादाय, भव्ये चंद्रे शुभेऽहनि । श्रेष्ठी चकार तल्लेख–शालाकरणमद्भुतं ॥ २१ ॥ पंडितोऽपि तदा शुद्ध–वस्त्राभरणभूषितः । श्रीचंद्रं विनयावंत–श्चेहिश्च भूषितं द्विधा ॥२२॥ ॐकारारंभपूर्वं च, निनाय भणितिं विधेः । श्रेष्ठिना तत्र सर्वेषां, दत्तं तत्समयोचितं ॥ २३ ॥ युग्मं ॥ ततस्तेन तथासेवि, गुणंधरक्रमद्वयं । क्रमाद्यथापि सूत्रार्थ–क्रमद्वय्यविलंबतः ॥ २४ ॥ सम्यग्विनयतस्तस्मि–न्नेवाभूत्स गुणोच्चयः । नम(मं)ती च(व) धनुष्येव, नार्ध(द्र)वंशे(श)न तेऽपि हि ॥ २५ ॥ छात्रेषु बहुषु सत्सु(सत्यप्यत्र बहुच्छात्रे), स एवा-लोक्यते जनैः । सहस्रांशौ स्थिते व्योम्नि, किं पश्येत्कोऽपि तारकान् ॥ २६ ॥ न तेन पठनायैव, गुरूपास्तिर्विनिर्ममे । किं तु तस्य गुणश्लेषा–न्न सेहे विरहो मनाक् ॥ २७ ॥ सोऽथाभूल्लक्षणच्छंदो–ज्योतिःशास्त्रविशारदः । सर्वा(तर्का)लंकारसाहि-त्य–गणितागमपारगः ॥ २८ ॥ तथा सामुद्रिकं शालि–होत्रप्रश्नोत्तरादिकं । नाडिचेष्टालग्नहोरा–कालज्ञानं स्वरोदयं ॥ २९ ॥ कल्पविद्यारसज्ञानं, मलमूत्रपरीक्षणं । नाटकं पिंगलं चापि, स ज्ञात्वाभ्यस्तवान् गुरोः ॥ ३० ॥ युग्मं ॥ स्वर्ण-रत्नपरीक्षाद्या, गजशिक्षादिकास्तथा । लेखनाद्याः कलाः सर्वा, अचिराच्चेन शिक्षिताः ॥ ३१ ॥ पंडितेन ततः शास्त्र–विद्याधीताखिलामुना । इत्युक्त तं गुरुं श्रेष्ठी, बभाषे तनयस्य मे ॥३२॥ क्षत्रयोग्यास्त्रविद्याया, अप्यभ्यासोऽथ कार्यतां । सोऽप्यकारि ततस्तेन, कुमारस्य स चाययौ ॥ ३३ ॥ युग्मं ॥ राधावेधावधिर्दीप्ता, धनुर्विद्याखिलाप्यहो । गुरुप्रसादतस्तस्य

क्र(श्र)मात्पाणिगताऽजनि ॥ ३४ ॥ गुरोः शास्त्रं तु तद्बुद्ध्या-दर्शवत्प्रतिबिंबितं। जले तैलमिवैतस्य प्रससार मतिः श्रुते॥३५॥ गुरुर्ज्ञाता हि शास्त्रस्य, नाभ्यस्तास्मिन्ननेन तु। ज्ञातेऽभ्यस्ते गुरोरूर्ध्व-तरः शिष्यस्तदेत्यभूत् ॥ ३६ ॥ सर्वतः सर्वशास्त्रेषु, कुमारे कुशले सति। स्वमत्र प्रत्युपाध्यायो, जज्ञे जिगमिषुस्तदा ॥ ३७ ॥ तद् ज्ञात्वा मदनायातं, कुर्वंतमश्रुमोचनं। कुमारं म्लानवक्त्राब्जं, दिवाऽभ्रस्थेंदुबिंबवत् ॥३८॥ दृष्ट्वा श्रेष्ठ्युच्छलद्दुःखा-त्समालिंग्य दृढं जगौ। किमेतद्वत्स किं दुःखं, किं निःश्वसिषि मा रुदः ॥३९॥ यतोऽहं यद्यपि स्वर्णं, क्षरद् द्रष्टुमलं परं। तव नेत्राश्रुनीरं य-च्चन्मा क्षरतु लघ्वपि ॥४०॥ अद्ययाव-न्मुखं साश्रु-विकृतं च रुदत्तव (मरुद् तव)। दृष्टं कदापि नास्माभि-रद्यैवं पुत्र तच्च किं ॥ ४१ ॥ किं वा किंचिन्मया प्रोचे, त्वन्मात्रा गुरुणाथ किं। न वादेशस्त्वयापालि, केनापि सुहृदादिना ॥ ४२ ॥ पित्रेत्युक्ते च दंतार्चि-राच्छादितरदच्छदः। कुमारस्तमभाषिष्ट, तात दुःखमिदं न मे ॥ ४३ ॥ त्वत्प्रसादान्न मे किंचि-न्न्यूनं सुख्यस्मि सर्वतः। किं तु गंतुमनाः पूज्यो, हृन्नेत्रोद्घाटकोऽस्ति यः (ऽभितः) ॥ ४४ ॥ नाहं तद्विरहं सोढा, कोऽथ दास्यति मे मतिं। तत्त्वदर्शकोऽधुनान्यो मे, व्यपोहिष्यति संशयान् ॥४५॥ तावतानुमतिं तेषां, लातुं स पंडिताग्रणीः। तत्रैतस्तदवस्थं द्रा-गद्राक्षीत्कुमरं तथा ॥४६॥ अहो भक्तिरहो स्नेहो, विनयादिगुणा अहो। अहो अगर्व्यमस्यैव, मुहुर्मुहुः शशंस तं ॥४७॥ श्रेष्ठ्यप्युवाच मेधावि-न्निजशिष्य-समाधये। स्थीयतां तु कियत्कालं, श्रीगुरुः स तथाकरोत् ॥४८॥ किं न कुर्वंति दाक्षिण्या-न्महांतस्तादृशा यतः। श्रीचंद्रोऽपि जहर्षोच्चै-र्गुरुसौम्यदृशांचितः ॥ ४९ ॥ श्रीचंद्रस्य हृदंभोधि-र्गुरुचंद्रास्यचंद्रतः। तयोल्लास तद्रूपं-नीरं न काप्यमाथया ॥ ५० ॥

इतः प्रतापसिंहेशो, लात्वा रत्नपुरं हठात् । रिपुं जित्वाष्टवर्षांत-र्देशांतरभितः स्थितः ॥ ५१ ॥ ततस्तत्र प्रवर्ताप्य,
निजाज्ञां स कुशस्थले । आगात्तदा नृपामात्या-दयः सर्वेऽपि पूर्जनाः ॥ ५२ ॥ गच्छंति सन्मुखं राज्ञः, शृंगारितं च तत्पुरं ।
श्रेष्ठ्यप्यगादितोऽपूर्वां, भेटां लात्वा सनंदनः ॥ ५३ ॥ युग्मं ॥ तत्र गत्वात्मना नेमे, पृथ्वीशस्तत्सुतेन च । क्रमादालापिताः
सर्वाः, प्रजाः श्रेष्ठ्यपि भूभृता ॥ ५४ ॥ इतः श्रेष्ठिसमीपस्थं, सूनुं सर्वांगसुंदरं । दृष्ट्वापृच्छि नृपेणायं, कः श्रेष्ठ्याह च
सत्सुतः ॥ ५५ ॥ तुष्टस्तदांतरस्नेहा-त्कणकोड्डपुरं ददौ । नृदेवस्तस्य यद् दृष्ट्वा, प्राक्स्नेहो ज्ञायते न किं ॥ ५६ ॥ ततोऽति-
विस्तराद्भूभु-ग्ददद्दानं यथोचितं । निजसौधमलंचक्रे, कृत्यं कृत्वा सुखं स्थितः ॥ ५७ ॥ इतो दत्त्वा कुमारस्य, स्नेहाद्गुणंधरो
गुरुः । धारादिबंधकृद्दिव्य-मूलिकां स्वपुरे ययौ ॥ ५८ ॥

पुरे तत्राथ संत्यष्टौ, धनप्रियधनादयः । व्यवहारिवरा धन्याः (न्या-), कमलादिप्रियायुजः ॥५९॥ तेषां धनवतीलक्ष्मी-
मुख्याः पुत्र्योऽखिलास्तु ताः । रूपलावण्यचातुर्य-श्रियां केलिपदान्यलं ॥ ६० ॥ ता अष्टावपि पंचेषु-विकारनिकरास्पदं ।
प्रापुः क्रमेण तारुण्यं, तदा तत्पितृभिः स्वयं ॥ ६१ ॥ चंद्रवत्सकलं सौम्यं, श्रीचंद्रं वीक्ष्य तत्सुतं । स्वपुत्रीणां वरं कर्तुं, लक्ष्मी-
दत्तोऽर्थितस्ततः ॥ ६२ ॥ युग्मं ॥ श्रेष्ठी सोऽप्यभितो योग्या-स्ता विज्ञाय निजं सुतं । कन्याभिस्ताभिरुत्तुंगे-रुत्सवैः पर्यणी-
नयत् ॥ ६३ ॥ कुमारोऽप्यष्टभार्याभिः, स्वामिहृत्प्रतिबिंबनात् । रेजे द्विगुणिताभिस्तु, कलाभिरिव चंद्रमाः ॥ ६४ ॥ कमले
कमला तेन, साप्यस्य करवारिजे । सकलंकः शशी तस्मा-द्वक्त्रेंदौ नेत्रकृष्णता ॥ ६५ ॥ चंद्रे नित्योदिते चा(त्रा)स्मि-न्नित्यं
म्लास्यति पंकजं । इतीव तद्विहायागात्, श्रीरस्य नाम्नि धाम्नि च ॥ ६६ ॥ रेजे गुणौघमाणिक्यैः, कुमारो रोहणाद्रिवत् ।

इंद्रवद्विवुधैश्चर्याद्, इच्छेत्रानंदनोऽभवत् ॥ ६७ ॥ अपूर्वोऽयं सुवर्णाद्रि–र्गौरवाद्यस्य नावधिः । हृदंतर्जिनबिंबानि, गुणरत्नमयः
सदा ॥६८॥ गदैवं नव्यकाव्यैः स, स्तूयमानः कवीश्वरैः । स्वेच्छया व्यलसल्लक्ष्मीं, दानादिपुण्ययोगतः ॥६९॥ पंचभिः कुलकं ॥
गुणचंद्रः (द्र) सुहृत्साक–मेकदा स कुमारराट् । क्रीडां कर्तुं पुरोद्याने–ऽगमत्तावद्ददर्श च ॥७०॥ सरस्तीरे कृतावासा–नश्व-
विक्रयकान्नरान् । हयान् रविरथोत्तीर्णा–निवालोक्य तदंतिके ॥ ७१ ॥ मित्रं प्राह सुहृत्पृच्छ, वाजिनां मूल्यमस्ति किं । तेन
पृष्टस्ततस्तेषां, वृद्ध एकः पुमान् जगौ ॥ ७२ ॥ त्रिभिर्विशेषकं ॥ ससयः शृणु कल्याणिन्, विक्रीता बहवोऽधुना । संति जात्यु-
त्तमाः प्रौढ–मूल्याः षोडश ते त्वमी ॥ ७३ ॥ तन्निशम्य कुमारोऽश्वा–नालोकयन् पृथक्पृथक् । जगदे सुहृदा स्वामिन्, कोऽमी-
षामुत्तमो हयः ॥ ७४ ॥ कुमार आह पुण्यात्म–न्नयं गंगाजलैः सितः । चरणास्यादिभिः शुक्लै–स्तार्क्ष्योऽयमष्टमंगलः ॥ ७५ ॥
रक्तवर्णः किराहोऽयं, खुंगाहः श्यामलो ह्ययं । चित्रवर्णो हलाहोऽयं, सराहोऽयं घृतप्रभः ॥७६॥ ईषत् श्वेतः कृष्णजंघ, उरा-
होऽयं हयोत्तमः । मनाक्पीतः कृष्णजानुः, कुलाहो वेगवानयं ॥७७॥ पीतरक्तः कृष्णजानु–रोकनाहस्त्वयं हयः । हरिकोऽयं
नीलकोऽयं, हो(हा)लकश्चैष(षु) मन्मते ॥ ७८ ॥ एतौ तु पंचभद्रीयौ, तेषां मध्ये जवाधिकौ । हृत्पृष्ठिवक्त्रपार्श्वेषु, पुष्पितौ
लक्षणान्वितौ ॥ ७९ ॥ रैलक्षेणाधिकेनापि, न प्राप्येते हयोत्तमौ । अथैतौ नृपवर्गीया–स्तत्रैयुर्भूपजादयः ॥ ८० ॥ केचित्पादोन-
लक्षेण, लक्षार्धेन न केचन । प्रौढाः प्रौढा विलोक्याश्वा, गृहीतास्तैर्निजेच्छया ॥ ८१ ॥ गतेषु तेषु सर्वेषु, तार्क्ष्यान् लात्वा
स्वसदनि । महर्घ्यानुचहेतुभ्यां, तत्रास्थुस्तुरगास्त्रयः ॥ ८२ ॥ परीक्ष्य कुमरस्तेषु, पंचभद्रावुभौ स तौ । वायुवेगमहावेगा–
... लात्वा ययौ निजा-

लये ॥ ८४ ॥ युग्म ॥ मित्रशत्रू तु सर्वेषां, भवतस्तेन तत्र हि । तदैक कोऽप्युवाचैवं, श्रेष्ठिन् पश्यांतरं कियत् ॥ ८५ ॥ त्वत्पुत्रेण विदग्धेना-प्येतौ व्यवहृतौ हयौ । लक्षद्वयेन त्वंगा-वितः प्रौढतरा अमी ॥ ८६ ॥ अश्वास्तदर्धमूल्येन, गृहीता मंत्रिजादिभिः । सुतः कुतः स पित्राज्ञां, मूर्ध्ना वहति नात्र यः ॥ ८७ ॥ त्रिभिर्विशेषकं ॥ श्रेष्ठ्याह संभ्रमाद् हुं भो !, मा मा गाढस्वर लप । किमग्रेऽभूत्स्वामद्यास्ति, यत्तत्स्यैव भाग्यतः ॥ ८८ ॥ अस्य प्राक्कर्मभिर्नीतं, नैव न्यूनं धनं भवेत् । दूर्वाहृ-पांसु भूयेन, लीयमानं मुहुर्न किं ॥ ८९ ॥

इतस्तत्रैत्य पुत्रेण, विज्ञप्तो जनकः स्वयं । तात क्रीतं मया वाजि-द्वयं लक्षद्वयेन च ॥ ९० ॥ वर चक्रे वदन्नेनं, हस्ताभ्यां स तदा चिर । पुत्रमासितवान् स्वाके, मुकुटे मण्यरत्नवत् ॥ ९१ ॥ पित्रादेशात्ततस्तेन, खचितोर त्नगारुडैः । सुवेगाभ्यो रथोऽकारि, जगतीजनमोहनः ॥ ९२ ॥ नृपसारथिजन्मैक-स्तत्कर्मकुशलोऽभितः । कुमारसेवामग्रेऽपि, कुर्वन्नास्ते धनंजयः ॥ ९३ ॥ स्वामिचित्तानुगः स्नेही, गंभीरहृदयस्तदा । भक्तिवान् सारथिश्चक्रे, हृदि प्राप्तः परीक्षया ॥ ९४ ॥ युग्मं ॥ शुद्धवासरमालोक्य, समित्रः पितुराज्ञया । चुच्का(चूल्का)रिताश्वसर्वांग-कृतस्पर्शः स सूक्ष्मधीः ॥९५॥ तत्परीक्षार्थमारुह्य, ततः सज्जीकृतं रथं । निर्ययौ तत्पुरादेकां, दिशमादाय वेगतः ॥ ९६ ॥ युग्मं ॥ मुक्तौ तौ चलितावेवं, तद्रथस्थैस्त्रिभिर्यथा । द्रुनगादि भ्रमत्सर्वं, ददृशे सुमुचे क्षणात् ॥ ९७ ॥ यामार्धेन ततो गत्वा, स पंचदशयोजनीं । तत्र स्थित्वा क्षणं पश्चा-त्से तथैवापपुर्गृहे ॥ ९८ ॥ एवमाशासु सर्वासु, स्वेच्छयाद्रिवनादिकं । ससखा रथसान्निध्या-दन्वहं स व्यलोकयत् ॥ ९९ ॥ यदा कदा पिता पृच्छे-द्वेलातिक्रमकारण । तदोचे तावता तत्र ( तेन तातात्र ), स्थितोऽहं च पुराद्बहिः ॥ १००॥

श्रेष्ठी प्राह न वत्स! त्वां, विनाहं नापि वच्मि तत्। क्रीडा च क्रियते स्वैरं, सद्यश्चागम्यते गृहं॥ १ ॥ सोऽवदत्तात!
योग्योऽयं, पूज्यस्नेहो ममोपरि। परं नियंत्रणा स्वेच्छा-क्रीडाविघ्नविधायिनी ॥२॥ दोषोऽप्येषोंतरायस्य, संभवन् घटते मम!
श्रेष्ठ्याह पुत्र! यद्येवं, समाधिस्ते तथास्तु मे ॥३॥ अन्यदा स रथारूढ-स्त्रिकूटे पर्वतेऽगमत्। तत्रास्ति भैरवाभिख्यो, योगी
पद्मासनस्थितः ॥ ४ ॥ कुमारेण नतो योगी, दृष्टस्तद्गुणलक्षणैः। जगौ वत्स लघीयांस्त्वं, रत्नाभरणभूषितः ॥ ५ ॥
स्वर्णस्यंदनयोगेन, दुष्टव्याघ्रादिजंतुभिः। विषमायां महाटव्या-मस्यामागाः किमेककः ॥ ६ ॥ युग्मं ॥ कुमारः प्राह
योगींद्र!, क्रीडार्थं स्वपुराद्वनं। आगानयानिहाप्यागां, कौतुकानि विलोकयन् ॥७॥ युष्मादृशां प्रसादान्मे, न भयं कुत्रचि-
द्भवेत्। ततः साहसिकं ज्ञात्वा, श्रीचंद्रं प्राह भैरवः ॥ ८ ॥ तत्त्वं मे मंत्रसिद्ध्यर्थं, शास्त्रोक्तविधिपूर्वकं। निशीथेऽद्य श्म-
शानेऽस्मिन्, भवस्युत्तरसाधकः ॥ ९ ॥ ओमित्युक्ते कुमारेण, विधिवन्निशि योगिना। आहुतिं दातुमारेभे, तत्पार्श्वेऽस्थात्स
एककः ॥ १० ॥ तथाविधं च तं वीक्ष्य, सिद्धो योगी प्रियं जगौ। मत्त्विस्त्वया न विश्वस्यं, कदाप्यथान्ययोगिनां ॥ ११ ॥
परीक्षितो मया हि त्वं, तुष्टोऽस्मि तव पौरुषात्। लाहीमां मूलिकां सर्व-क्षुद्रप्राण्यंधकारिणीं ॥ १२ ॥ महाप्रसाद इत्युक्त्वा,
श्रीचंद्रस्तां ललौ विधेः। तं नत्वा च तदादेशा-त्तथैव स्वगृहे ययौ ॥१३॥ एवं च नित्यशः क्रीडां, स्थाने स्थाने कुमारराट्।
विधत्ते स्वेच्छया चित्रां, रथमित्रादियोगतः ॥ १४ ॥ क्वचिद्विद्यां क्वचिद्योगं, क्वचिद्विषहरं मणिं। अन्यच्चापि भुवि क्रीडन्,
सोऽपूर्वं प्राप सद्यपि ॥ १५ ॥ इति श्रीश्रीचंद्रचरित्रे श्रीचंद्रजन्मोत्पत्त्यादिवर्णनो [illegible] समाप्तः ॥ श्रीरस्तु ॥

# ॥ अथ द्वितीयोऽधिकारः प्रारभ्यते ॥



अथैकदा निजावासो-परि वातायनेऽद्भुते । सवयस्यः कुमारेंद्रो, दोलापल्यंकसंस्थितः ॥ १ ॥ अनेकवाद्यनिर्घोषैः,
पूरिताशांतरोद्धुरान् । रथाश्वगजपत्तीनां, समूहेन परिवृतान् ॥ २ ॥ महत्या शोभयामात्यैः, सार्धं निर्गच्छतः सतः । अद्रा-
क्षीद्राजमार्गांत-र्जयादीन् पार्थिवात्मजान् ॥ ३ ॥ त्रिभिर्विशेषकं ॥ पप्रच्छ च वयस्यं स्वं, कोऽयमाडंबरः सखे ! । ब्रूते स्म
ज्ञातवृत्तांतो, गुणचंद्रो विवेकवान् ॥ ४ ॥ स्वामिंस्तिलकपुराख्ये, याम्युदिग्मुखमंडने । अस्ति श्रीतिलको राजा, रतिस्तस्य
प्रिया प्रिया ॥ ५ ॥ विश्वश्री(श्री)तिलकं तस्याः, पुत्री तिलकमंजरी । क्रमात्सा यौवनं प्राप, चतुःषष्टिकलान्विता ॥ ६ ॥
सभायां सान्यदा सर्व-साक्षिकं कृतनिश्चया । राधावेधविधातारं, वृणोमि नापरं नरं ॥ ७ ॥ ततस्तत्र स भूभर्ता, तदध्यापक-
साक्षिकं । राधावेधादिसामग्रीं । शास्त्रयुक्त्या व्यधापयत् ॥ ८ ॥ ततः कुंकुमपत्र्यामी, अन्येऽपि नृपपुंगवाः । तत्राहूता मिलि-
ष्यंति, स्वयंवरणमंडपे ॥९॥ मुहूर्ते वासरैः सप्त-दशभिस्तत्र विद्यते । योजनानामशीत्या तत्, पुरं चास्तीति बुद्ध्यतां ॥१०॥
इत्यालापं मिथस्तौ द्रा-क्कुर्वंतावयबुद्ध्य हि । लक्ष्मीदत्तोऽवदत् श्रेष्ठी, गुणचंद्र पृथक्कृतं ॥ ११ ॥ वत्सः श्रीतिलके पुरे,
श्रीचंद्रः कौतुकप्रियः । राधावेधादिकं द्रष्टु-कामोऽस्ति पृच्छ सत्वरं ॥ १२ ॥ तेन श्रीकुमरस्याग्रे, पितुर्वाक्यं निवेदितं ।
परं स सच्चवान् धीरः, श्रुत्वैव तद्वचः स्थितः ॥ १३ ॥ षोडशेऽह्नि समायाते, संध्यायां स कुमारराट् । सार्धं सारथिमित्रा-

स्यां, रथस्थस्तत्पुरं प्रति ॥ १४ ॥ पित्रादींस्ताननापृच्छ्य, चचालाचलमानसः । अतिक्रामन् क्रमादद्रि–सरःपुरतरून् वहन् ॥ १५ ॥ प्रातस्तन्नगरोद्यान–मासो वसुभरारुणः । चर्यः सूर्यवतीसूनु–रुदयाद्रिमिवार्यमा ॥१६॥ त्रिभिर्विशेषकं ॥ रथं मुक्त्वा समित्रः सन्, स राधावेधमंडपं । अभितो मनुजव्रात–ध्वनिकोलाहलोध्धुरं ॥ १७ ॥ मंचोन्मंचमहाशोभ–मनेकनृपसंकुलं । प्रविवेश तदाश्चर्यं, स्थाने स्थाने विलोकयन् ॥ १८ ॥ युग्मं ॥ तदा तत्र कुमारेंद्रः, स्थापितं शास्त्रयुक्तितः । स्तंभं तदुपरि भ्राम्य–चक्राष्टकं क्रमोत्क्रमात् ॥ १९ ॥ तदूर्ध्वं रचितां मीन–पुत्रिकां च व्यलोकयत् । तस्या वामाक्षितारां च, राधेतिनामविश्रुतां ॥ २० ॥ युग्मं ॥ स्तंभाग्रे भुवि विन्यस्ते, कटाहे तैलसंभृते । प्रतिबिंबति तत्सर्वं, तदग्रे च धनुः शराः ॥ २१ ॥ ऊर्ध्वमुष्टिरधोदृष्टि–र्धन्वी योऽत्र विशुद्धधीः । तां राधां सर्वचक्रांत–र्भूत्वा बाणेन वेधयेत् ॥ २२ ॥ राधावेधविधायी स, ज्ञेयो भाग्याधिकः पुमान् । मित्रमेवं प्रजल्प्यास्था–त्कुमारस्तत्र यावता ॥ २३ ॥ तावतानेकवाद्यौघे, वाद्यमाने नृपांगजा । समागान्मंडपे तस्मिन्, भूपादिपरिवारयुक् ॥ २४ ॥ सुखात्सुखासनोत्तीर्णा, वरमालोल्लसत्करा । स्तंभस्य दक्षिणे पार्श्वे, साऽस्थान्नेत्रप्रमोददा ॥ २५ ॥ चतुर्भिः कलापकं ॥

इतस्तत्र नृपाः केचि–त्केचिच्च नृपसूनवः । श्रीषेणहरिषेणाद्याः (श्रीषेणाद्या जयाद्याश्च ), समेताः संति भूरिशः ॥२६॥ ततः श्रीतिलकादेशा–द्भट्टेन ते नृपोत्तमाः । स्वस्वाख्यापितृवंशादि–जाति(निज)देशपुरादिकं ॥२७॥ प्रत्येकं प्रकटीकृत्य, राधावेधस्य कर्मणि । प्रोत्साहिताः क्रमात्सर्वे, स्तंभपार्श्वे समाययुः ॥२८॥ युग्मं ॥ तत्र स्थितधनुर्बाणं, दृष्टमत्र ( स्थितिधनुर्बाणदृष्टिमंत्र ) क्रियाविधिं । तैरन्यथा प्रकुर्वद्भिः, सर्वं हास्यमयीकृतं ॥ २९ ॥ तेषां मध्ये न केनापि, धनुर्विद्या ह्यसाधि सा ।

नृणां हास्यपदं प्राप्ता, वाणोज्झनविधिस्तत्र । केवलं समजायत ॥३०॥ लज्जानम्रा विलक्षास्या-स्ते मिथो विहि(ह)तेक्षणाः । नृणां हास्यपदं प्राप्ता;
बाणोज्झनविधिस्तत्र । केवलं समजायत ॥३१॥ नरवर्मनृपेणापि, चक्रमेकमवेधि तत् । शरभंगे ततो जाते, विलक्षः सोऽप्यभूत्तथा ॥३२॥ कामपा-
जयाद्यास्तत्र जज्ञिरे ॥३१॥ नरवर्मनृपेणापि, चक्रमेकमवेधि तत् । शरभंगे ततो जाते, विलक्षः सोऽप्यभूत्तथा ॥ ३३ ॥ तत्रैते कुमरा दक्षाः, स्वयं विमृश्य मानसे ।
लश्च वामांगः, सुभगांगनृपांगजः । श्रीमल्लो वरचंद्रश्च, दीपचंद्रनरेंद्रयः ॥ ३३ ॥ तत्रैते कुमरा दक्षाः, स्वयं विमृश्य मानसे ।
दुष्करत्वमिहास्तीति, स्वस्थान एव संस्थिताः ॥३४॥ तदा श्रीतिलको राजा, कन्या तिलकमंजरी । परिवारश्च सर्वोऽभू-च्चिंता
त्तोऽध्यापकादिकः ॥३५॥ तथाभूतेषु सर्वेषु, स पुनः प्राह भट्टराट् । भो जनाः ! श्रूयतां धन्वी, कोऽप्यस्ति योऽत्र दुःखहंत
॥३६॥ तस्मिन्नवसरे मित्रं, श्रीचंद्रं प्राह सत्वरं । देवायं समयः श्रेयान्, राधावेधकृताविह ॥३७॥ श्रीमद्भिः सा धनुर्विद्या,
स्मारितात्र विलोक्यते । तेन यूयं कृपां कृत्वा, प्रसीदतात्र कर्मणि ॥ ३८ ॥ मित्रेण प्रेरितस्तत्र, स्तंभाग्रे शुद्धभूतले ।
प्रादुर्बभूव तेजस्वी, श्रीचंद्रः स कलानिधिः ॥ ३९ ॥ सज्जीभूय गुरुं नत्वा, भूमिं धनुः शरादि च । चापं गुणेन संयोज्यं,
त्रिष्टंकारवपूर्वकं ॥ ४० ॥ शास्त्रोक्तविधिना सम्य-ग्निरीक्ष्य शरमोक्षणात् । राधावेधं स पुण्यात्मा, साधयामास तत्क्षणात्
॥ ४१ ॥ युग्मं ॥ उच्छलज्जयशब्दौघैः, प्रमोदात्सा कनी तदा । चिक्षेप वरमालां तां, कुमारकंठकंदले ॥४२॥ अहो भाग्यमहो
रूप-महो विद्या त्वहो बलं । अहो मंत्रविधिश्चास्य, बुद्धिरेषाप्यनुत्तरा ॥ ४३ ॥ कोऽयं कस्य सुतश्चेति, प्रोच्चरद्भिर्नृपादिभिः ।
सर्वैः सहागतैस्तत्र, संमर्दः सुमहानभूत् ॥ ४४ ॥ एवं सति करे धृत्वा, स्वमित्रं स कुमारराट् । जनानामंतरे भूत्वा, निजं
रथमुपागमत् ॥ ४५ ॥ स्थीयतां कुलरत्नैषां, पूर्यतां च मनोरथाः । स्वपित्रोः क्रियतां हर्षः, कन्याकरग्रहादिना ॥ ४६ ॥
जल्पंतमिति तं मित्रं, कुमारः प्राह निःस्पृहः । पित्रोरकथनेनावा-मायातौ वेत्सि नात्र किं ॥ ४७ ॥ विलंबः क्रियते तत्किं,

गम्यते मित्र ! मत्वरं । उक्त्वेति रथमारुह्य, मित्रेण सह सोऽचलत् ॥ ४८ ॥

इतश्च बंदिलोकेन, श्रेष्ठिगुरुपलक्षितः । सर्वेषां पुरतस्तस्य, चरित्रं चाकथि स्फुटं ॥ ४९ ॥ कुशस्थलपुरे लक्ष्मी-दत्तस्य व्यवहारिणः । सुतः श्रीचंद्रनामाय-मुदारोऽष्टप्रियावरः ॥ ५० ॥ पठितं च-विबुहगुणंधरपासे, सयलकला जेण सिक्खिया विउला । इब्भसुयाणठण्हं, रमणो सो जयउ सिरिचंदो ॥ ५१ ॥ तथा-जस्स सुवेगरहिल्ला, अस्सुल्लणपवणवेयमहवेआ । निवतोसदिन्नकणकोट्ट-देसपहु एस सिरिचंदो ॥ ५२ ॥ ततः श्रीतिलकेनोचै-रहो गच्छति गच्छति । कुमारोऽयं भटाः पश्चाद्वाल्यतामिति जल्पितं ॥ ५३ ॥ अश्वैः केऽपि रथैः केचि-त्तत्पृष्ठौ धाविताः परं । कुमारं मिमिलुर्नैव, स ययौ वायुवज्जवी ॥ ५४ ॥ अंतश्चमत्कृता भूपाः, शशंसुस्तमहो असौ । सर्वेषां दुष्करं चक्रे, सर्वेषां दुस्त्यजां जहौ ॥ ५५ ॥ तान् पश्चादागतान् रिक्तान्, भटान् ज्ञात्वा स भूपतिः । दुःखितोऽभूत्कनी सापि, मुमूर्छ विललाप च ॥५६॥ हंहो नाथ ! कथं यासि, हा प्राणेश्वर ! मां वृणु । हा कृपापात्र ! मां ब्रूहि, हा स्वामिन् ! मां विलोकय ॥५७॥ दुःसाध्यां यदिमां राधां, संसाध्य गमितं त्वया । सुसाध्या मत्तनूराधा, नाथ तत्किं न साधिता ॥ ५८ ॥ एकवेधो न केनापि, क्रियते त्वं महान् विभो । राधायां हृदये मेऽत्र, वेधद्वयं करोपि यत् ॥५९॥ दूरस्थस्त्वमदृष्टं मद्-हृदंतर्वेधयस्यलं । भित्त्वा दिक्चक्रमत्रेश, नव्यं वेधं करोपि तत् ॥ ६० ॥ रथेन वायुवेगेन, नेत्रयोर्दूरतां गतः । स्वामिन्नीदृग्वपुमांश्चेत्त्वं, हृन्मध्याद्याहि तर्हि मे ॥ ६१ ॥ विलपंतीति सा कन्या, तत्पिता च जयादिभिः । खेदान्निवारितः प्रोचे-र्यदयं नः पुरे गतः ॥ ६२ ॥ पित्रा प्रतापसिंहेन, कणकोट्टपुरादिकं । ग्रासार्थमस्य योग्यत्वा-द्दत्तमस्ति पुरा मुदा ॥६३॥ तेन ग्रहीयतां कन्या, शीघ्रं तत्रेति तद्वचः । श्रुत्वा श्रीतिलकः प्राप, संतोपं

सुतया सह ॥ ६४ ॥ ततस्ते भूधवाः सर्वे, गजाश्वरत्नभूषणैः । राज्ञा सत्कारिताः संतो, हृष्टाः स्वस्वपुरं ययुः ॥ ६५ ॥ अथात्र सा कनी यात्र-त्कुशस्थलपुरं प्रति । प्रस्थातुमुद्यता ताव-द्विज्ञप्तो मंत्रिणा नृपः ॥ ६६ ॥ गतोऽभूद्देव मद्भृत्यो, जयस्योत्तारके तदा । मिथस्तैर्बांधवैर्मंत्रं, निर्मितं श्रुतवानिति ॥६७॥ आत्मीयभृत्यभृत्येना-नेन लज्जापिता वयं । यन्नात्र परिणीतोऽसौ, तद्भाग्यं नः स्फुरत्यहो ॥६८॥ यदाथ राजपुत्रीयं, तत्रैष्यति कुशस्थले । तदा स आत्मनामग्रे, कथं तां परिणेष्यति ॥ ६९ ॥ इति मंत्रिवचः श्रुत्वा, तदा श्रीतिलको नृपः । श्रीचंद्राहूतये तत्र, प्राहिणोद्वीरमंत्रिणं ॥ ७० ॥

इतश्च स कुमारेंद्रः, शीघ्रं प्राप्तो निजे पुरे । तद्वियोगार्त्तचित्तेन, श्रेष्ठिना बहिरीक्षितुं ॥ ७१ ॥ आगतेन द्वितीयेंदुरिवासौ ददृशे तदा । रथोत्तीर्णेन तेनापि, विनयात्स पिता नतः ॥ ७२ ॥ युग्मं ॥ लक्ष्मीदत्तस्ततः स्वीयां-चलेन स्वसुतांगकं । रजस्वलं च वस्त्रादि, प्रमार्ष्टि स्म पुनः पुनः ॥ ७३ ॥ पृष्टवांश्च कुमारेंद्रं, वेलातिक्रमकारणं । तातात्रैवाभवं स्वैरं, क्रीडमान इतस्ततः ॥ ७४ ॥ इत्युक्ते कुमरेणाथ, श्रेष्ठी तुष्णीं स्थितस्तदा । साकं स्वपरिवारेण, सकुमारो गृहे ययौ ॥ ७५ ॥ श्रीचंद्रो यद्यथा वक्ति, तत्सखापि तथा वदेत् । स्वामिचित्तानुगा एव, भवंति हि तथाविधाः ॥ ७६ ॥ कियद्दिवसांतरे तत्र, जयाद्या आगतास्ततः । राधावेधस्य संबंधं, नृपाग्रे विस्तराज्जगुः ॥ ७७ ॥ अंतश्चमत्कृतोऽप्योच-त्प्रतापसिंहभूपतिः । हुं स्वीयपुरवास्तव्य-श्रेष्ठिसूनुः स्वकीयकः ॥ ७८ ॥ कुमारोऽयं पुरादर्शी, रूपकांतिगुणाधिकः । ईदृग्धन्वी भवेद्यस्य, जयश्रीस्तस्य सर्वदा ॥ ७९ ॥ अनेन तत्र यो लब्धः, साधुवादः स्वभाग्यतः । स जानेऽमीभिरात्मीयैः, पुत्रैर्लब्धो जयादिभिः ॥ ८० ॥ दुष्करां कुर्वता तेन, राधावेधकृतिं परां । मन्नाम सर्वदेशेषु, स्थापितं यशसा सह ॥ ८१ ॥

कदाभ्यस्तमनेनैत-त्सन्निधौ कस्य सद्गुरोः । लघोरप्यस्य पौरुष्यं, श्लाघ्यं ( दाक्ष्यं ) चेति शशंस तं ॥ ८२ ॥ मतिराज-
स्तदाचोच-न्मंत्री, देवेदमद्भुतं ।·श्रीचंद्रोऽयं कदा तस्यां, ययौ कदेह चाययौ ॥ ८३ ॥ अत्रैव दृश्यते नित्यं, लक्ष्मीदत्ता-
त्मसूरसौ । तस्य मद्भ्रातृसूनोश्च, परा मैत्रीति वेद्मि तत् ॥ ८४ ॥ श्रुत्वेति नृपतिस्तत्र, महाश्चर्यं दधद् हृदि । आहूतवां-
स्तदामात्यैः, सपुत्रं श्रेष्ठिनं रयात् ॥ ८५ ॥

इतोऽग्रेऽपि जनैः प्रोक्ते, तद्वृत्तांते श्रुतेऽखिले । श्रेष्ठी स्वपुत्रमुत्संगे, धृत्वा पप्रच्छ हर्षभाक् ॥ ८६ ॥ वत्स ! द्वादश-
भिर्यामै-स्तिलकाख्ये पुरे तदा । गत्वायातः कथं श्रव्य-माश्चर्यं श्राव्यतामिदं ॥ ८७ ॥ लक्ष्मीवत्यपि पुत्रस्य, चरित्रं तच्च
चित्रकृत् । श्रोतुकामा समीपेऽस्था-द्धर्षाश्रुक्लिन्नलोचना ॥८८॥ कुमारोऽथावदत्तथ्यं, सुधामधुरया गिरा । तात ! युष्मत्प्र-
सादेन, प्राच्यपुण्यप्रभावतः ॥ ८९ ॥ रथोऽयं तादृशो मेऽस्ति, तादृशौ च तुरंगमौ । यद्योगेन चतुर्याम्या, गम्यते शत-
योजनीं ॥ ९० ॥ युग्मं ॥ तेनेदमिति संजज्ञे, श्रुत्वा पुत्रोक्तिमीदृशीं । पितरौ हृष्टचित्तौ तं, पुनरप्यूचतुः सुतं ॥ ९१ ॥
कृतोऽसौ ( तत्कृतः ) प्राज्ञकोटीर, राधावेधस्त्वयाद्भुतः । राजपुत्रीवधूतो नो, प्रापितो किं न पूज्यतां ॥ ९२ ॥ चेत्रैरथ-
मुक्तयंतौ तौ, गुणचंद्रेण विस्तरात् । वरमालादिवृत्तांतै-र्हर्षापितौ विशेषतः ॥ ९३ ॥ पूज्यानादेशयोगेन, त्यक्त्वा कन्या-
करग्रहं । शीघ्रागमं ( यातिः ) कुमारस्य, जज्ञे हृत्कामचारिणः ॥ ९४ ॥ अद्य श्वो वात्र सा कन्या, तद्भूपमंत्रिणोऽथवा ।
आयास्यंतीति तद्वाक्यं, श्रुत्वा तौ पितरौ भृशं ॥९५॥ शशंसतुर्निजं पुत्रं, प्रमोदभरनिर्भरौ । अहो गांभीर्यमेतस्य, मित्रयोगस्तु
तादृशः ॥९६॥ अहो पूज्यजने भक्ति-रहो निःस्पृहताद्भुता । अहो रैलक्षयुग्मेन, तदश्वक्रेयदक्षता ॥९७॥ अहो सत्स्वयदातेषु,

न कदात्मप्रशंसनं । अहो पाणिग्रहोत्साहो, राजपुत्र्यामपीह न ॥ ९८ ॥ अहो अतुच्छसौहार्द-महो अमितभापिता १। एवं
प्रशंसनापूर्वं, श्रेष्ठी चक्रे तदोत्सवान् ॥ ९९ ॥ पंचभिः-कुलकं ॥ स्वज्ञातिश्रेष्ठिभिः सर्वं-र्वस्त्रैरक्षतपात्रकैः । सर्वतः पूरयांचक्रे,
श्रेष्ठिगेहं मुदा सह ॥ १०० ॥ गीतगानैर्महादानै-र्जय जीवेति जल्पनैः । स्वस्तिकालेखनैर्नंदा-वर्तैः कुंकुमहस्तकैः ॥ १ ॥
रंभास्तंभातिशोभाभि-स्तोरणै रमणीयकैः । वाद्यैस्तांबूलदानैश्च, तद्गेहमशुभत्तदा ॥ २ ॥ युग्मं ॥ तस्मिन्नवसरे सर्वं-रीक्ष्य-
माणः सुलीलया । मुक्तांकवरचंद्राभः, श्रीचंद्रः स्वगृहं ययौ ॥ ३ ॥ ततो नगराद्बहिः पूर्वं, वासिते श्रीपुरे निजे । नव्यावासे
क्षणं स्थित्वा, स्वेच्छया स कुमारराट् ॥ ४ ॥ पूर्ववत्सह मित्राभ्यां, स्यंदनस्थो निशामुखे । क्रीडार्थं विहगैर्भव्यैः, प्रतीच्यां
दिशि निर्ययौ ॥ ५ ॥ युग्मं ॥

अथ श्रेष्ठी द्वितीयेऽह्नि, तथैव सन्महोत्सवान् । स्वगृहेऽकारयद्याव-त्तावत्तेऽमात्यपुंगवाः ॥ ६ ॥ नृपादेशाद्गजच्छत्र-
चामरादिसमन्विताः । कुमाराकारणायात्रा-ययुः श्रेष्ठिगृहे तदा ॥७॥ युग्मं ॥ श्रेष्ठिना सत्कृता हृष्टा-स्त ऊचुर्नृपभापितं ।
श्रेष्ठिंस्त्वत्पुत्ररत्नं तं, पट्टेभारूढपूर्वकं ॥ ८ ॥ राजचिह्नादिसच्छोभं, सभायामानयोत्सवात् । तद् ज्ञात्वा हृष्टचेतस्कः, श्रेष्ठी
तैर्मंत्रिभिः सार्धं, राजपार्श्वे-
ऽगमत्तदा ॥ १० ॥ राज्ञा श्रीचंद्रवृत्तांते, पृष्टे श्रेष्ठी सुविस्तरं । सुवेगाश्वादिसंयोगा-द्यत्कृतं कुमरेण तत् ॥ ११ ॥ यथास्थितं
नृपस्याग्रे, जगाद किं च भूप्रभो । ईदृक्तुरगखेलाद्यं, मयाप्यस्याधुना श्रुतं ॥ १२ ॥ युग्मं ॥ पुनरप्यद्य कुत्रापि, तथैव क्रीडितुं
घ्रनुं व्यलोकयत् ॥९॥ युग्मं ॥ क्रीडितुं प्रस्थितं बुध्वा, श्रीचंद्रं राड्निदेशतः (रथयोगतः) ।

१ 'मुक्तांकश्चन्द्र चन्द्रास्यः' इति प्रतौ पाठः ।

गतः। कुमारस्तत्र(स्तत) मित्राभ्यां, सह तेनाहमागमं ॥ १३ ॥ ततोऽब्रवीन्नृपः श्रेष्ठिन्, कुमारो भूरिभाग्यवान्। लोकोत्तरचरित्रोऽयं, यदागच्छेत्तदात्र नः ॥ १४ ॥ मेलयेथा यथा ह्येनं, महद्भ्योऽपि महत्तरं। मत्पुत्रेभ्योऽधिकं चैव, करिष्ये नात्र संशयः ॥ १५ ॥ युग्मं ॥ इत्युक्त्वा श्रेष्ठिमुक्तां तां, भेटां लात्वा नृपस्तदा। श्रेष्ठिने तत्कुमारार्थं, वस्त्ररत्नपुराद्यदात् ॥ १६ ॥ नृपं नत्वा ततः श्रेष्ठी, श्रीचंद्रस्य गुणान् बहून्। शृण्वन् पदे पदे दानं, ददत् स्वगृहमाययौ ॥ १७ ॥

इतः सूर्यवतीसूनु–र्भ्रामं भ्रामं महावने। मध्यरात्रे च निद्रालुः, कस्यचिद्भूरुहस्तले ॥ १८ ॥ समातलिं रथं मुक्त्वा, मित्रास्तृतोत्तरीयके। सुखं सुष्वाप सुहृच्च (मित्रोऽसौ), स्थितो जाग्रत्तदंतिके ॥१९॥ युग्मं ॥ तदा तद्वृक्षशाखायां, कीरयुग्ममभूत्स्थितं। कुमारं भालतेजोभि–र्दीप्रं वीक्ष्य तयोः शुकी ॥ २० ॥ शुकं प्रत्यवदन्नाथ, भाग्यवानेष राजभूः। मातुलिंगफलद्वंद्व–मतोऽस्मै तत्प्रदीयतां ॥ २१ ॥ युग्मं॥ राज्यं गुरौ फले भुक्ते, लघौ च स्यादमात्यता। आतिथ्यमीदृशं यद्धि, क्रियते तन्महत्फलं ॥ २२ ॥ इति संजल्प्य वेगेन, गत्वा कुत्रापि ते फले। लात्वा तत्रेत्य शाखायां, तयोरग्रे प्रमुच्य च ॥ २३ ॥ उड्डीयान्यत्र तत्कीर–मिथुनं च गतं (गतवत्) ततः। तत्फलद्वंद्वमादत्तं, गुणचंद्रेण धीमता ॥२४॥ सुप्तोत्थितकुमाराग्रे, मुमुचे सा फलद्वयी। कीरव्यतिकरः सर्वः, प्रोक्तः प्रमोदतस्तदा ॥ २५ ॥ तत् श्रुत्वा ते फले मित्र–पाणौ संधार्य भूपभूः। रथारूढस्ततोऽप्यग्रे, चलन् प्राप महत्सरः ॥२६॥ तत्र प्रभाते संजाते, प्रातःकृत्ये कृतेऽखिले। मित्रार्पितं फलं प्रौढं, भंक्त्वा (युक्त्या) खादितवांश्च तत् ॥ २७ ॥ फलमन्यद्विभज्याशु, द्वयोः समर्प्य मित्रयोः। तदासन्नवनं रम्यं, कुमारो वीक्षितुं ययौ ॥ २८ ॥

१ ' वस्त्रं रत्नपुरी ह्यदात् ' इति प्रतौ पाठः। २ " राज्यं गुरोः फलस्यात्ते–र्लघोश्च स्यादमात्यता० " इति प्रतौ पाठ ।

इतस्ततो भ्रमंस्तत्र, सोऽद्राक्षीत्सुव्रतं मुनिं । शांतं दांतं दयावंतं, कुर्वंतं संयमक्रियां ॥ २९ ॥ साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन, सद्यः साधुसमागमः ॥ ३० ॥ चिंतयित्वेति तत्पार्श्वे, गत्वा नत्वा च तं मुनिं । उपविष्टः सभिन्नोऽसौ, तौ वीक्ष्य भद्रकौ ततः ॥३१॥ धर्माशीःपूर्वकं साधु-रब्रवीद्धर्मदेशनां । दुर्लभं मानुषं जन्म, कर्मभूमिः सुदुर्लभा ॥ ३२ ॥ आर्यदेशश्च तत्रापि, श्रावकत्वं च दुर्लभं । दीर्घायुस्त्वमरोगित्वं, धर्मेच्छा गुरुसंगमः ॥ ३३ ॥ श्रवणं श्रद्धानं च, सामग्री दुर्लभामिमां । प्राप्यापि धर्मकारित्वं, दुर्लभं च विशेषतः ॥ ३४ ॥ विज्ञायेत्यत्र भो भव्याः, प्रमादादिनिषेधतः । यतध्वं धर्मकृत्येषु, दयादानक्रियादिषु ॥३५॥ सप्तभिः कुलकं॥ सम्यक्त्वं धुरि पंचाणु-व्रतानि च गुणास्त्रयः। शिक्षापदानि चत्वारि, व्रतानि गृहिणां ततः ॥ ३६ ॥ वत्स त्वं गृह्ण सम्यक्त्वं, मूलं धर्ममहीरुहः । भूपपुत्रोऽसि तेनात्र, यथाशक्त्या व्रतान्यपि ॥ ३७ ॥ युग्मं ॥ ज्ञायते लक्षणैरेवं, न तु ज्ञानमिहास्ति मे । यत्ते वपुषि दृश्यंते, महांतः पार्थिवा गुणाः ॥ ३८ ॥ पितुर्मातामहस्यापि, स्वस्यापि शिरसि ध्रुवं । छत्रं धारयते छत्रा-काररेखात्रयं त्विदं ॥ ३९ ॥ ततस्त्वं वत्स ! वेलायां, कुर्याः सामायिकव्रत । परमेष्ठिनमस्कार-मंत्रः स्मर्यश्च नित्यशः ॥ ४० ॥ यतः—

सामाइयं कुणंतो, समभावं सावओ घडिअदुगं । आउं सुरेसु बंधइ, कम्माण य निज्जर कुणई ॥ ४१ ॥
समो अ सव्वभूएसु, तसेसु थावरेसु य । तम्हा सामाइयं कुज्जा, इयं (इ) केवलिभासियं ॥ ४२ ॥
दिवसे दिवसे लक्खं, देइ सुवन्नस्स खंडियं एगो । इयरो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ ४३ ॥

१ 'वत्स । गृहाण सम्यक्त्वं' इति पाठ साधुः ।

सुरगिरिएकावन्ना (कावन्न), भावओ सावओ दियइ दाणं । तस्स न तत्तियपुण्णं, जत्तिय सामाइए विहिए ॥ ४४ ॥
तथा–ससिधवला अरिहंता, सिद्धा वरपम्मरागसंकासा । कणगाभा आयरिआ, उवज्झाया पुण पियंगुनिहा ॥ ४५ ॥
अंजणमणिप्पहा तह, लोए सव्वे वि साहुणो विविहा । इय परमेट्ठिपयाइं, पंच वि झाइज्जइ विहिणा ॥ ४६ ॥
एयाण नमुक्कारो, पंचण्हं होइ मंगलं पढमं । उड्ढमहोतिरियंमि वि, एसुच्चिय सासओ मंतो ॥ ४७ ॥
एरवएहिं पंचहिं, पंचहिं भरहेहिं संपढिज्जई अ । अईयअणागयकाले, एसो चिय जिणनमुक्कारो ॥ ४८ ॥
सट्ठिसयं विजयाणं, पवराणं जत्थणाइजिणधम्मो । सासयकालो वट्टइ, तत्थविमो (सो) चेव नवकारो ॥ ४९ ॥
जम्मि वासरे पढिज्जइ, जेणिह जीयस्स होइ फलरिद्धी । अवसाणे वि पढिज्जइ, जेण मओ सग्गइं जाइ ॥ ५० ॥
आवईहिं पि पढिज्जइ, जेण य लंघेइ आवइसयाइं । रिद्धीइंपि पढिज्जइ, जेण य सा होइ विच्छिण्णा ॥ ५१ ॥
जह अहिणा दट्ठाणं, गारुडमंतो विसं पणासेइ । तह नवकारो मंतो, पावविसं नासइ असेसं ॥ ५२ ॥
किं एस कामकुंभो, किं वा चिंतामणी हुय नवकारो । किं कप्पतरू एसो, न हु न हु ताणंपि अहियरो ॥ ५३ ॥
कामघडो देवमणी, सुररुक्खो एगजम्मसुहहेऊ । नवकारो पुण पवरो, सग्गापवग्गाण दायारो ॥ ५४ ॥
सत्तरिकोडाकोडी–सायरमाणे इमंमि मोहणीए । कोडाकोडीसेसे, नवकारो मुहज्जिओ होइ ॥ ५५ ॥
जं किंपि परमतत्तं, परमप्पयकारणं च जं किंचि । तत्थ इमो नवकारो, झाइज्जइ परमजोगीहिं ॥ ५६ ॥

१ 'नवकारुम्मुह जिओ होइ' प्रतौ पाठः ।

पणवहरियारिहा (ॐ ह्रीँ अर्हं) इइ, मंतहबीयाणि सप्पहावाणि । सव्वेसिं तेसिं मूलं, इक्को नवकारवरमंतो ॥ ५७ ॥
जो गुणइ तिरिय(१५)लक्खं, पूएइ विहीइ जिणनमुक्कारं । तित्थयरनामगुत्तं, सो बंधइ नत्थि संदेहो ॥ ५८ ॥
अट्ठेव य अट्ठसया, अट्ठसहस्सं च अट्ठकोडीओ । जो गुणइ भत्तिजुत्तो, सो तइयभवे लहइ सिद्धिं ॥ ५९ ॥
करआवत्तिहिं जो पंच-मंगलं साहुपडिम(१२)संखाए । नवकारा आवत्तइ, छलंति तं नो पिसायाई ॥ ६० ॥
न य तस्स किंचि पहवइ, डाइणिवेयालरक्खमारिभयं । नवकारपहावेण य, नासंति असेसदुरियाइं ॥ ६१ ॥
थंभेइ जलं जलणं, चिंतियमत्तो वि पंचनमुक्कारो । अरिमारिचोरराउल-घोरुवसग्गं पणासेई ॥ ६२ ॥
अडविगिरिजलहिमज्झे, भयं पणासेइ चिंतिओ एसो । रक्खइ भवियसयाइं, माया जह पुत्तभंडाइं ( डिंभाइं ) ॥ ६३ ॥
आ(अ)हिजरवाहितक्कर-हरिकरिसंगामविसहरभयाइं । नासंति तक्खणेणं, जिणनवकारप्पहावेणं ॥ ६४ ॥
हिययगुहाए नवकार-केसरी जाण संठिओ निच्चं । कम्मट्ठगंठिदोघट्ट-घट्टयंताण परिणट्ठं ॥ ६५ ॥
नवकारइक्कअक्खर, पावं फेडेइ सत्तअयराणं । पन्नासं च पएणं, पणसयसागर समग्गेणं ॥ ६६ ॥
जे केवि गया मुक्खं, गच्छंति य केइ कम्ममलमुक्का । ते सव्वे वि य जाणसु, जिणनवकारप्पहावेणं ॥ ६७ ॥
जिणसासणस्स सारो, चउदसपुव्वाण जो समुद्धारो । जस्स मणे नवकारो, संसारो तस्स किं कुणइ ? ॥ ६८ ॥
परमेट्ठिनमुक्कारो, पणतीसक्खरजुओ सया पवरो । एसो य महामंतो, तुट्ठो चिंतियफलं देई ॥ ६९ ॥
श्रुत्वेत्यांतरसद्भावा-त्कुमारः ससखा विधेः । सम्यक्त्वाद्यं गुरोः पार्श्वे, गृहिधर्मं प्रपन्नवान् ॥ ७० ॥ प्राप्य धर्मं दया-

मूलं, हितं श्रीजिनभाषितं । श्रीचंद्रोऽभूत्सुधास्वादा–दप्यधिकप्रमोदभाक् ॥ ७१ ॥ ततश्च–धर्मनेत्रप्रकाशत्वा–त्सर्वतीर्थोपदेशतः । त्वमेव जंगमं तीर्थं, दृष्टो धन्येन यन्मया ॥ ७२ ॥ [1]सेव्यस्त्वं पूजनीयस्त्वं, ध्येयस्त्वं हि हितस्पृशां । गुरुं विना धर्मतत्त्वं, बुद्धिमानपि वेत्ति न ॥ ७३ ॥ रससिद्धिः कला विद्या, धर्मतत्त्वं धनार्जनं । विना गुरूपदेशेन, प्राज्ञस्यापि न सिद्ध्यति ॥ ७४ ॥ पितृमातृमुखाः सर्वे, संभवंति भवे भवे । सद्गुरुर्धर्मदाता तु, प्राप्यते पुण्यतः क्वचित् ॥ ७५ ॥ धन्यानामपि धन्योऽहं, पुण्यः पुण्यवतामपि । जातोऽद्य यद्भवान् दृष्टो, नतश्च भगवन्मया ॥ ७६ ॥ चतुर्भिः–कलापकं ॥ इति स्तुत्वा गुरुं नत्वा, कृत्वा चात्मानुमोदनां । गुरोर्गंभीरवाक्यानि, तानि चित्ते विमर्शयन् ॥ ७७ ॥ परमेष्ठिमहामंत्र–गुणने कृतनिश्चयः । स कुमारस्ततः स्थाना–दग्रतः पूर्ववद्ययौ ॥ ७८ ॥ युग्मं ॥

कौतुकाद्वेगतो गच्छन्, प्राप क्वापि महाटवीं । तस्यां च बहुमध्याह्न–समये धर्मयोगतः ॥ ७९ ॥ कुमारस्य तृडत्यंतं, प्रोद्भूवास्यशोषकृत् । तद्दुःखदुःखिते मित्रे, रथादुत्तीर्य संभ्रमात् ॥ ८० ॥ सर्वत्रालोकितुं लग्ने, तत्रार्णः क्वापि नापतुः । कथं करिष्यतेऽथात्र, किं वा भावीति चोचतुः ॥८१॥ त्रिभिर्विशेषकं ॥ गुणचंद्रस्तदा शुष्क–पर्णवन्म्लानमाननं । स्वपत्यु(त्ते) वीक्ष्य खिन्नः सन्, ततः (सूतं) प्रत्यवदत्सखे ! ॥८२॥ रथादस्य महोच्चस्य, वृक्षस्य शिखरोपरि । आरुह्य सर्वदिग्दृष्ट्या, जलस्थानं विलोकय ॥ ८३ ॥ तथाकृते च सूतेन, दृष्टं किंचिज्जलास्पदं । बकसारसचक्राद्या–भिज्ञानैर्याम्यदिङ्मुखे ॥ ८४ ॥ उत्तीर्णेन ततस्तेन, वृत्तांते ज्ञापितेऽखिले । प्राग्वद्रथेन गच्छंतः, प्रापुस्ते तत्सरः क्षणात् ॥ ८५ ॥ तत्तीरे वनमस्त्येक–माम्राणां

१ 'त्वं हि भवस्पृशां गुरुः' इति प्रत्यौ पाठः ।

तत्र तत्क्षणात् । मित्रानीतं पयः, पीत्वा, ततः पादेन सोऽचलत् ॥ ८६ ॥ सुहृन्मनोरथालीव–स्त्रोधां दुर्जनवत्खरां । वधूवद्ध-रपत्रालिं, सिताद्रुवत्सशर्करां ॥ ८७ ॥ सरःपालीमलंचक्रे, समित्रो भूपनंदनः । दृपद्धद्धमतिस्फारं, सरो वीक्ष्य चमत्कृतः ॥८८॥ युग्मं ॥ तीरे तीरे क्रमाद्गच्छन्, ददर्श रजकं नलं । प्रक्षाल्य भव्यवस्त्राणि, विस्तारयंतमातपे ॥ ८९ ॥ तेषां च वाससां मध्ये, सूक्ष्मैका लघुशाटिका । दृष्टा तत्रातपे दत्ता, कुमारेणैव बुद्धिना ॥ ९० ॥ तां दृष्ट्वा गुणचंद्रस्य, ज्ञापितं भद्र कौतुकं । दृष्टमत्र त्वया किंचि–त्तेनोचेऽद्भुतमत्र (मीश) किं ॥९१॥ युग्मं ॥ कुमारः प्राह कल्याणिन् !, पश्यैनां शाटिकां वरां । गंधलुब्धभ्रमद्भृंग–राजीभिरभिसेवितां ॥ ९२ ॥ पद्मिन्या एव कस्याश्चित्, स्त्रिय एषा विभाव्यते । पुष्पगंधातिरेकी य–त्तस्याः स्वेदोंऽगजोऽखिलः ॥ ९३ ॥ यतः–पद्मिनी पद्मगंधा च, मदगंधा च हस्तिनी । चित्रिणी चित्रगंधा च, मत्स्यगंधा च शंखिनी ॥ ९४ ॥ विस्मयाद्गुणचंद्रोऽपि, पप्रच्छ रजकं सखे ! । किमिदं स्थानमेतानि, भव्यवस्त्राणि कस्य च? ॥ ९५ ॥ रजकः प्राह सद्बुद्धे !, शृणु वैदेशिकोऽसि यत् । एषा दीपशिखानाम्नी, नगर्यत्रास्ति भूपतिः ॥ ९६ ॥ दीपचन्द्रनृपस्तस्य, रजकोऽहं नलाभिधः । इदं पद्मसरश्चात्र, वस्त्रोच्चयोऽयमीक्ष्यतां ॥ ९७ ॥ राज्याः प्रदीपवत्याश्च, देव्या वासांस्यमून्यहो । भ्रातृपुत्र्याश्च तत्पुत्र्याः, शाट्यादीदं पृथक्पृथक् ॥ ९८ ॥ त्रिभिर्विशेषकं ॥ नृपस्य भ्रातृजा केति, तत्पृष्टः सोऽब्रवीत्पुनः । भ्रातृव्या चंद्रवत्यस्ति, सुभगांगनृपप्रिया ॥ ९९ ॥ तस्याः पुत्रोऽस्ति वामांगः, कुमारः पुत्रिकाद्वयं । तयोः शशिकला ज्येष्ठा, पुत्री चंद्रकलापरा ॥ २०० ॥ युग्मं ॥ आद्या सिंहपुरे पित्रा, पुरा रत्नपुरेशितुः । महामल्लमहीपस्य, विस्तरात्परिणायिता ॥ १ ॥ लघ्वी चंद्रकलात्यंत–रूपलावण्यशालिनी । मातुलेन विवाहार्थ–मत्रानीतास्ति सादरं ॥ २ ॥ पत्नी

राजाधिराजस्य, भविन्त्येषा हि पद्मिनी । इत्यस्या जन्मवेलायां, हर्षकृन्मुनिगीरभूत् ॥ ३ ॥ असौ सूर्यवतीसूनोः, पट्टदेवी भविष्यति । इति नैमित्तिकस्योक्ति-र्यभवत्सा तु नामिलत् ॥ ४ ॥ यतः प्रतापसिंहस्य, राज्ञी सूर्यवती हि या । एतत्पुरप्रभोः पुत्रीं, साद्यापि सुतकांक्षिणी ॥ ५ ॥ किं चास्या मातुलगृहे, विवाहं कुरु सत्वरं । सुभगांगनृपस्येति, कुलदेवीवचोऽजनि ॥६॥ तेनैषा पद्मिनी मातृ-भ्रात्रादिपरिवारयुक् । पंचपंचशतैः पंच-वर्णैरश्ववरैर्युता ॥ ७ ॥ इहागतास्ति सामग्री, बह्व्यप्यस्त्यपरा परा । पाणिग्रहार्थमेतस्याः, पितृमातुलकारिता ॥ ८ ॥ युग्मं ॥

तस्योक्तिमीदृशीं श्रुत्वा, तां पुरीं द्रष्टुमुद्यतः । समित्रः स कुमारेशः, सश्रिसारादिपूर्वकं ॥ ॥ ९ रथं तत्रैव संस्थाप्य, यावद्गच्छेत्तदग्रतः । तावत्सरःपुरोभागे, पटावासान् ददर्श च ॥ १० ॥ युग्मं ॥ तत्पार्श्वस्थं स पप्रच्छ, नरमेकं सखेऽत्र किं । कटकं स्थितमस्त्येत-त्तेनोचे शृणु सन्मते ! ॥ ११ ॥ नृपश्रीतिलकादेशा-त्पुरात्तिलकनामतः । धीराभिधः प्रधानोऽयं, प्राप्तोऽस्त्यत्र सुसैन्ययुक् ॥ १२ ॥ कुशस्थलं यियासुश्च, तत्सार्थे गायनाग्रणीः । वीणारवोऽस्त्यमी सर्वे-ऽधुना नृपसभां ययुः ॥ १३ ॥ तत् श्रुत्वा पुनरग्रे स, गंतुं लग्नः पुरीं प्रति । मित्रेणोक्तमिदं ताव-देवं प्रभुनिमंत्रणं ॥ १४ ॥ इत्यालापपरौ तौ च, मार्गस्थोद्यानमीक्षितुं । गच्छेतां तावदुद्यान-पालः शकुनहेतवे ॥ १५ ॥ राजपुत्रोऽयमित्यस्मै, सहकारफलं ददौ । तज्ज्ञात्वा तं च सत्कृत्य, कुमारस्तद्वनं ययौ ॥१६॥ युग्मं ॥ एकतस्तालहिंताल-प्रियालसरलार्जुनाः । अन्यतो नागपुंनाग-लवंगागुरुचंदनाः ॥ १७ ॥ क्वचिच्चाम्रजंबीर-कपित्थाश्वत्थजंबवः । क्वचिद्बकुलकंकोल-पाटलाशोकचंपकाः ॥ १८ ॥ क्वचि-न्न्यग्रोधमंदार-पिचुमंदहरीतकाः । कर्णिकारकांचनार-कृतमालधवार्जुनाः ( वांजनाः ) ॥१९॥ क्वचित्तमालकक्षीर-वृक्षाद्ये-

लाविभीतकाः । लकुचांकुल्लबिल्वाद्या, विचित्रा यत्र शाखिनः ॥ २० ॥ कर्तुं पुष्पफलातिथ्यं, यत्र वाताहता द्रुमाः । श्रीचंद्र-माह्वयंतीव, कराग्रैरिव पल्लवैः ॥२१॥ पंचभिः कुलकं ॥ यावद्विलोकयेत्तत्र, चंपकादितरून् बहून् । तावत्तत्र कनीमेकां, ददर्श रूपशालिनीं ॥२२॥ पुष्पक्रीडां प्रकुर्वंतीं, सखीभिर्बहुभिः सह । पद्मिनीयमिति ज्ञाता, दृष्ट्वा च तां तथाविधां ॥ २३ ॥ यतः—

पाणौ पद्मधिया मधूककुसुमभ्रांत्या तथा गल्लयोः, नीलेंदीवरशंकया नयनयोर्बंधूकबुद्ध्याधरे ।
लीयंते कबरीषु बांधवजने व्यामोहबद्धस्पृहा, दुर्वारा मधुपाः कियंति तरुणीस्थानानि रक्षिष्यति ॥ २४ ॥

ततश्च—प्रेमलज्जाविनम्रास्यः, कुमारस्तद्वनाद्बहिः । यावन्मित्रयुतो याति, तावत्तद्रूपमोहिता ॥२५॥ अयं प्राग्जन्मभर्ता मे, कुमारीति व्यकल्पयत् । यस्याश्चेष्टेदृशी मेऽङ्गे, दृष्टे कांते हि या स्त्रियः ॥२६॥ युग्मं ॥ तथाहि—स्त्री कांतं वीक्ष्य नाभिं प्रकटयति मुहुर्विक्षिपंती कटाक्षान्, दोर्मूलं दर्शयंती रचयति कुसुमापीडमुत्क्षिप्तपाणिः । रोमांचस्वेदजृंभाः श्रयति कुचतटस्रंसि वस्त्रं विधत्ते, सोत्कंठं वक्ति नीवीं शिथिलयति दशत्योष्ठमंगं भनक्ति ॥ २७ ॥ विमृश्येति कनी साह, चतुरां प्रति हे सखि ! । कोऽयं मच्चित्तसर्वस्वा-पहारी पुरुषाग्रणीः ॥ २८ ॥ सर्वलक्षणसंपन्नो, रूपलावण्यसेवधिः । किं नाम किं कुलं चास्य, कः पिता क्व पुरे स्थितिः ? ॥२९॥ सत्वरं गच्छ गच्छ त्वं, पृच्छ चास्य सुहृद्वरं । तया शीघ्रं तयोः पार्श्वे, समेत्य नतिपूर्वकं ॥३०॥ ऊचे स्वामिन् कृपानाथ !, विज्ञप्तिः श्रूयतां मम । एषा मत्स्वामिनी राज-कन्या चंद्रकलाभिधा ॥३१॥ पद्मिनी निजरूपश्री-दूरीकृतसुरांगना । तस्याः प्रेमपदं मुख्या, सख्यस्मि चतुराख्यया ॥ ३२ ॥ युष्मन्नामादिकं तेन, पृच्छामि सर्वमुच्यतां । हृष्टोऽथ गुणचंद्रस्तां, वदेद्यावत्पुरादिकं ॥ ३३ ॥ तावत्सूर्यवतीसूनु-र्वारयामास तं बलात् । अस्ति प्रयोजनं स्वीय-कुलादि-

ज्ञापनेन किं ॥ ३४ ॥ इत्युक्त्वा तं ततो लात्वा, श्रीचंद्रस्तां पुरीं ययौ । प्रतोलीवप्रहट्टालि–सदनादि विलोकयन् ॥ ३५ ॥ षड्भिः कुलकं । अग्रे श्रीआदिनाथस्य, प्रोच्चे चैत्ये महाद्भुते । देवान् वंदितुकामः सन्, विधिना प्रविवेश सः ॥ ३६ ॥

इतश्चतुरयागत्य, स्वस्वामिन्या निवेदिते । तत्स्वरूपे ततो जज्ञे, तन्वंगी सातिदुःखभाक् ॥३७॥ हा सखि (रूयः) ! श्रूयतां मेऽस्तु, वरोऽयं नापरो नरः । तेनात्र विषये यत्यं, भवतीभिः समंततः ॥ ३८ ॥ भूपस्य श्रेष्ठिनो वा किं, किं वामात्यस्य कस्यचित् । पुत्रोऽयमथवामीभि–र्विकल्पैः किं मुधा कृतैः ॥ ३९ ॥ मनसापि मया योऽयं, वव्रे स एव मे 'पतिः । अस्य नामापि न ज्ञात–मात्मभिः किं करिष्यते ॥ ४० ॥ युग्मं ॥ न ज्ञायते पुरीमध्ये, नाथोऽयं कुत्र यास्यति । तेनेतश्चल्यतामेवं, प्रोच्य सा राजवाहने ॥ ४१ ॥ उपविश्य कुमारस्य, पृष्ठौ पृष्ठौ समागमत् । कोविदां प्रेष्य शीघ्रं प्रा–क्तद्विज्ञप्त्यै मातृपार्श्वके ॥ ४२ ॥ स्वयं च चैत्यपार्श्वस्था, सा सुधावच्चिरं पपौ । निर्निमेषदृशा देवान्, स्तुवंतं तत्र भूपजं ॥ ४३ ॥ त्रिभिर्विशेषकं ॥ सिंहावलोकनं कुर्वन्, गुणचंद्रः सुशीलभाक् । तां पद्मिनीं तदा तत्रा–यातां वीक्ष्य प्रमोदतः ॥ ४४ ॥ भ्रूसंज्ञया तया पृष्टः, स्वस्वाम्याख्यापुरादिकं । स सुधीः करपल्लव्या, ज्ञापयामास तां कनीं ॥ ४५ ॥ युग्मं ॥ तद् ज्ञात्वा पुनरेषापि, स्वं भावं संज्ञया तया । तस्य प्रोक्तवती किंचि–द्विलंबकरणादि च ॥ ४६ ॥ ततश्च नृपपुत्र्यापि, श्रीचंद्रोऽयं कुशस्थलात् । श्रेष्ठिघ्रागतोऽस्तीति, स्वमातुर्ज्ञापितं पुनः ॥ ४७ ॥

इतश्च जिनबिंबानि, प्रत्येकं प्रणमन् विधेः । कुमारो गर्भगेहाच, मंडपे पुनराययौ ॥ ४८ ॥ तत्रोत्कीर्णांश्च शार्दूल–शुककेकिगजान् बहून् । तरून् पत्रानि वल्लीश्च, विचित्राः शालभंजिकाः ॥ ४९ ॥ विलोकयन् समंततस्स, मित्रस्य दर्श-

यन्नपि । अत्याश्चर्यमनाः प्राप, क्रमेण द्वारमंडपं ॥ ५० ॥ युग्मं ॥ अत्रोपविश्यतां स्वामिन् [1], मित्रेणेति स ईरितः । तत्र स्थास्नुरभूत्ताव-त्तां कन्यां दृष्टवानिति (तः) ॥ ५१ ॥ किंच-अहो अस्या आस्यं कटरि नयने भालमरिरे, कपोलाभ्यां भद्रं शुकमुखमिव घ्राणपुटकं । अधःपाली दोला किल वपुर(रि)र्विबाधरयुगं, किमन्यत्सर्वेऽपि प्रकृतिसुभगास्तन्ववयवाः ॥ ५२ ॥ तस्या इत्यद्भुतं रूपं, दृष्ट्वा स हृद्यचिंतयत् । स्त्रियो बह्व्योऽपि दृश्यंते, किं त्वस्यामेति मे मनः ॥ ५३ ॥ तदा च स्नेह-युग्दृष्ट्या-लोकयंतं मनागिमां । तं वीक्ष्य हृष्टवान् सुहृ-त्कार्यमस्या हि सिद्ध्यतु ॥ ५४ ॥ ततः कुमारकोटीरः, स्वं मित्रं प्रत्यवोचत । अहो दुर्जेयमेतद्धि, संसारे केवलं मनः ॥ ५५ ॥ यतः-विमुच्य दृग्लक्ष्यगतं जिनेंद्रं, ध्याता मया मूढधिया हृदंतः । कटाक्षवक्षोजगभीरनाभी-कटीतटीयाः सुदृशां विलासाः ॥५६॥ तथाऽच-वामावाममुखेंदुमंडलल-सल्लावण्यचंद्रातप-प्रेंखत्प्रेमपयःसमुच्चयसमुत्फुल्लद्विकारोर्मिभिः । तारुण्योष्णकृतौ विवेकवहनं मध्ये मनोब्धेर्द्रुतं, यस्यास्फाल्य न भज्यते स्मर-गिरौ स्तोकः स लोकः क्षितौ ॥ ५७ ॥ अपि-च-सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रियाणां, लज्जां तावद्विधत्ते विन-यमपि समालंबते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते, यावल्लीलावतीनां न हृदि धृतिमुखे दृष्टिबाणाः पतंति ॥ ५८ ॥ अतः स्थातुं न युक्तं नः, स्त्रीजनोऽत्र समेति यत् । इत्युक्त्वा स ततश्चैत्या-च्चचाल मित्रयु-क्तदा ॥ ५९ ॥ कुमारीसंज्ञया सुहृ-द्वि(मित्रो, वि)लंबार्थं जगाद तं । स्वामिन् ! विलोक्यते राज-भवनादीदमद्भुतं ॥६०॥ उवाच कुमरस्तं च, स्त्र्यादिलाभेष्वनिच्छकः । उत्सवो जायमानोऽस्ति, चल्यतां तेन सत्वरं ॥ ६१ ॥ तदन्वेष प्रपासौध-हट्टा-

१ एतादृशेषु बहुषु स्थानेषु प्रतौ मित्रशब्दः पुंल्लिंगे लिखितो दृश्यतेऽतः स विशेषणत्वेन ज्ञेयः ।

लिचत्वरादिषु । नास्थादन्यत्र कुत्रापि, जगाम स्वरथं प्रति ॥ ६२ ॥ विमृष्टं गुणचंद्रेण, प्रतोल्येतेयमग्रतः । न कनी न च सा दासी, पृष्ठौ[१] कापि सीमंतिनी ॥ ६३ ॥ विलंबोऽत्र कथं भावी, तावता मुरजध्वनिः । एकपार्श्वात् श्रुतौ लग्न-स्तेन हृष्टोऽथ सोऽवदत् ॥ ६४ ॥ मधुरध्वनिसंगीत-मिदं मे दर्श्यतां प्रभो । मनाग्विलोक्य पश्चाद्धि, यास्यते स्वरथांतिके ॥ ६५ ॥ कुमारो मित्रवाक्येन, यावत्तत्संनिधौ गतः । तावत् श्रीचंद्रनामांक-श्रीरागध्रुवकोपरि ॥ ६६ ॥ नर्तकीनर्तनं तत्र, श्रोतुं लग्नो विशुद्धधीः । श्रीचंद्रा बहवः संति, कोऽयं न ज्ञायते परं ॥ ६७ ॥ युग्मं ॥ लक्ष्मीदत्तसुतः श्रीमान्, श्रीचंद्रो जयवानिति । तस्याभोगपदं श्रुत्वा, श्रीचंद्रः प्राह हे सखे ! ॥६८॥ कस्य गेहमिदं के के, स्थिताः संत्यत्र सज्जनाः । विलोक्यतेऽथ तद्गेह-द्वारे तावागतौ तदा ॥ ६९ ॥ युग्मं ॥ सन्मुखं संस्थितं दृष्ट्वा, वरदत्तं गृहाधिपं । उवाच कुमरो मित्रं, वरदत्ताख्य आत्मनः ॥ ७० ॥ पितुर्वाणिज्यमि(पु)त्रोऽयं, दृष्टोऽभूत्स्वगृहे पुरा । इतोऽथ चल्यतेऽयं चेद्, द्रष्टा तत्स्थापयिष्यति ॥ ७१ ॥ युग्मं ॥ प्रोच्येति स स्वमित्रस्य, करं लात्वा ततो ययौ । तत्सर्वं द्वारपालेन, कथितं श्रेष्ठिनः पुरः ॥ ७२ ॥

स श्रेष्ठी चिंतयामास, मच्छ्रेष्ठिनः सुतोऽत्र कः । लक्ष्मीदत्तस्य सूनुर्यः, सोऽत्रैति कथमेककः ॥ ७२ ॥ यत् श्रीचंद्रस्य पार्श्वे वै, भटाश्वाद्याः सहस्रशः । तथाप्यालोक्यते ताव-त्कोऽयमात्मद्वितीयकः ॥७३॥ विचिंत्येत्याशु तत्पृष्ठौ, श्रेष्ठ्यागत्या-मिलत्तयोः । उपलक्ष्य कुमारं तं, प्रणनाम च तत्क्रमौ ॥ ७४ ॥ दिष्ट्या दृष्टोऽसि हे स्वामि-न्नभ्रा वृष्टिरद्य मे । जातं मे सफलं जन्म, जीवितव्यं च सार्थकं ॥ ७५ ॥ एषा भाग्यवती भूमि-र्यत्राभूत्त्वत्पदागमः । यन्मे सद्मनि भव्यं त-त्सर्वं युष्मत्प्र-

१ ' पृष्ठौ कोऽपि समेति न ' इति प्रतौ पाठः ।

सादतः ॥ ७६ ॥ अत्रागत्य च मां ज्ञात्वा, गम्यते मंक्षु तत्कथं । गृहमेतद्धनाधेत–स्सर्वं वो नात्र संशयः ॥ ७७ ॥ पादोऽवधार्यतां कृत्वा, प्रसादं सेवकोपरि । अद्य गेहे शिशो( लघो )र्लेख–शालाकरणमस्ति यत् ॥ ७८ ॥ तद्दाक्षिण्यात्कुमारोऽपि, प्राप्तः श्रेष्ठिगृहे तदा । विलंबेनामुना हृष्टो, गुणचंद्रोऽवदत्सुधीः ॥ ७९ ॥ बहिरस्ति रथः सोऽत्रा–नीयमानोऽस्ति सांप्रतं । इति विज्ञप्य ( विज्ञप्तिरिति ) मित्रेण, सत्वरः स तथा कृतः ॥८०॥ कुमारे तत्र दीप्रांगे, प्राप्तेऽर्कवन्नभोऽगणे । ताराणामिव तेजोऽगा–त्तत्रस्थव्यवहारिणां ॥ ८१ ॥ आदरेण तदा श्रेष्ठि–पत्न्या वर्धापितो मुदा । तां नत्वा स विचारज्ञः, सर्वेषां धुरि संस्थितः ॥ ८२ ॥ भट्टलोकादिभिः सर्वैः, सभानाथोऽयमागतः । इत्युक्त्वा तद्गुणैर्गीतैः, स्तूयमानोऽशुभद्भृशं ॥ ८३ ॥

अन्यच्च दीपचंद्रेण, तत्पुरीस्वामिना तदा । सामंतश्रेष्ठिमंत्र्याद्यैः, पूरितास्ति सभा सभाः ॥ ८४ ॥ तस्यां वीणारवाभिख्यो, गंधर्वो गायनाग्रणीः । अन्यैः षोडशभिर्वीणा–वंशादिभृन्नरैः स्थितः ॥ ८५ ॥ श्रीचंद्रस्य प्रबंधं तं, नृपपुत्रविडंबनं । राधावेधावदातादि–तच्चरित्रैः स्वयं कृतं (तैः) ॥ ८६ ॥ अपूर्वं धनिकस्याद्या–प्यश्रावि तं मनोहरं । सुधावन्मधुरं स्फारं, सारं नवरसैर्वरैः ॥ ८७ ॥ भाषाभिर्बहुभी रागैः, श्रोतृश्रोत्रसुखावहैः । उद्धर्षाद्गातुमारेभे, तदर्थं ( थैः ) द्वि(प्र)गुणीकृतः ॥ ८८ ॥ त्रिभिर्विशेषकं ॥ तत्र सभ्यजनाः सर्वे, तद्दत्तचित्तलोचनाः । उच्चग्रीवा विमुक्तान्य–कृत्याः शृण्वंति सादरं ॥८९॥ जवन्यंतरिता भूप–पृष्ठौ चंद्रवतीमुखाः । स्त्रियः प्रदीपवत्याद्याः, स्थिताः शृण्वंति ता अपि ॥ ९० ॥ तदा चंद्रवतीपार्श्वे, तत्रैता कोविदावदत् । स्वामिन्यद्य तदुद्याने, रंतुं चंद्रकलागमत् ॥ ९१ ॥ तदा तत्र यथाजातं, तत्सर्वं ज्ञापितं तया । रूपस्वी स पुमानस्य, नाह्वादि ज्ञायते परं ॥ ९२ ॥ युग्मं ॥ तावता शीघ्रमायाता, चतुराह स पूरुषः । अस्ति श्रीमद्विहारांत–स्तन्नामाद्युक्त-

वत्यपि ॥९३॥ राइयाह सखि ! तेजस्वी, रूपवानप्ययं नरः । पुत्र्या इष्टः परं श्रेष्ठि-पुत्रस्यास्यैककस्य च ॥ ९४ ॥ अज्ञात-कुलशीलस्य, कन्येयं दीयते कथं । तथापि दीपचंद्रस्य, ज्ञाप्यते चल्यतामितः ॥ ९५ ॥ युग्मं ॥ ज्ञापितं च तयासन्नी-भूय सर्वं नृपस्य तत् । दीपचंद्रस्ततः प्राह, किंचिद्विहस्य तां प्रति ॥ ९६ ॥ किमेवं वदसि प्राज्ञे, नैतद्धूलिगृहं शिशोः । ईदृग्मात्रस्य वणिजो, ददे किं पद्मिनीमिमां ॥ ९७ ॥ लोकमध्ये च का शोभा, साक्षान्मनोऽमनः कथं । सुभगांगनृपस्याग्रे, सुंदरैर्भूयते किमु ॥ ९८ ॥ ईदृक्चंद्रकला दक्षा, कथं यं तं वृणोति तत् । अग्रे सूर्यवतीपुत्र-विवाहे सोत्सुकाभवत् ॥ ९९ ॥ मनोरथाः स्थितास्तस्या, हृद्येव सकलाः पुनः । अप्यस्याः स्याच्च यद्येवं, यशस्तर्हि किमावयोः ॥ ३०० ॥ किं त्वत्रास्या यथाशक्त्या, स्वयंवरणयोगतः । कस्यापि राजराजस्यो-पयामः कारयिष्यते ॥ १ ॥

इतश्च चैत्यपार्श्वस्थां, सखीं चंद्रकलाभणत् । याहि प्रियंवदे ! शीघ्र-मार्यपुत्रः क विद्यते ॥ २ ॥ तदादेशात्तया सम्य-कन्मार्गे तौ विलोकितौ । पुरप्रतोलिकां याव-त्परं दृष्टौ न कुत्रचित् ॥३॥ पश्चादागत्य विज्ञप्तं, स्वामिन्यत्र गवेषितं । आसरः-सर्वहट्टादि, तयोर्नैकोऽपि दृश्यते ॥ ४ ॥ ततः सा तद्वियोगार्ता, वाढं निःश्वस्य चावदत् । अद्याप्यंबादिकः कोऽपि, नागादजनि चेदृशं ॥ ५ ॥ निर्भाग्या किं करिष्यामि, किं वा भाव्यत्र मे पुनः । यदीदृशो वरः प्राप्तः, प्रमादान्नः स गच्छति ॥ ६ ॥ हृदंतर्दुःखपूरेण, [3]प्रज्वलंती च सा जगौ । हा हा किं गोत्रदेव्यो मे, सारां कुरुत नोचितां ? ॥७॥ चैत्ये चित्रमयूरा भोः, किं न मे स्थापितः प्रियः । बाला विरहिता भर्त्रा, कथं प्राणान् धरिष्यति ? ॥ ८ ॥ अहो शुका

१ 'साक्ष्यात्मनां मनः कथं' इति प्रतौ पाठः । २ 'नैतीतश्चाजनीदृशं' इति प्रतौ पाठः । ३ 'व्यलपद्धुहिराऽपि सा' इति प्रतौ पाठः ।

अहो शुकयः, किं मे नालापितः पतिः । मुक्ता कांतेन गौरीयं, कथं स्थास्यति जल्पत ॥ ९ ॥ भो दिव्यपुत्रिकाः ! किं मे, गच्छन्मुक्तः स वल्लभः । भवतीभिर्न किं ज्ञातं, तन्वीयं विलयिष्यति ॥ १० ॥ किं वा यात्यत्र भर्तायं, तन्ममैव हि दूषणं । लज्जां विहाय यत्पत्यु-र्मया न कथितं स्फुटं ॥११॥ तदा [illegible] चतुरा तत्रा-याता मातृसमीपतः । मात्रा नृपेण यत्प्रोक्तं, तद्वरारुचितादिकं ॥१२॥ तत्सर्वं वक्ति यावद्धि, तावत्सा दुःखपूरिता । मुमूर्छ सुकुमारांगी, सखीभिः सज्जिता पुनः ॥ १३ ॥ युग्मं ॥

इतः प्रियंवदातस्त-त्स्वरूपज्ञाशु तत्प्रसूः । तत्रैता तादृशीं दृष्ट्वो-त्संगे लात्वा च तां जगौ ॥१४॥ वत्से ! किं दुःखमेताव-च्चित्ते धत्से स्थिरा भव । भव्ये जाते तवैवास्ति, भव्यं नः सकलं हि यत् ॥ १५ ॥ त्वं तत्त्वज्ञासि धीरासि, मा धा दुःखं यतोऽत्र नः । अस्ति स्वयंवरादीच्छा, त्वद्विवाहे महत्तरा ॥ १६ ॥ तत् श्रुत्वाह सुता मातः, साहं त्वत्कुक्षिजा सती । मनसापि धृतं मुक्त्वा, वरमन्यं करोमि किं ? ॥१७॥ स्वयंवरादिनालं मे, विस्तरत्वेन वा किमु । श्रीचंद्रोऽयं वरो मेऽस्तु, नान्यः कोऽप्यथवाऽनलः ॥ १८ ॥ सुताया निश्चयं ज्ञात्वा, चंद्रवत्याह भो भटाः ! । कथ्यतां दीपचंद्रस्य, वरः सोऽयं विलोक्यतां ॥ १९ ॥ इतश्चतुरया सर्वं, कुमारीमूर्छनादिकं । ज्ञापितो दीपचंद्रः स, विसर्ज्य सहसा सभां ॥२०॥ गायकैस्तैरमात्यैश्च, सहायया जिनालये । सखीपरीवृता तत्र, राज्ञी प्रदीपवत्यपि ॥ २१ ॥ युग्मं ॥ तैः सर्वैर्बहुधा पृष्टा, प्राग्वदेवाह सा कनी । ततो राजपथे राजा, संचचार तमीक्षितुं ॥ २२ ॥ तदा चंद्रकला वाम-चक्षुःस्फुरणचेष्टया । सखीं हर्षापयामास, शस्तानेकमनीषितैः ॥ २३ ॥ तत्क्षणेऽसौ नृपो ज्ञात्वा, शुद्धिं तस्य जनान्वयात् । वरदत्तगृहे प्राप, श्रीचंद्रं तं ददर्श च ॥ २४ ॥ तद्रूपमुखलावण्य-स्फूर्तिद्युतिचमत्कृतः । तत्र सिंहासने श्रेष्ठि-न्यस्ते भूप उपाविशत् ॥ २५ ॥ नमंतं दीपचंद्रस्तं,

श्रीचंद्रं स्नेहतश्चिरात् । अंकं नीत्वा सुखं प्राप, तद्यद्दौहित्रसंगतः ॥२६॥ वरदत्तः कुमारस्य, वृत्तं यावन्निवेदयेत् । तावद्वीणारवाद्यैस्तं, दृष्ट्वा सर्वमभाणि तत् ॥ २७ ॥ राजन्! स एव श्रीचंद्रः, प्रबंधे योऽवधारितः । गुणांभोधेर्गुणान्नास्य, वक्तुं गुरुरपि क्षमः ॥२८॥ वरस्तिलकमंजर्या, राधावेधविधायकः । श्रीचंद्रोऽयं चिरं जीया–द्याचकाशासुरद्रुमः ॥२९॥ भणितं च वीणारवेण, तदाह—राहावेहविहीई, सयंवरवरिओ य तिलयमंजरीए । सव्वनिवगव्वहरणो, वीरिको जयउ सिरिचंदो ॥ ३० ॥ इत्यादि ॥

ईदक्चरित्रवंतं तं, कुमारं तत्र संस्थितं । ज्ञात्वा प्रदीपवत्याद्याः, सद्यस्तं द्रष्टुमागताः ॥ ३१ ॥ तत्रस्थानां समस्तानां, यन्मोदादि तदाभवत् । श्रीचंद्रदर्शनान्नूनं, तद्धि जानाति केवली ॥३२॥ एषा चंद्रकला नूनं, कथमेवंविधं नरं । दृष्ट्वा न तोषमाप्नोति, सर्वेऽप्येवं वदंति च ॥३३॥ ततोऽसौ वरदत्तश्च (स्तां), भेटां मुक्त्वा नृपांतिके । भाग्यं मेऽद्य यदत्रागा–त्कुमारो यस्य हेतवे ॥ ३४ ॥ श्रीपादै राजलोकेन, गृहमेतत्पवित्रितं । इति स्तौति तदा राज्ञा, श्रीचंद्राय तदर्पितं ॥ ३५ ॥ युग्मं ॥ ऊचे च कुलशृंगार! कुमार! वरपुंगव! । एषा मद्भ्रातृजा पुत्री, चार्वी चंद्रकलाभिधा ॥३६॥ तत्पित्रा सुभगांगाख्य–राज्ञात्र पद्मिनी । सत्सामग्र्या विवाहार्थं, तदियं परिणीयतां ॥ ३७ ॥ युग्मं ॥ कुमारः प्राह सर्वेषा–माश्चर्योत्पादकं वचः । तातात्र चेन्न जल्पामि, तदा दुर्विनयो भवेत् ॥ ३८ ॥ यूयं पूज्या महांतश्च, सर्वत्राप्यात्मतुल्यतां । मन्यमानाः स्थ नात्रास्ति, तादृशत्वं मनागपि ॥ ३९ ॥ क्व सा पृथ्वीपतेः पुत्री, क्व चायं दासदासजः । संयोगः समयोर्भव्यो, न च नीचोच्चयोर्द्वयोः ॥ ४० ॥ युक्ता रत्नेन वज्रेण, शोभते स्वर्णमुद्रिका । महर्घ्या च भवेन्नृणां, न तु काचोपलांचिता ॥ ४१ ॥ रत्नमालेव काकस्य, कंठे मुक्तावलीव च । कुब्जस्य हृद्यकुल्यस्य, गृहे राजकनी तथा ॥ ४२ ॥ प्रासादशिखरस्थोऽपि, काकः किं याति

हंसतां । तथा राज्याभिषिक्तोऽपि, नीचो नाप्नोति कुल्यतां ॥ ४३ ॥ यतः—बालादपि हितं ग्राह्य-ममेध्यादपि कांचनं । नीचादप्युत्तमां विद्यां, स्त्रीरत्नं दुष्कुलादपि ॥ ४४ ॥ शास्त्रेऽस्तीत्युत्तमैर्ग्राह्यं, स्त्रीरत्नं दुष्कुलादपि । न त्वेवं सुकुलीना स्त्री, दुष्कुले नरि योज्यते ॥ ४५ ॥ किंच-सर्वासु राजधानीषु, महत्त्वं वो महत्तरः । स्वयंवरणमेलेन, विवाहा सुविधेरियं ॥ ४६ ॥ दीपचंद्रो नृपोऽवोच-त्तुष्टस्तद्वचनामृतैः । श्रूयतां नरकोटीर, वाक्यैरेभिरनुत्तरैः ॥ ४७ ॥ तव निःक्षोभ्यगंभीर-निरहंकारता-मयैः । सर्वथापि विवाहेऽस्मिन्, ज्ञाता ननु निरीहता ॥ ४८ ॥ युग्मं ॥ एतन्मेलेन सत्यं य-न्मुक्ता राजकनी पुरा । ईदृशैः सद्गुणैरेवा-वगतोत्तमता तव ॥ ४९ ॥ संति नीचा गुणैः केऽपि, कुलनीचाश्च केचन । त्वं तूच्चोऽसि गुणैरुच्चै-र्नापि नीचं वणिक्कुलं ॥ ५० ॥ रूपेण वयसा कांत्या, विद्वत्त्वेन च तुल्यता । युवयोर्दृश्यते तस्मा-दसादृश्यमिहास्ति किं ॥ ५१ ॥ नाहं नाहमिति प्राज्ञः, शिरोधूननपूर्वकं । नीचः प्रोच्चमुखीभूय, हुं हुमिति च जल्पति ॥ ५२ ॥ वाजिरासभवद्व्यक्तं, ततस्त्वयं बुध्यते बुधैः । काकोऽहमिति जल्पंश्च, हंसः किं वायसो भवेत् ॥ ५३ ॥ आश्रुत्य स्वगुणानन्य-दोषान् परगुणाः स्वयं । उच्यंते निज-दोषाश्च, सद्भिस्तच्छिक्षितं कुतः ॥५४॥ ततोऽत्र निर्विचारं नः, पूर्यंतां ते मनोरथाः । विधीयतां विवाहोऽयं, न विमृश्यं मना-गपि ॥ ५५ ॥ एवमुक्तेऽपि तं दृष्ट्वा, तदनिच्छं स भूपतिः । महज्ञातः कुमारोऽयं, नापि किंचिद्वदिष्यति ॥ ५६ ॥ ज्ञात्वेति श्रेष्ठिनः सर्वां, शिक्षां दत्त्वा तदोचितां । मुक्त्वा च चंद्रवत्याद्याः, स्त्रियस्तत्र गृहे ययौ ॥ ५७ ॥ युग्मं ॥

तदनु श्रेष्ठिना युक्त्या, कुमारो भोजितोऽञसा । सकलो राजलोकश्च, तोषितश्चंदनादिभिः ॥५८॥ ततो निर्गंतुकामोऽपि, स नीतः श्रेष्ठिना बलात् । राज्ञीभिश्च तदा सौधो-र्ध्वभूमौ चित्रमंडपे ॥ ५७ ॥ तद्युक्तः स यथास्थाने, निविष्टस्तत्र तावता ।

प्रभुः प्रदीपवत्याः स, वरचंद्रः समाययौ ॥५८॥ स श्रेष्ठी वरचंद्रश्च, प्रदीपा चंद्रवत्यपि । क्रमाचदुक्तवाक्यौघैः, श्रीचंद्रो न परीप्सितः ॥ ५९ ॥ नृपाभ्याद् ज्ञातवृत्तांतः, रूनीभ्राता प्रमोदभाक् । स वामांगस्तदा तत्र, तं द्रष्टुं शीघ्रमाययौ ॥ ६० ॥ संलापं तेषु कुर्वत्सु, सनर्मवचनैस्तदा । तद्रत्यर्थमिवायाता, शर्वरीवारवर्णिनी ॥ ६१ ॥ इतो ज्ञात्वा विवाहेऽनु–रसाहं तं कुमरं तदा । मात्राहूता कनी सापि, तद्भित्त्यंतरिता स्थिता ॥६२॥ ततः सूर्यवतीपुत्रं ( चन्द्रवतीसुतः ), श्रेष्ठी प्राह गुणोदधे ! । नृपपुत्र्या विवाहोऽयं, क्रियतां योग्यतास्ति यत् ॥ ६३ ॥ यद्वच्च शर्करा दुग्धे, कल्पवल्ली सुरद्रुमे । पद्मिनीयं तथा भावी, त्वयि योगोऽयमद्भुतः ॥६४॥ विवाहेनामुना पित्रो–र्भावि हि संमदो महान् । तेन त्वं गुणवन्नाशाः, सर्वेषां पूरयाधुना ॥६५॥ उवाच कुमरः श्रेष्ठिन्, युष्मदुक्तमिदं वरं । परमत्र मया नैत–त्कार्यं भाव्यधुना स्फुटं ॥ ६६ ॥ क्रीडार्थं मार्गितादेशो, यदग्रेऽहमिहागमं । निजपित्रोरनापृछ्य, तन्मेऽभूद् दूषणं महत् ॥ ६७ ॥ अन्यत्पुनरिदं कुर्वे, चेचत्तयोर्वदामि किं । पित्रादिपरतंत्राणां, लज्जैव हि गरीयसी ॥ ६८ ॥

ततश्चंद्रवती प्राह, कुमार वदसीह यत् । तत्ते कुलोचितं सर्वं, पितृभक्तिस्तु सुंदरा ॥ ६९ ॥ परमग्रे नृपामात्य–श्रेष्ठिपुत्रा अनेकशः । स्वस्वकर्मपरीक्षार्थं, भ्रमि भ्रमुः पदे पदे ॥ ७० ॥ पित्रादेशं विना तैः किं, राज्यं नात्तं धनानि च । कन्या न परिणीता किं, यद्भाग्याही हि संपदः ॥ ७१ ॥ पिता तिष्ठति तद्रूपः, सुतो भुंक्ते नृपश्रियं । सर्वेषां प्राक्तनं कर्म, दृश्यते हि पृथक्पृथक् ॥ ७२ ॥ तेन त्वं शास्त्रवेत्तासि, निषेधं मा कृथाः पुनः । प्राक्कर्मढौकितां कन्यां, वृणु वत्स ! त्वमीदृशीं ॥७३॥ तत् श्रुत्वा कुमरो याव–च्चिंतयेचेतसीति यत् । राज्ञी मन्मातृतुल्येयं, दास्येऽथास्याः किमुत्तरं ॥ ७४ ॥ तावद्वक्ति स वामांगः,

सोल्लासं कुमरस्य भोः ! । कीदृशं भवदस्त्येव, दुष्करं करपीडनात् ॥७५॥ ईदृशं क्वचिदस्माकं, न हि कः कथयत्यपि । धनं राज्यं विवाहं वा, गृही सन् को हि नेच्छति ॥ ७६ ॥ वरचंद्रो वदत्येवं, यद्विचित्रमिदं जगत् । ये संति लघुकर्माण-स्तेषां हि सर्वतो धृतिः ॥ ७७ ॥ करिष्यति कुमारोऽयं, विवाहं साग्रहं परं । विवेको जीवितव्यं हि, मानश्च महतां धनं ॥ ७८ ॥ अहो विवेकिरत्नेदं, त्वदुहृद्येवं भवेद्यदि । तदा स्यात्कोऽपि लग्नादि-निर्णयो विस्तरोऽपि च ॥ ७९ ॥ श्रीचंद्रस्तद्विवाहे सनिःस्पृहः प्राह भो ! ननु । भवंतः संतु राजानो, विमृश्यंतां हृदीति न ॥८०॥ वधूर्या यद्वणिग्गेहे, कर्म सद्रंधनादिकं । कुरुते सकलं तेन, तनेष्टास्ता वणिक्सुताः ॥ ८१ ॥ राजपुत्र्यस्तु तद्गेहे, यदि स्युर्दैवयोगतः । तज्जाने शतपत्राणि, कुट्यंतेऽहह दंडतः ॥ ८२ ॥ क्व वणिग्गृहनिसत्वं, क्व च लीला नृपौकसि । मन्यतेऽपीति वश्चित्तं, नास्माकं तु कथंचन ॥ ८३ ॥ वदंतः सांप्रतं संतु, सर्वेऽप्येकमुखे परं । सोढा त्वयैव पश्चाद्धि, शिलाधोंऽगुलिवत्खलु ॥ ८४ ॥ सर्वैरपि मिलित्वात्र, कथमेषा सुखैषिणी । स्थानेऽस्मिन् पात्यते हा हा, भियता दीर्घदर्शिता ॥८५॥ मा गा (गात्) वणिकुलेऽत्रैषा, विचिंत्येति पुरा मया । त्यक्ता राजकनी सापि, वृणुवे कथमिमां परां ॥ ८६ ॥ यदीयराजकन्याया, योगं कर्ता विधिर्यदि । मम तर्हि कुलेऽप्यस्मिन्नागारे कथं व्यधात् ॥ ८७ ॥ सर्वे तूष्णीं स्थितास्तत्र, तदा चंद्रकला भृशं । तदास्यादिगुणैर्विद्धा, साश्रुनेत्राऽभवत्तरां ॥ ८८ ॥ पुत्री तथाविधां ज्ञात्वा, चतुरासुखतस्ततः । राज्ञी प्रदीपवत्याह, कृत्वा तां स्वांकसन्निधौ ॥ ८९ ॥ कुमार निपुणत्वादि-कलया गेऽङ्गणा तथा । निःसीमरूपलावण्य-स्फूर्तिकांत्यादिभिर्गुणैः ॥९०॥ जानेऽहं त्वयि दीप्रांगे, महः क्षात्रं विजृंभते । वणिग्वणिजामि प्राय, सखिं जल्पसि नोऽग्रतः ॥ ९१ ॥ युग्मं ॥ यद्वासि वणिगेव त्वं, कर्मकर्त्रीयमेव च । इति ज्ञात्वैव तेऽस्माभि-

र्दीयतेऽसौ कथात्र का ॥ ९२ ॥ किं च सा प्राग्वृता कन्या, त्वामेव हि वरिष्यति । परं भाग्यवतीयं य-द्विवाहः प्राग्भविष्यति ॥ ९३ ॥ अस्याः करस्य संस्पर्शा-द्बह्वयोऽपि नृपकन्यकाः । त्वां वरिष्यंति राज्यं च, भावि ते संशयोऽत्र न ॥ ९४ ॥ नैमित्तिकवचोऽस्त्येवं, तज्जाने कुलमंडन । चकार शकुनग्रंथिं, गुणचंद्रस्तदांचले ॥ ९५ ॥ अन्यच्च त्वत्कुलग्रामा-भिधानाद्यनभिज्ञया । अनया यत् श्रुतस्तात-शेमुष्या त्वं धृतस्तदा ॥ ९६ ॥ तन्मन्यस्व कुमारास्याः, प्राग्भवस्नेहकारणं । ततोऽनु द्राग्गृहदंतीं तां, त्वं कथं मोक्तुमर्हसि ॥९७॥ युग्मं ॥ पद्मिन्येषा जिनार्चादि-धर्मकृत्यानि तन्वती । सिद्धांतोक्तविचारज्ञा, श्रीसम्यक्त्वपवित्रहृत् ॥ ९८ ॥ आवर्तयत्यहोरात्रं, परमेष्ठिनमस्कृतिं । सुशीला च सती नूनं, वृणुते मनसापि यं ॥ ९९ ॥ अस्यास्तदन्यथाकर्तु-मिंद्रादयोऽपि न क्षमाः । तत ओंभणनादस्या, इहास्माकं सुखं कुरु ॥ ४०० ॥ त्रिभिर्विशेषकं ॥ श्रीचंद्रः स्वगतं केषां-चिन्मया न मतं वचः । परमस्या महाराज्ञ्याः, प्रतिवक्तुं न शक्यते ॥ १ ॥ यद्दाक्षिण्यमिहातीव, कन्यास्नेहोऽप्यनीदृशः । न निषिद्धमनुमेने, तदेत्युक्त्वा नृपांगना ॥ २ ॥ हर्षाचंद्रकलां तत्रा-हूय प्राह स्वमात्मजे । प्रक्षिपास्मिन् मनोऽभीष्टे, वरमालां वरे वरे ॥ ३ ॥ युग्मं ॥ तन्मुखेंदुं सुपश्यंत्या, तया सद्यस्तथा कृतं । लज्जया मातृपृष्ठौ सा, स्थिता तद्रूपदत्तदृक् ॥ ४ ॥ ततः सर्वत्र संजज्ञे, विवाहमंगलोत्सवः । वरचंद्रादयः सर्वे, हृष्टाः सख्यश्च ता अपि ॥ ५ ॥ यामिन्यां यामशेषायां, किंचिद्विमृश्य सोऽर्च्यधीः । ततः कायमिषं कृत्वा-ऽधस्तात्प्राप समातलिः ॥ ६ ॥ तावता गुणचंद्रेण, राज्ञीनां प्रोक्तमीदृशं । कुमारश्चेद्रथारूढो, यातेव स्वपुरे तदा ॥ ७ ॥ तत् श्रुत्वा मंक्षु वामांगः, सख्यश्च चतुरादिकाः । रथपार्श्वात्कुमारेंद्रं, तत्स्थाने निन्यिरे पुनः ॥ ८ ॥ ततः सा चंद्रवत्याह, कुमार पृच्छ्यतामिह । विद्याभ्यासः कियानस्याः,

किं वक्ति च विलोक्यते ॥ ९ ॥ उवाच कुमरः पाणौ, लात्वा हि पत्रवीटकं । के तांबूलगुणाः प्रोक्ता-श्चतुरे गृह्यतामिदं ॥ १० ॥ ततश्चंद्रकला भर्तृ-वाक्याद्रोमांचकंचुका । सख्यास्तद्वीटकं प्राप्य, जगाद मधुरस्वरं ॥ ११ ॥ यतः-तांबूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं, वात(पित्त)घ्नं कफनाशनं कृमिहरं दुर्गंधनिर्नाशनं । वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसंदीपनं, स्वामिन्नेभिरिदं त्रयोदशगुणैर्युक्तं प्रसादीकृतं ॥ १२ ॥ तथांतरंगवीटकं कीदृशमिति पृष्टे पुनः साह-सन्नागपत्राणि मिथः प्रियं वचः, सुप्रेमपूगानि सुदृष्टिचूर्णकः । संतोष(संभोग)कर्पूरसुगंधवर्तिका, तवेदृशं वीटकमस्तु मे विभो ॥ १३ ॥ कुमारीसंज्ञया चतुरयांतरंगवीटकं पृष्टः श्रीचंद्र आह-सत्यं वचो नागरखंडवीटकं, सम्यक्त्वपूगं शुभवर्णचूर्णकं । स्वाध्यायकर्पूरसुगंधपूरितं, तदस्तु सख्यः शिवसौख्यकारकं ॥ १४ ॥ अथ स्नानगुणाः कियंत इति पृष्टा सा प्राह—

स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं, सौभाग्यायतनं मलापहरणं संवर्धनं तेजसः । रूपोद्योतकरं शिरःसुखकरं कामाग्निसंदीपनं, स्त्रीणां मन्मथमोहनं श्रमहरं स्नाने दशैते गुणाः ॥१५॥ तथांतरंगक्षिप्रा केति पृष्टः स आह-गुणतंडुलनिष्पन्ना, सन्मैत्रीदालिसुंदरा । सम्यक्त्वघृतसंपूर्णा, क्षिप्रिका भुज्यतामियं ॥ १६ ॥ कुमारपृष्टा सा लपनश्रीकाव्यमाह-श्लक्ष्णं गोधूमचूर्णं घृतगुडसहितं नालिकेरस्य खंडं, द्राक्षाखर्जूरसुंठीतजमिरिचयुतं पेशलं देवपुष्पं । पक्कं ताम्रे कटाहे टलविटलतटे मंदवह्निप्रदीप्ते, धन्या हेमंतकाले प्रचुरघृतयुतं भुंजते लापशीयं ॥ १७ ॥ कुमारीभ्रूसंज्ञया कोविदासख्यांतरंगलपनश्रीभोज्ये पृष्टे कुमारः प्राह-लपनश्रीस्त्रिधा भक्ति-श्चित्तभक्तिसुराजिता । सा नित्यं भुज्यमाना हि, तनुशोभां वितन्वतां ॥ १ ॥ कुमार्या पृष्टः स घटककाव्यमाह-हिंगोर्जीरैर्मरीचैर्लवणपटुतरैरार्द्रकापूर्णगर्भं, स्निग्धं सुस्वादगंधं परिमलबहुलं कुंकुमाद्यैश्च युक्तं । क्षिप्तं

र्दीयतेऽसौ कथात्र का ॥ ९२ ॥ किं च सा प्राग्वृता कन्या, त्वामेव हि वरिष्यति । परं भाग्यवतीयं य-द्विवाहः प्राग्भविष्यति ॥ ९३ ॥ अस्याः करस्य संस्पर्शा-द्बह्वयोऽपि नृपकन्यकाः । त्वां वरिष्यंति राज्यं च, भावि ते संशयोऽत्र न ॥ ९४ ॥ नैमित्तिकवचोऽस्त्येवं, तज्जाने कुलमंडन । चकार शकुनग्रंथिं, गुणचंद्रस्तदांचले ॥ ९५ ॥ अन्यच्च त्वत्कुलग्रामा-भिधानाद्यनभिज्ञया । अनया यत् श्रुतस्तात-शेमुष्या त्वं वृतस्तदा ॥ ९६ ॥ तन्मन्यस्व कुमारास्याः, प्राग्भवस्नेहकारणं । ततोऽनु द्रागुदंतीं तां, त्वं कथं मोक्तुमर्हसि ॥९७॥ युग्मं ॥ पद्मिन्येषा जिनार्चादि-धर्मकृत्यानि तन्वती । सिद्धांतोक्तविचारज्ञा, श्रीसम्यक्त्वपवित्रहृत् ॥ ९८ ॥ आवर्तयत्यहोरात्रं, परमेष्ठिनमस्कृतिं । सुशीला च सती नूनं, वृणुते मनसापि यं ॥ ९९ ॥ अस्यास्तदन्यथाकर्तु-मिंद्रादयोऽपि न क्षमाः । तत ओंभणनादस्या, इहास्माकं सुखं कुरु ॥ ४०० ॥ त्रिभिर्विशेषकं ॥

पां-चिन्मया न मतं वचः । परमस्या महाराज्याः, प्रतिवक्तुं न शक्यते ॥ १ ॥ यद्दाक्षिण्यमिहातीव,

स्य, सामग्रीं तामकारयत् ॥ २९ ॥ मत्सुतापुरनास्तव्यः, श्रेष्ठिधूत्तुरयं ततः । मत्सुतापुनमेवामुं, मत्वा प्रदीपनत्यपि ॥ ३० ॥
तदा श्रीचंद्रपार्श्वस्था, विनाहस्योत्सवान् व्यधात् । सप्तभूमिक आवासे, सामग्रीं सकलां च तां ॥३१॥ युग्मं ॥ विवाहारम्भे
सोऽभा-त्सदीयैरेव भूषणैः । मौलिकुंडलहाराद्यै-र्दीप्रांगत्वात्तु नापरैः ॥ ३२ ॥ तस्मिन् घस्रे शुभे वारे, सौम्ये लग्नेऽतिसुंदरे ।
वर्णकोद्वर्णकविधौ, विधितो विहिते सति ॥ ३३ ॥ वारस्त्रीभिः कुलस्त्रीभि-र्वितीर्णधवलध्वनिः । वादित्रकोटिध्वनिभि-र्बधिरी-
कृतदिङ्मुखः ॥ ३४ ॥ बंदिवृंदकलोत्कीर्त्य-मानकीर्तिकुलक्रमः । चतुर्दिशं चतुरंगा-नीकिनीपरिवारितः ॥ ३५ ॥ गजारूढः
कुमारश्च, मंडपद्वारमीयिवान् । कृताचारस्थितिस्तत्र, मातृगेहमथाश्रयत् ॥३६॥ चतुर्भिः कलापकम् ॥ पुण्याहधवलानंदि(लनंदी)-
तूर्यध्वनिषु सत्सु सः । लग्नांशोदयवेलायां, हस्तालेपपुरस्सरं ॥३७॥ कलां चंद्रकलां पाणौ, चक्रे तदनु कारितः । दैवज्ञेन समं
यथा, तारामेलविधिर्मिथः ॥ ३८ ॥ तत्रैवं सर्वथोत्कृष्ट-विधिना विस्तरेण च । श्रीचंद्रवरराजस्य, विवाहः समजीजनत् ॥ ३९ ॥
त्रिभिर्विशेषकं ॥ तदा तु दीपचंद्रेण, पूर्जनैश्च महो महान् । चक्रे यत्तादृशे योगे, को हि न स्यात्प्रमोदभाक् ॥ ४० ॥ करमो-
चनवेलायां, दीपचंद्रो गजादिकं । चतुरंगचमूरूप्य-स्वर्णरत्नादिकं च तत् ॥ ४१ ॥ श्रीचंद्रस्य ददौ हर्षा-द्यथाशक्त्या परे-
ऽपि हि । धरणेंद्रार्पितं हारं, तदादाच्चंद्रवत्यपि ॥ ४२ ॥ युग्मं ॥ वामांगेन कनीभ्रात्रा-नीतं सिंहपुरात्पुरा । तत्सर्वं कुमरस्या-
स्यो-त्साहात्साधिकमर्पितं ॥४३॥ प्रत्येकं पंचवर्णाना-मश्वानां रथिनां तथा । पल्यंकश्रीकरीपुष्प-मुद्रिकापट्टवाससां ॥४४॥
मकचोलकस्थाल-सिंहासनमहानसां । मुकुरोच्छीर्षकादीनां, वितानानां विचित्रिणां ॥ ४५ ॥ तलिपकादीपिकादीना-मुष्ट्रा-
श्वन(त)रसद्भवां । कुंभवादित्रवेषाणां, नृवाहनपटौकसां ॥ ४६ ॥ वयोल्पदासदासीना-मंगभक्तिविधायिनां । भद्रासनपताकानां,

दंतांतराले शुकशुककुरुते व्यक्तशब्दं यथा स्या-द्धन्यानां वै कपोले प्रविशति चटकं कांतया प्रेमदत्तं ॥ १ ॥ एवं मनीषितां गोष्ठी-मन्योन्यं कुर्वतोस्तयोः । ततः प्राप्ता निजं स्थानं प्रदीपा चंद्रवत्यपि ॥ १८ ॥

इतस्तत्र कनीमाह, वामांगश्चतुरापि च । श्रीचंद्र इति नामैत-दर्थांतरेण वर्णय ॥ १९ ॥ पुनः पुनः पृष्टा चंद्रकला प्राह-लक्ष्मीकेलिसरोऽम्बुहासनिचयः काष्ठावधूदर्पणः, श्यामावल्लिसुमं खसिंधुकुमुदं व्योमाब्धिफेनोद्गमः । तारागोकुलशुक्लगौरतिगृहं छत्रं स्मरक्ष्मापते-श्चंद्रः श्रीसकलश्चिरं विजयतां ज्योत्स्नासुधावापिका ॥ २० ॥ ततः सर्वे तमाहुस्ते, तत्सख्यश्च कुलार्यमन् । आख्या चंद्रकलेत्येषा, युक्त्यानयैव वर्ण्यतां ॥ २१ ॥ नितरां पृष्टः श्रीचंद्र आह-ॐकारो मदनद्विजस्य गगनक्रोडैकदंष्ट्रांकुर-स्तारामौक्तिकशुक्तिरंधतमसः स्तंबेरमस्यांकुशः । शृंगारार्गलकुंचिका विरहिणीमानच्छिदाकर्तरी, संध्यावारवधूनखक्षतिरियं चांद्री कला राजते ॥ २२ ॥ तदा चमत्कृताः प्रोचु-स्तद्विद्वत्त्वकलागुणैः । हंसंत्यश्चंद्रवत्याद्या, योगोऽयं सदृशोऽमिलत् ॥ २३ ॥ स्तुवंतस्ते कुमारं तं, लात्वा प्रातर्नृपौकसि । चलंतः श्रेष्ठिना प्रोक्ता, नैवं तत्रायमेष्यति ॥ २४ ॥ श्रीचंद्रः स्वगृहे कर्ता, देवपूजादिकां क्रियां । श्रुत्वेति ते ततो जग्मुः, सर्वे चंद्रकलायुताः ॥ २५ ॥

इतश्च दीपचंद्रेण, पृष्टः सन् गणकोऽवदत् । लग्नमेतद्विवाहस्य, कल्य एवास्ति सद्ग्रहं ॥ २६ ॥ दीपचंद्रस्ततः प्राह, सुभगांगनृपः कथं । एताऽत्यासन्नलग्नेऽस्मिन्, नैता कौशस्थलोऽपि कः ॥ २७ ॥ निमित्तज्ञो जगौ राजन्, लग्नं कल्यतनं शुभं । राधस्य शुक्लपंचम्यां, वह्निरेखोपशोभितं ॥ २८ ॥ तेनैतत्साध्यतां पश्चा-द्भावी सर्वोऽपि विस्तरः । ततो राजा विवाह-

१ 'हसंतो धरचंद्राद्या' इति प्रतौ पाठः ।

स्य, सामग्रीं तामकारयत् ॥ २९ ॥ मत्सुतापुरवास्तव्यः, श्रेष्ठिधनुरयं ततः । मत्सुतापुत्रमेवामुं, मत्वा प्रदीपवत्यपि ॥ ३० ॥ तदा श्रीचंद्रपार्श्वस्था, विवाहस्योत्सवान् व्यधात् । सप्तभूमिक आवासे, सामग्रीं सकलां च तां ॥३१॥ युग्मं ॥ विवाहावसरे सोऽभा–त्तदीयैरेव भूषणैः । मौलिकुंडलहाराद्यै–र्दौप्रांगत्वात्तु नापरैः ॥ ३२ ॥ तस्मिन् घस्रे शुभे वारे, सौम्ये लग्नेऽतिसुंदरे । पर्णकोद्वर्णकविधौ, विधितो विहिते सति ॥ ३३ ॥ वारस्त्रीभिः कुलस्त्रीभि–र्वितीर्णधवलध्वनिः । वादित्रकोटिध्वनिभि–र्बधिरीकृतदिङ्मुखः ॥ ३४ ॥ बंदिवृंदकलोत्कीर्त्य–मानकीर्तिकुलक्रमः । चतुर्दिशं चतुरंगा–नीकिनीपरिवारितः ॥ ३५ ॥ गजारूढः कुमारश्च, मंडपद्वारमीयिवान् । कृताचारस्थितिस्तत्र, मातृगेहमथाश्रयत् ॥३६॥ चतुर्भिः कलापकम् ॥ पुण्याहधवलानंदि(लनंदी)–तूर्यध्वानेषु सत्सु सः । लग्नांशोदयवेलायां, हस्तालेपपुरस्सरं ॥३७॥ कलां चंद्रकलां पाणौ, चक्रे तदनु कारितः । देवज्ञेन समं बध्वा, तारामेलविधिर्भिषः ॥ ३८ ॥ तत्रैवं सर्वथोत्कृष्ट–विधिना विस्तरेण च । श्रीचंद्रवरराजस्य, विवाहः समजीजनत् ॥ ३९ ॥ विभिर्विशेषकं ॥ तदा तु दीपचंद्रेण, पूर्जनैश्च महो महान् । चक्रे मचाहशे योगे, को हि न स्यात्प्रमोदभाक् ॥ ४० ॥ करमोचनवेलायां, दीपचंद्रो गजादिकं । चतुरंगचमूरूप्य–स्वर्णरत्नादिकं च तत् ॥ ४१ ॥ श्रीचंद्रस्य ददौ हर्षा–द्यथाशक्त्या परेऽपि हि । धरणेंद्रार्पितं हारं, तदादाच्चंद्रवत्यपि ॥ ४२ ॥ युग्मं ॥ वामांगेन कनीभ्रात्रा–नीतं सिंहपुरात्पुरा । तत्सर्वं कुमारस्याग्रे–ऽस्थापयत्ताधिकमर्पितं ॥४३॥ प्रत्येकं पंचवर्णाना–मश्वानां रथिनां तथा । पल्यंकश्रीकरीयुग्म–मुद्रिकापट्टवाससां ॥४४॥ ...सिंहासनमहानसां । मुकुरोच्छीर्षकादीनां, वितानानां विचित्रिणां ॥ ४५ ॥ तल्पिकादीपिकादीना–मुष्ट्रा–...णां । ...दिरवेषाणां, नृवाहनपटौकसां ॥ ४६ ॥ वयोल्पदासदासीना–मंगभक्तिविधायिनां । भद्रासनपताकानां,

शस्त्रभृन्मुद्गरांचिनां ॥ ४९ ॥ कुंततूणीरकोदंड-दंडिखड्गिगदाभृतां । शक्तिभृत्फलकभ्राजि-वर्मभृच्चक्रधारिणां ॥४८॥ प्रत्येकं भूषणानां च, पंचपंचशती ददे । तदा च नवबद्धानां, नाटकानां च षोडश ॥ ४९ ॥ षड्भिः-कुलकं ॥ चतुराकोविदानंदा-प्रियंवदादयस्तथा । वर्या द्वासप्ततिः सख्यः, साभरणा ददिरे तदा ॥ ५० ॥ अन्यच्चापि यथायोगं(ग्यं), दत्त्वा वामांग ऊचिवान् । छत्रचामरहस्त्यादि-राज्यांगान्यखिलान्यथ ॥५१॥ सुभगांगनृपो(गः पिता)ऽभ्येत्य, विस्तराद्वितरिष्यति । जामातुर्वस्तु यद् हृद्यं, तत्सर्वमर्प्यतेऽधुना ॥ ५२ ॥ युग्मं ॥ प्रभाते स गजारूढः, श्रीचंद्रः समहोत्सवं । सकिरीटः पुरस्कृत्य, हृष्टां चंद्रकलां प्रियां ॥५३॥ स्थाने स्थाने पुरीमध्ये, गीतनृत्यादियोगतः । तिष्ठन् याति तदा मार्गे, यज्जज्ञे शृणु तत्र तत् ॥५४॥ युग्मं ॥ इतः कनकदत्तस्य, पुत्री रूपवती कनी । श्रीचंद्रस्यानुरक्ताऽभूत्, पित्रोरग्रे जगाद च ॥५५॥ श्रीचंद्रोऽयं पतिर्मेऽस्तु, करोमि नापरं पतिं । पित्रोक्तं वत्से मूढासि, किं न वेत्सि करग्रहे ॥५६॥ पद्मिन्या अप्ययं तस्याः, षड्भिर्यामैर्नृपादिभिः । बलात्सज्जीकृतः सोऽत्र, त्वां वृणोतीदृशीं कथं ॥ ५७ ॥ युग्मं ॥ श्रुत्वेति सा पितुर्वाचं, गृहवातायनस्थिता । तदा तस्मिन् गवाक्षाधः, प्राप्ते श्रीचंद्रकुंजरे ॥ ५८ ॥ भावार्थवृत्तयुग्भूर्जं, पुष्पमालाभिवेष्टितं । तथा मुमोच तत्रस्था, दंपत्यग्रे यथापतत् ॥ ५९ ॥ युग्मं ॥ श्रीचंद्रेण तथायातं, तद्दृष्ट्वोर्द्धं विलोकितं । सा कनी तद्गवाक्षस्था, तदा दृष्टानुरागिणी ॥ ६० ॥ वृत्तांते ज्ञापिते तस्याः, पत्न्या श्रीचंद्रभूपभूः । तत्पत्रं वाचयामास, भावार्थं ज्ञातवांश्च सः ॥ ६१ ॥ तथाहि-निरर्थकं जन्म गतं नलिन्या, यया न दृष्टं तुहिनांशुबिंबं । उत्पत्तिरिंदोर्विफला च येन, स्पृष्टा प्रफुल्ला नलिनी करैर्न ॥६२॥ भूर्जं चंद्रकला-

१ ' कुंतितोणीरकोदण्ड ' इति प्रतौ पाठः ।

यास्त–त्समर्प्य स कुमारराट् । स्थाने स्थाने ददद्दानं, विलोकयन्निवस्ततः ॥ ६३ ॥ प्राप्तः स्वोत्तारके तत्र, चक्रे तदोचितं विधिं । भोजयामास पूर्लोकान्, भक्त्या तद्दिन एव सः ॥ ६४ ॥ युग्मं ॥ तद्वधूवरयोर्मात्रो–र्द्वयोरपि विधेर्वशात् । जज्ञे तद्दीपचंद्रस्य, गृहं पितृगृहं तदा ॥ ६५ ॥ श्रेष्ठिपुत्र्या तदा प्रैषि, सख्येका तत्र तेन च । मेने चंद्रकलावाचा, ज्ञास्यते नाधुना परं ॥ ६६ ॥ इतो धीरप्रधानेन, गृहीतः कुमरस्तदा । प्राप्यते तद्विवाहार्थं, पुरे तिलकनामनि ॥ ६७ ॥ श्रीचंद्रस्तत्र पद्मास्यः, प्रधानं प्रत्यबोधत । लक्ष्मीदत्तः पिता सर्व–मेतज्जानाति न त्वहं ॥६८॥ वीणारवस्तदोवाच, कुमार त्वद्गुणाद्भुतं(णस्तुतिं) । किंचिच्छ्रावितुमिच्छामि, स तं प्राहाधुनात्र न ॥ ६९ ॥ द्वितीयेऽह्नि कुमारः स, दीपचंद्रादिभिर्भृशं । श्वशुरस्यागमं याव–त्स्थापितोऽपि स्थितो न हि ॥ ७० ॥ स्वपुरं प्रति सर्वेषां, लात्वानुमतिमाग्रहात् । गजांस्तत्रैव मुक्त्वा च, शेषमादाय सोऽचलत् ॥ ७१ ॥ मार्गे कियत्यतिक्रांते, नृपादीन् पूर्जनानपि । श्रीचंद्रः स्थापयामास, नतिपूर्वं पृथक्पृथक् ॥ ७२ ॥ तद्भक्तिरंजिताः सर्वे, बह्वश्रुक्लिन्नलोचनाः । कन्यादीनां यथायोग्यं, शिक्षां दत्वा ततोऽवलन् ॥ ७३ ॥ तदा राज्ञी प्रदीपापि, माता चंद्रवती तथा । अदात् कुलांगनायोग्यां, शिक्षां चंद्रकलां प्रति ॥ ७४ ॥

अभ्युत्थानमुपागते गुरुपतौ तद्भाषणे नम्रता, तत्पादार्पितदृष्टिरासनविधिस्तस्योपचार्यः (पचर्या) स्वयं ॥
सुप्ते तत्र शयीत तत्प्रथमतो मुंचेच्च शय्यामपि, प्रोचैः पुत्रि निवेदिताः कुलवधूसिद्धांतधर्मा अमी ॥ ७५ ॥

तत्रत्यानां च सर्वेषां, शिक्षां दत्त्वा पृथक्पृथक् । तांवप्यवलतां[1] साश्रु–पातेन मार्गणा अपि ॥ ७६ ॥ कुमारदत्तवस्त्राश्व–

१ 'ते अप्यवलतां' इति पाठः सम्भवति ।

सर्वस्मिंश्च(स्मिन्व)लिते तत्र, स्वपितृ-
स्वर्णद्रव्यादिपूरिताः । तस्थुः स वरदत्तोऽपि, तदादेशाचतोऽचलत् ॥ ७७ ॥ युग्मं ॥ धीरसेनान्वितां स्वीयां, चमूं विमुच्य मंदगां । गुणचंद्रं
मिलनोत्सुकः । परिवारयुतां चंद्र-कलां प्रबोध्य युक्तिभिः ॥ ७८ ॥ श्रीचंद्रः स्यंदनस्थश्च, चचाल वेगतस्ततः । तद्दिनस्य निशि प्राप्तो(प्ते), मुक्त्वा
च तत्सारा-कृते संस्थाप्य सूतयुक् ॥ ७९ ॥ तदैव स्वगृहे गत्वा, पित्रोः पादाननाम च। हर्षाश्रुपूर्णनेत्राभ्यां, पितृभ्यां स्नेहपूर्वकं ॥८१॥ संपृष्टं पंच-
च श्रीपुरे रथं ॥८०॥ दिन्येषा, कुमार त्वद्वियोगतः । दुःखदाजनि नो याह-ग्मा भूदीदृग्रिपोरपि ॥ ८२ ॥ कुत्रास्थास्तदियत्कालं, वत्स त्वं
सुखभागभूः । स्वेच्छया किं स्थितश्चासीः, केन वा स्थापितो बलात् ॥ ८३ ॥ युग्मं ॥ श्रीचंद्रः प्राह भोस्तात, युष्मत्प्रसा-
दतो मम । सर्वत्रापि जयः सौख्यं, सन्मानं चाभितोऽभवत् ॥ ८४ ॥ किं च मे कुत्रचित्स्थाने, क्रीडां विदधतः सुखात् ।
अमिलद्वरदत्तः स, श्रेष्ठी तेन बलादहं ॥ ८५ ॥ अदूरं स्थापितोऽभूवं, तस्य कश्चिन्महोऽजनि । प्रगेऽद्य ज्ञापयित्वा त-महम-
त्रागमं पितः ॥ ८६ ॥ युग्मं ॥ पिताह वत्स तुष्टेन, ज्ञातत्वचरितेन च । राज्ञा प्रतापसिंहेन, तव रत्नपुरं पुरं ॥ ८७ ॥ दत्त-
मस्ति ततस्त्वं हि, युक्त्या तं मिल सद्दिने । स आह श्रीमदादेशः, प्रमाणं भवतु मम ॥ ८८ ॥ युग्मं ॥

ततो मात्रा वपुः स्नो-र्वस्त्राणि मुंचतोंचलात् । प्रमार्जयंत्या मदन-फलं दृष्टं करेऽद्भुतं ॥८९॥ तद् दृष्ट्वा हृष्टचित्ता सा,
पत्युर्ज्ञापितवत्यदः । पश्यतात्मभुवः पाणौ, किमस्त्युद्वाहहेतुभृत् ॥९०॥ तद्विलोक्य पिता प्रोचे, किमिदं वत्स किं ह्यभूत् । वद
हर्षापयोद्वाह-वर्धापनिकयाऽनया ॥ ९१ ॥ श्रीचंद्रः प्राह तातैत-न्निमित्तज्ञेन केनचित् । मत्करे सप्रभावत्वा-द्बद्धं चालभ्यला-
भकृत् ॥ ९२ ॥ ततः स्वीये गृहे सोऽस्था-त्कदाचित्क्रीडने रतः । कदाचित् श्रीपुरेऽन्यत्रो-द्यानादौ च कदाचन ॥ ९३ ॥

तथा चान्यदिने स्वीया-वासोर्द्धं कुमरे स्थिते । श्रेष्ठिनि स्वगृहांतःस्थे, सा वधूर्गुणचंद्रयुक् ॥ ९४ ॥ नितरां वाद्यनिर्घोष-संपूरितदिगंतरा । याचकैः पौरलोकैश्च, स्तूयमाना समंततः ॥ ९५ ॥ कुत्र यातीति सर्वेषा-मत्याश्चर्यविधायिनी । आयात् श्रेष्ठिगृहद्वारे, संरवश्च तदात्यभूत् ॥ ९६ ॥ त्रिभिर्विशेषकं ॥ श्रेष्ठी च संभ्रमाचास्मिन्, श्रुते कोलाहले घने । किं किमेतद्ब्रु-दन्नेवं, मुद्रिकादि च गोपयन् ॥ ९७ ॥ यावदेति बहिस्ताव-त्सैन्यं दृष्ट्वाकुलोऽजनि । तदेत्य गुणचंद्रस्तं, नत्वाख्यातुं प्रच-क्रमे ॥ ९८ ॥ युग्मं ॥ तातेयं वो वधू राज-पुत्री चंद्रकलाभिधा । तद्विवाहादिकं सर्वं, प्रोच्य भूपसुतां जगौ ॥ ९९ ॥ स्वा-मिन्यत्रैष वः पूज्यः, श्वश्रूश्चैषा प्रणम्यतां । तया तत्र महाश्चर्य-कृत्सखीजनयुक्तया ॥ १०० ॥ तथा कृतं ततः श्रेष्ठी, पद्मिनीं तां तथाविधां । दृष्ट्वा हृष्टः सपत्नीकः, सोत्कंठमाललाप च ॥१॥ युग्मं ॥ रथवाज्यादिकं सर्वं, श्रेष्ठिन् क्व स्थापयिष्यते । गुण-चंद्रेणेति पृष्टः, श्रेष्ठी तं प्राह गम्यतां ॥२॥ पृच्छयतां च कुमारोऽत्र, यथादेशं विधीयतां । तद्विज्ञप्तः कुमारेशो, गवाक्षस्थो भटादिकं ॥३॥ सर्वं सादरमालाप्य, यथास्थानं समादिशत् । श्रीकरीवाहनादीनि, श्रीपुरेऽस्थापयच्च सः ॥४॥ त्रिभिर्विशेषकं ॥ तद्विवाहादिकं श्रुत्वा, श्रेष्ठ्यूचे कुमरं प्रति । यत्सैवं यत्त्वयोत्कृष्टं, चक्रे नः पृच्छतां च यत् ॥ ५ ॥ नाज्ञापि तत्तवैवास्ति, धैर्यं निर्गर्वताप्यहो । नास्माकं कोऽपि हर्षोऽभू-त्वत्प्रवेशोत्सवादिकः ॥६॥ ततश्चंद्रकला सप्त-भूमिके कुमरालये । आयासीत्सपरी-वारा, गिरा पत्युः सुखं स्थिता ॥ ७ ॥ ततः श्रेष्ठिगृहं सर्वं, मंत्रिभिर्व्यवहारिभिः । तत्स्त्रीभिः सहर्षाभि-र्गायनैश्च घनैर्भृतं ॥ ८ ॥ गीतगानादिदानादि-स्फारस्तत्रोत्सवोऽजनि । तानि वस्तूनि पश्यंतो, हृष्टा लोकाश्च जज्ञिरे ॥ ९ ॥ केचिद्भाग्यं गुणान् रूपं, श्रीचंद्रस्य रथादिकं । केचिच्च पद्मिनीरूप-मुख्यं शंसंति पूर्जनाः ॥ १० ॥

इतो जयादयस्तत्र, सार्धे धीरस्य मंत्रिणः । आयातं गायनं वीणा–रवं विज्ञाय वेगतः ॥ ११ ॥ आहूय सादरं प्रोचुः, श्रीचंद्रस्य किमु त्वया । प्रबंधोऽकारि तेनैव–मित्युक्ते ते पुनर्जगुः ॥१२॥ तस्मिंस्तच्छ्रवणात्तुष्टे, याचयेस्तं तुरंगमं । द्वयोरेको (कं) यथा तस्य, तदनु स्खलयते गतिः ॥ १३ ॥ तत्कृते तव तन्मूल्यं, दास्यामः साधिकं वयं । इत्येतद्भद्र नः कार्यं, कार्यमेव त्वया ध्रुवं ॥ १४ ॥ दाक्षिण्यात्तद्रयाचेन, प्रपेदे तद्वचस्तदा । तादृगुत्पद्यते बुद्धि–र्यादृग्हि भवितव्यता ॥ १५ ॥ ततः श्रेष्ठ्यनुमत्या द्रा–ग्द्वितीयेऽह्नि स गायनः । कुमाराग्रे प्रबंधं तं, सुयुक्त्या गातुमुद्यतः ॥ १६ ॥ तदा तत्राययुः, श्रोतु–मनेके व्यवहारिणः । मंत्रिणः स्वजनाद्याश्च, नरा नार्यो मुदान्विताः ॥ १७ ॥ लक्ष्मीवती वधूयुक्ता, स्थिता तत्रास्ति सस्पृहा । परिवारवृतो धीर–मंत्र्यप्यन्ये च भूरिशः ॥१८॥ राधावेधादिसंबंधो, यादृशोऽभूत्पुरा तदा । नृपाणां नृपपुत्राणां, नामस्थानादिवर्णनात् ॥ १९ ॥ तेषां तत्रागतानां च, राधावेधस्य साधना । श्यामास्यत्वांह्रिहस्तादि–कंपनादिविडंबना(नात्) ॥ २० ॥ सर्वेषां तत्र हास्यादि–रसोत्पत्तिर्यथाभवत् । यथा च नृपपुत्रास्ते, पित्रादीनां च दुःखता ॥ २१ ॥ यथा तत्समयेऽकस्मात्, श्रीचंद्रस्य समागमः । राधावेधस्य तेनैव, यथाकारि च साधनं ॥ २२ ॥ तत्कृत्वा च समित्रः स, रथारूढो यथागमत् । कन्यादीनां विलापादि, नृपादीनां विसर्जनं ॥ २३ ॥ धीरमंत्री कुमारस्य, निमंत्रणकृते यथा । प्रैषीदित्यादि तत्सर्वं, सविस्तरं तथा तथा ॥ २४ ॥ स गातुमलगत्तत्र, श्रोतॄणां सुखकारणं । स्थाने स्थाने ददुस्तस्य, श्रेष्ठ्याद्या रैधनादिकं ॥ २५ ॥ कुलकं ॥ निशांते तत्प्रबंधांते, स हर्षाद्गायनाग्रणीः । श्रीश्रीचंद्रगुणश्लोकान्, पपाठानेकशोऽद्भुतान् ॥ २६ ॥ तथाहि—

१ 'नार्यश्च सान्तराः' इति प्रतौ पाठः । २ 'वेधाद्यसाधनात्' प्रतौ पाठः । ३ 'नृपपुत्र्यास्त–त्पित्रादीनां च दुःखिता' प्रतौ पाठः ।

श्रीचंद्र ! चंद्रकलामनोरम ! स्पृशसि त्वं स्वकरैः परश्रियां । ऊर्वी सुरजसि पुरश्च त–चित्रं यद्भुवि निर्मलो(ला)ऽनिशं ॥२७॥ बुद्धिश्चेतसि भारती च वदने भाग्यं च भालस्थले, लक्ष्मीर्वेश्मनि शूरता भुजयुगे वाचि स्थितं सूनृतं । दानं पाणितले रुचिस्त्वचि मनस्यर्हन् क्रियायां दया, स्थानाप्राप्तिरुषेव यात्युरुदिशं श्रीचंद्र ! कीर्तिस्तव ॥ २८ ॥ आस्ये पद्मधिया गभीरहृदये वारांनिधिः शंकया, नाभौ पद्मस(न)दभ्रमात्क्रमकरद्वंद्वेऽरुणाब्जेहया । फुल्लेंदीवरवांछया नयनयोर्दंतेषु वज्राकर–भ्रांत्या कल्पतरुभ्रमेण नपुषि श्रीचंद्र ! ते श्रीरभूत् ॥ २९ ॥ क्षारो वारिनिधिः कलंककलुषश्चंद्रो रविस्तीव्ररु–ग्जीमूतश्चपलाश्रयोऽर्थिपटलाद्दृश्यः सुवर्णाचलः । काष्ठं कल्पतरुर्दृषत्सुरमणिः स्वर्धामधेनुः पशुः, श्रीचंद्रास्ति सुधा, द्विजिह्वविधुरा तत्केन साम्यं तव ॥ ३० ॥ इत्यादि ॥ ततश्च तत्र तुष्टेन, श्रीचंद्रेण वरं वृणु । रथाश्वग्रामसैपट्ट–कूलमुख्यं निजेच्छया ॥ ३१ ॥ इत्युक्ते मूर्धगीः सोऽश्वं, वायुवेगममार्गयत् । विवेकः काल्पपुण्यानां, यद्धीः कर्मानुसारिणी ॥ ३२ ॥ कुमारस्तमभाषिष्ट, किमेतदिति मार्गितं ? । हुं याहि गुणचद्र ! त्वं, श्रीपुराद्रथमानय ॥३३॥ तमश्वं देहि सोऽप्यादी–दश्वोऽयं स्यास्य(प्य)ते परे । दीयंतेऽस्मै हयास्तेने–त्युक्तेऽप्यानायितो रथः ॥ ३४ ॥ आनीते च रथे तस्मिन्, श्रीचंद्रः प्राह गायने । एकेनाश्वेन कार्यं ते–ऽभीष्टं किंचिन्न सेत्स्यति ॥३५॥ तेनैनं त्वं सुवेगाख्यं, स्यंदनं रत्ननिर्मितं । वायुवेगमहावेग–वाजिभ्यां सह लाहि(स्व)दः ॥३६॥ अन्यस्मिंश्च धने दत्ते, तेन सन्मानपूर्वकं । चिरं जीव चिरं नंदे–त्यभूज्जयजयारवः ॥ ३७ ॥ ततः कविनैकेन प्रोक्तं—

वीर ! त्वं जय को भवान् कविरिदं किं पत्रमत्रास्ति किं, काव्यं वाच्यगुणोऽत्र कोऽद्भुतरसः स प्रोच्यतां श्रूयतां । श्रीचंद्र !

१ ' ऊर्वीसुरजन्युरश्च त–' प्रतौ पाठः । २ ' श्रीश्रीचंद्र सुधा० ' इति प्रतौ पाठः ।

त्वदनल्पशुक्लयशसा शुक्लीकृते विष्टपे, यत्काष्ण्यं शशिकज्जलादिषु हि तच्चाद्विद्वशादुर्दशः ॥३८॥ तत्रस्थेन कलकंठेनास्यैव काव्य-
स्योत्तरार्धमेवमुक्तं-श्रीचंद्र ! त्रिजगद्भिभित्तव यशः सत्पुंडरीकं मह-द्ब्रह्मस्थानमरालबालक(सु)वियद्भृंगालिभिश्चुंब्यते ॥ ३९ ॥
ततश्च सोमकविनोक्तं-चंद्रः शून्ये क्षयी दोषा-करः कलंक्ययं तु न। संतां हितं रसांतस्तं, तां श्रीव्यक्ति व्यधाद्विधिः ॥४०॥
इत्यादि ॥ त्रयाणां विदुषामेषां, दानं रैभूषणादिकं। अन्येषां मार्गणौघानां, यथायोग्यं ददौ च सः ॥ ४१ ॥ तदा तस्मिन्
दिने तत्रा-यातं सर्वं महाजनं। सन्मान्य गायनांस्तांश्च, भोजयामास गौरवात् ॥ ४२ ॥ भोजनादनु ते सर्वे, भक्त्या युक्त्या
च पूजिताः। तोषिताश्च यथायोग्यं, वस्त्रस्वर्णादिभिर्वरं ॥ ४३ ॥ तत्रत्यांस्ते मिथः सर्वे, दृष्ट्वोच्चैस्तदुदारतां। चमत्कृता इति
प्रोचु-रहो भाग्यमहो गुणाः ॥ ४४ ॥ नृपपुत्रा नृपाश्चापि, नेदृशं दातुमीश्वराः। यदसौ श्रेष्ठिपुत्रोऽपि, याचितात् षड्गुणं
ददौ ॥ ४५ ॥ ततः पौरा नरा नार्यः, सद्वस्त्रालंकृता ययुः। स्वस्वस्थाने रथाश्वाद्यै-र्हृष्टो वीणारवोऽप्यगात् ॥ ४६ ॥
ततः श्रेष्ठी निजैः साकं, व्यमृशत्पुरुषैरिति। द्रव्यैर्बहुभिरप्यश्वौ, लभ्येते नाधुनेदृशौ ॥ ४७ ॥ कुमारेण तु दातव्यौ-
देयौ दत्तौ हयाविमौ। ततस्ते श्रेष्ठिनं प्रोचु-र्हयमूल्यं प्रदीयतां ॥ ४८ ॥ तदा च श्रेष्ठिनैकांते, प्रोक्तं 'पुत्र ! त्वया ह्यदः।
यद्दत्तं तद्वरं चक्रे, नृपदानाधिकं परं ॥ ४९ ॥ नृपपुत्रा अमी चित्ते, सामर्षास्त्वच्छलं सदा। गवेषयंति यद्वीर-मंत्रि-
णोक्तं श्रुतं न किं ॥ ५० ॥ किं च येषां प्रसादेन, त्वद्राक्षीरियतीं भुवं। यत्र-तत्र रथाश्वास्ते, दीयंते हेलया हि किं ॥ ५१ ॥

१ 'सदोदितो रसातस्त-न्माश्रित्य त्कि (किं) व्यधाद्विधिः' प्रतौ पाठः। २ 'तान् गायनान् जनानन्यान्,' प्रतौ पाठः।
३ 'वल्गानादनु' इति प्रतौ पाठोऽपि एकार्थः। ४ 'अस्य' इत्येकवचनं सम्भवति।

तेनैतन्मूल्यरैदानाद्, गृह्यतां वत्स! तत् त्रयं। नृपाय उच्यते तच्चे-द्रु(द्रू)शुग्रुष्टो भवेत्तदा ॥५२॥ तद्वचःश्रवणात्किंचि-द्विमृश्यानुत्तरं हृदि। श्रीचंद्रो विनयात्प्राह, तातागः क्षम्यतां मम ॥ ५३ ॥ याचकानां हि यद्दत्तं, तद् गृह्णेत परं कथं। नीचेभ्योऽपि च नीचत्वं, जायतेऽनेन हंत नः ॥५४॥ के रथाः के हयाश्चामी, किं घनाभरणादि च ?। भाग्येन मिलितं सर्वं, भाग्याच्चापि मिलिष्यति ॥ ५५ ॥ श्रेष्ठ्याह पुत्र! तत्सत्यं, परमेतौ हयोत्तमौ। दुर्लभौ च ततो मूल्यं, दत्त्वा स्वं वस्तु लीयते ॥ ५६ ॥ तद्योचितमेवास्ति, यत्संतुष्टैर्नृपैरपि। न दीयंते गजेंद्राः किं, लीयंते च धनार्पणात् ॥ ५७ ॥ तत् श्रुत्वा कुमरस्तूष्णीं, स्थितोऽगान्निजमालयं। चित्ते च चिंतयामास, पारतंत्र्यमहो हि धिक् ॥ ५८ ॥ किं हि दत्तं क्रिमत्रास्ति, सत्तायां च(च)सतीत्यपि। याचकानां कवीनां च, स्वेच्छया दास्यते कथं ? ॥५९॥ अथ क्षणमपि स्थातुं, स्वद्धामरुणवन्न मे। युक्तमत्र यतः पुंसां, साहसात्किं न सिद्ध्यति ? ॥६०॥ को विदेशः सुविद्यानां, किं दूरं व्यवसायिनां ?। कोऽतिभारः समर्थानां, कः परः प्रियवादिनां ? ॥ ६१ ॥ तथा च--दीसइ विविहच्चरियं, जाणिज्जइ सुयणदुज्जणविसेसो। अप्पाणं च कलिज्जइ, हिंडिज्जइ तेण पुहवीए ॥ ६२ ॥ तदद्यैव रजन्याद्य-यामे यामि निजेच्छया। अननुज्ञाप्य पित्रादी-न्नानादेशेक्षणेहया ॥ ६३ ॥ यदि ज्ञास्यति मित्रं च ( मित्रोऽपि ), बलान्मां स्थापयिष्यति। मत्सार्थे वा समेता स, तस्यालं ज्ञापनेन तत् ॥ ६४ ॥ हेतुभिश्चेन्ममामीभिः, स्यात्पित्रोर्विरहः परं। गुणचंद्रस्य मंत्रितो-र्मा भूद्विरहो मनाक् ॥ ६५ ॥ अथ चंद्रकला नूनं, मद्वियोगातिदुःखिनी। युक्तैवमेव बालेयं, कथं स्थास्यति मां विना ? ॥६६॥ यया हि मत्कृतेऽमोचि, पितृमातुलयोरपि। राज्यं स्नेहतया

१ 'नृपाग्रे शुष्यते तच्चेद्, भूशद्दृष्टो भवेत्तदा' प्रतौ पाठः। २ 'स्नेहश्च या चास्मिन्, मां दृष्ट्वागमत् कुले' इति प्रतौ पाठः।

तत्र, मां दृष्ट्वैवागमन्मुदा ॥ ६७ ॥ सुस्निग्धा मयि यात्यंत-मपीदृक्षकुलोद्भवे । तामितोऽ(ती)तस्ततो भ्रष्टां, कथं कुर्वे मृगीमिव ॥ ६८ ॥ तदेनां भृशमालाप्य, हृद्वार्ताज्ञापनेन च । प्रबोध्य सकलां तस्याः, शिक्षां दत्त्वा व्रजाम्यतः ॥६९॥ विमृश्येति कुमारेंद्रो, यावत्तिष्ठति तावता । गुणचंद्रः स तत्रागा-त्तं च विज्ञप्तवानिदं ॥७०॥ नाथ ! श्रेष्ठिवचस्तादृक्, श्रुत्वा वीणारवः सुधीः । मन्मुखादिति विज्ञप्तिं, करोति श्रीमदंतिके ॥ ७१ ॥ अश्वोऽभ्यर्थि जयादीनां, वाचैव स्वधिया न तु । तत्राथ नैव गंतास्मि, भूपभूपांगजांतिके ॥ ७२ ॥ तेन सार्धं रथं लात्वो-चितं स्वर्णं ममार्प्यतां। जज्ञे ते दातृचक्रित्वं, रथदानफलं महत् ॥ ७३ ॥ मणिमुक्ताफलस्वर्ण-धनवस्त्रादिदानतः । विक्रीताः स्मो वयं वीर, बद्धाश्च स्वगुणैस्त्वया ॥ ७४ ॥ दीयते त्वयाऽस्माकं, यत्तद्दास्यति कोऽत्र नः । तत्त्वद्ग्रहणकेऽमोचि, मयायं दक्षिणः करः ॥७५॥ श्रुत्वेति कुमरः प्राह, मित्र ! ज्ञापय गायनं । यत्तद्दत्तं तवानेन, नास्त्यस्माकं प्रयोजनं ॥ ७६ ॥

यतः-जिह्वैकैव सतां मुखे कुलभृतां स्वद्वुश्वतस्रोऽथवा, ताः सप्तैव विभावसौ निगदिताः षट् कार्तिकेयस्य च ।
पौलस्त्यस्य दशैव ताः फणिपतेर्जिह्वासहस्रद्वयं, जिह्वा लक्षसहस्रकोटिगुणिता भो दुर्जनानां मुखे ॥ १ ॥

काप्यर्थेहास्ति तल्लाहि, याहि स्थानं निजं रयात् ! ततो मित्रं तथा कृत्वा-यातं स कुमरस्तदा ॥ ७७ ॥ सस्नेहं स्वांतिके लात्वा, ददौ शिक्षां यथोचितां । आगामिविरहस्मृत्या, साश्रुनेत्रो जगौ सखे ! ॥७८॥ तातोक्तमीदृशं तात-न्मम चित्तमनीदृशं । करिष्यते कथं वात्र, पितुः किं कथयिष्यते ? ॥७९॥ तद्दुःखदुःखितः सुहृ-द्दादर्शप्रतिबिंबवत् । अभाषिष्ट विभो

१ 'स्थितो मित्र, आदर्श०' इति प्रतौ पाठः । २ 'विभोऽस्लेन' इति प्रतौ पाठः ।

तेन, दुःखेनालं यतोऽत्र हि ॥ ८० ॥ यत्कीर्तिर्येदृशी संप-द्यच्चैश्वर्यं महश्च यत् । तत्सर्वं त्वत्त एवास्ति, तेन स्वेच्छं विलस्यतां ॥ ८१ ॥ युग्मं ॥ तदा तत्रागमद्वेगा-त्सारथिः स धनंजयः । तत्र(नत्वा)व्यजिज्ञपच्चैवं, श्रीकुमार! भवद्गिरा ॥८२॥ स्वस्थानान्निर्ययौ वीणा-रवः स परिवारयुक् । उपविष्टो रथे तस्मिन्, परं तौ स्वौ हयोत्तमौ ॥ ८३ ॥ रथं लात्वा थला-देनं (दत्र), जग्मतुः श्रीपुरे निजे । प्रणोदितावपि स्थाना-दस्माद्यातौ न तौ भृशं ॥ ८४ ॥ त्रिभिर्विशेषकं ॥

तन्निशम्य कुमारोऽपि, तैस्तैरश्वैर्भटैरपि । युक्तो मित्रान्वितो भूरि-शोभाभिः श्रीपुरे ययौ ॥ ८५ ॥ तौ तत्र स्वप्रभुं दृष्ट्वा, हृष्टौ बाढं च हेषितौ । साश्रुदृक्कुमरोऽपि(भूत्) त-त्स्नेहात्तौ रुदितौ भृशं ॥८६॥ श्रीचंद्रेण ततः पाणि-स्पर्शनाद् बुच्छतेरपि । सन्मान्य तद्गुणैः प्राच्यैः, शंसयित्वा च तौ हयौ ॥ ८७ ॥ जगदाते अहो भद्रौ, मत्समाधिकरौ युवां । मच्चित्तनेत्रहस्तेभ्यो, नोत्तरंतौ मनागपि ॥ ८८ ॥ तथापीदृश एवास्ति, समयः सांप्रतं मम । वरदानानृणीकृत्यै, गच्छतं गायनैः समं ॥ ८९ ॥ ततस्तौ चलितावश्वौ, स्वामिचित्तानुगौ यतः । वीणारवः कुमारस्या-शीर्वादांस्तान् ददन् (त्) ययौ ॥ ९० ॥ कुमरेण च तद्वाजि-गुणराजिलसद्हृदा । गुणचंद्रस्ततश्च(त्र च)क्रे, स्वामी सर्वाधिकारिणां ॥ ९१ ॥ धनंजयश्च तत्सेना-धिपत्वे स्थापितः परः । कः कुत्र कोऽपि कुत्रापि, चक्रिरेऽत्राधिकारिणः ॥ ९२ ॥ तत्रत्यवप्रसौधादि-कर्मस्थायिनृणां तदा । यथायोगमुदित्वा स, दत्त्वा हेमधनादिकं ॥९३॥ परदेशं यियासुः स, सर्वान् प्रोच्य पृथक्पृथक् । श्रीपुरं स्वर्गपुरव-त्कारयामास सर्वतः ॥९४॥ युग्मम् ॥ ततः श्रीकुमरः सर्वै-र्वाहनैर्वाजिनीरथैः । श्रीकरीभिर्भटैः पंच-सहस्रैरंगरक्षकैः ॥ ९५ ॥ अंगशुश्रूषकैः पंच-शतैर्वाद्यैश्च बंदिभिः । नृपवद्बहुसामग्र्या, वेगात्स्वं सौधमागमत् ॥ ९६ ॥ युग्मं ॥

इतस्तत्रागतो धीरः, प्रणत्य कुमरं तदा । गुणचंद्रसमं श्रेष्ठि–पार्श्वेऽगाचं न्यमंत्रयत् ॥ ९७ ॥ श्रेष्ठी प्रोवाच तं मंत्रिन्, प्रतीक्षस्व दिनद्वयं । पश्चाच्छ्रीचंद्रपुत्रोऽयं, पुराधीशं मिलिष्यति ॥ ९८ ॥ तत्सार्थेन भवान् याया–न्नृपं विज्ञपयेच्च तत् । ततो यथानृपादेशं, स तत्र प्रेपयिष्यते ॥ ९९ ॥ तथा सूर्यवतीदेव्या, भागिनेयीयमस्ति नः । वधूश्चंद्रकला सापि, तां राज्ञीं तु मिलिष्यति ॥ ६०० ॥ ततो धीरे गते तस्य, मित्रेण ज्ञापितं च तत् । किंचिच्चित्ते कुमारोऽयं, विमृश्य सुहृदा समं ॥ १ ॥ एत्य भोजनशालायां, दिवसस्याष्टमेंऽशके । मातर्मे मोदकान् देही–त्युक्त्वा भोक्तुमुपाविशत् ॥ २ ॥ युग्मं ॥ ढौकिता हृष्टया मात्रा, मोदका बहवस्तदा । प्रेयसीनां च सर्वासां, तत्सखीनां च स स्वयं ॥३॥ भावोक्त्या मोदकादीनां, खंडं खंडमदापयत् । साकं पित्रादिभिस्तत्र (स्तैस्तैः), वैकालिकं व्यधात्सुधीः ॥४॥ तत्कृत्वैत्य निजावासे, गुणचंद्रं न्ययोजयत् । कणकोट्टपुरायात–मंत्र्यादीनां स लेखके ॥५॥ अन्यानपि जनान् कस्मिन् , कस्मिन् कार्ये नियोज्य च । आगाचंद्रकलास्थाने, निशास्ये स कुमारराट् ॥६॥ तदा भर्त्रा समं स्वैरं, हर्षोत्कर्षसमुत्कहृत् । मनोमेलं वचोमेलं, वपुर्मेलं च साकरोत् ॥७॥ कुमारस्तां प्रति स्नेहा–द्वातोक्तम-खिलं जगौ । अन्यच्च चेत्पितेदृक्षं, वक्ति तत्कस्य जल्प्यते ॥८॥ यदीदृशेऽल्पदानेऽपि, तस्य ल(भवल्ल)ग्रमनीदृशं । तर्हि दानं कथं दास्ये, मनसः स्वेच्छया हहा ॥९॥ पित्रैवमद्य यावन्मे, सुभ्रु ! प्रोचे कदापि न । मयापि नान्यथा चक्रे–ऽद्य यावत्तात-वाक्तदा ॥ १० ॥ परमद्य मयाखंडि, पितुराज्ञा गरीयसी । मूल्यदानाथलानेहा, मनागपि यतो न मे ॥ ११ ॥ यतः–अमृत-रसादप्यधिका, शिक्षा मातुः पितुर्गुरुजनस्य । ये मन्यंते न मना–क्ते प्रहताः सर्वदा कुधियः ॥ १२ ॥ इति जानन्नपि स्वांते, कांते कुर्वे यदीदृशं । तदस्मि पुण्यहीनोऽहं, यन्मनो मे कदाग्रहि ॥ १३ ॥ सा दध्यौ तद्वचः श्रुत्वा, नाथस्याहो अगर्विता ।

दानशक्तिर्गुरौ भक्ति-रहो चित्तगभीरता ॥ १४ ॥ विमृश्येत्यवदत्साथ, नाथ! तेऽनुत्तरं मनः। यद्दानपुण्यकृत्येषु, मतिर्मार्गानुगामिनी ॥ १५ ॥ भवत्येवं कुटुंबांतः, कः कीदृक्कश्च कीदृशः?। सर्वतो वः शुभं भावि, राज्यमेव करिष्यथ ॥१६॥ श्रुत्वेति कुमरस्तत्र, दीर्घदर्शी विशेषवित्। चकार शकुनग्रंथिं, तत्प्रेमग्रंथिना सह ॥ १७ ॥ उवाच च प्रिये तात [1], इत्थं जानन् भविष्यति। स्वेच्छया कुरुते सर्वं, ममाधीनस्तु न ह्ययं ॥१८॥ एवं सत्यथ किं पित्रोः, स्वं मुखं दर्शयाम्यहं। तेन जाने कियत्कालं, यामि देशांतरे क्वचित् ॥ १९ ॥ यद्यप्यत्रास्ति मे पूर्णं, धनाद्याश्रित्य सर्वतः। किं जाने पितृपत्न्यादे-र्भाग्यात्तु ममाथ वा ॥ २० ॥ भाग्यं मे कियदस्त्येत-द्दिदृक्षुः कौतुकानि च। भुवं भ्रांत्वात्र वेगादा-गंता स्वल्पदिनैः सुखात् ॥ २१ ॥ तद्वाक्ये श्रुतमात्रेऽपि, वज्राहतेव साभवत्। रुरोद हार्ददुःखेन, हा किं देवेदमुच्यते ॥ २२ ॥ यद्वदः सांप्रतं भावि, चिपकन्या तदाभवं। भर्तुः श्वशुरवर्गस्य, दुःखोद्वेगादिहेतुतः ॥२३॥ हा नाथ! स्थीयतामत्र, किमस्ति न्यूनमात्मनां। रथाश्वेभभटाद्यस्ति, स्वर्णरत्नादि भूर्यपि ॥ २४ ॥ त्वद्भाग्यं किं न दृष्टं प्रा-ग्दृश्यते चाप्यसंशयं। रुदंतीमिति जल्पंतीं, स प्राह सुभगांगजां ॥२५॥ चित्तज्ञे! भव धीरा त्वं, कल्याणि! रुदितेन किं। अबले! भवदुःखं त्वं, जानन्नसि न किं स्वयं? ॥२६॥ परं श्वशुरवर्गाद्य-ल्लब्धं तन्मे न रोचते। स्वभुजोपार्जितं यत्तु, तन्नूनं मे महत्त्वकृत् ॥ २७ ॥ अतस्त्वामेव पृच्छामि, न तातं न च मातरं। न मित्रं नैव बंधूंश्च, यत्स्नेहस्त्वयि कोऽप्यहो ॥ २८ ॥ भद्रे! मामनुमन्यस्व, कुर्वेऽद्यैव यथेप्सितं। साह स्वामिन्नियं बुद्धिः, पुंस्त्वं च ते वचोऽतिगं ॥ २९ ॥ यतः-उड्डीना गुणपत्रिणः सुखफलान्याराद्विकीर्णान्यधः, पर्यस्ताः परितो यशःस्तबकिताः संपल्लता-

१ 'अबले ते भवदुःखं, जानन्नसि न किं स्वयं' इति प्रतौ पाठः।

पल्लवाः । प्रागेवापसृताः प्रमोदहरिणाश्छायाः कथांतं गताः, दैन्यारण्यमतंगजेन महता भग्नेऽभिमानद्रुमे ॥ ३० ॥ किं तु प्राणेश ! यद्येवं, तर्हि सार्थे नयैव मां । गच्छंति हि विदेशेऽपि, भर्तृसार्थे स्त्रियो न किं ? ॥ ३१ ॥ पितृमातृवियोगादि–दुःखं सोढुमहं क्षमा । भर्तुस्ते तु वियोगो मे, मा भूयात्क्षणमप्यथ ॥ ३२ ॥ अहं बहुसखीमध्ये, स्थापिताप्येककैव वै । यन्मे प्राणास्त्वदायत्ताः, सुखिनि त्वयि मेऽपि शं ॥३३॥ स्थाने स्थाने सुखं प्राज्य–पुण्याद्यद्यपि भावि ते । तथापि मेऽत्र तिष्ठंत्या, दुःखं संभव्यहर्निशं ॥३४॥ न बाधा भाविनी कापि, यन्मत्तः पथि ते विभो ! । वपुश्छायेव सार्थेऽह–माया(मेष्या)म्यादिश्यतां हि मे ॥३५॥ स प्राह पद्मिनि ! प्राज्ञे !, भूपे त्वं स्वकुलोचितं । परं क्व ग्रीष्मकार्कश्यं, क्व तेऽङ्गसुकुमारता ? ॥ ३६ ॥ क्व पथि क्षुधा(दा)दिबाधा, क्व च त्वं नृपनंदिनी ? । चंडार्कोत्तप्तमार्गः क्व, क्व तेऽङ्घ्री पद्मकोमलौ ? ॥ ३७ ॥ क्वचिच्छैत्यं क्वचिदौष्ण्यं, वासः क्वाप्युद्वसः क्वचित् । प्राणप्रिये ! भवेन्मार्गे, क्वचिद्दुःखं क्वचित्सुखं ॥ ३८ ॥ क्वचिद्दिवा क्वचिद्रात्रौ, क्वचिच्छीघ्रं शनैः क्वचित् । मार्गे क्वाप्युत्पथे क्वापि, गम्यं दक्षेऽतिदुष्करं ॥ ३९ ॥ तेन मार्गे वपुःक्लेश–स्तवातीव पदे पदे । स्नि(मु)ग्धे त्वया समं भावि, मनोदुःखं ममापि च ॥ ४० ॥ स्वयं विमृश्य हृद्येवं, मदादेशात्पतिव्रते । तिष्ठात्र पितृगेहे वा, मातुर्वा पैतृके गृहे ॥ ४१ ॥ सुखात्त्वं देवपूजादि–धर्मं कुर्या अहर्निशं । त(त्व)द्धर्माच्च शीलाच्च, मार्गे सुखी भवाम्यहं ॥ ४२ ॥ इत्युक्त्वा निजवस्त्रेण, तन्नेत्राश्रूणि मार्जयन् । समर्प्य मणिभूषादि, हितशिक्षां ददौ स तां ॥ ४३ ॥ सखीनां दासदासीनां, स्वमित्रस्य भलामनां । अन्यच्चापि यथायोग्यं, सर्वं तस्या न्यवेदयत् ॥ ४४ ॥ सा प्रवीणा पतिं ज्ञात्वा, प्रयाणे कृतनिश्चयं । सगद्गद् स्वरं वक्ति, स्वपत्युर्हितकांक्षिणी ॥ ४५ ॥ यतः—मा गा इत्यपमंगलं व्रज इति स्नेहेन हीनं वच–स्तिष्ठेति प्रभुता यथारुचि कुरुष्वैपाप्यु(ष्वेत्यप्यु)दा-

सीनता । सार्थे त्वेमि तवेत्यसद्भ्रहवचो नैमीति वाक्तुच्छता, प्रस्थानोन्मुख ते प्रयाणसमये वक्तुं कथं वेद्म्यहं ॥ ४६ ॥ तथापि प्राणनाथ ! प्राक्, श्रुतं श्रीगुरुवक्त्रतः । नवकारमहामंत्र–माहात्म्यमवधार्यतां ॥ ४७ ॥ शीर्षे कुर्याः शिरस्कं च, मुखे मुखपटं तथा । काये च कवचं वज्र–मायुधं हस्तयोर्दृढं ॥ ४८ ॥ पादयोः पादरक्षां चा–मीभिः पंचपदैः क्रमात् । आत्मरक्षा विधातव्या, चतुश्चूलापदैस्तथा ॥ ४९ ॥ शिला वज्रमयी भूमौ, वप्रो वज्रमयो बहिः । खातिकांगारसंपूर्णा, वप्रोर्द्ध्वं वज्रमंडपः ॥ ५० ॥ कर्तव्या बाहरक्षेयं, दिनं प्रति निरंतरं । संग्रामे संकटे मार्गे, रक्षां कुर्या विशेषतः ॥ ५१ ॥ एतन्मंत्राधिराजस्य, प्रभावाद्यांति दूरतः । चौरारिव्यालवेताला–दिभयान्यखिलान्यपि ॥ ५२ ॥ नित्यमस्माच्च जायंते, संपदो हि पदे पदे । तदेतद्ध्यानतो भद्रं, वर्ततां तव वर्त्मनि ॥ ५३ ॥ नृरत्न स्वस्ति ते भूया–त्पुनस्त्वत्त्वरितागमः । सर्वत्र वांछितानि त्वं, मार्गे स्वीयानि साधय ॥ ५४ ॥ तस्यास्तद्वच आदाय, स्नेहवार्तां विधाय च । शकुनार्थं तया दत्तं, तथा स्वीकृत्य तत्फलं ॥ ५५ ॥ कियद्द्रविणयुग् नित्य–देहस्थवेषभृत्सदा । तथाविधां च तां बालां, मुत्कलाप्य स निर्ययौ ॥ ५६ ॥ तदैव तद्गृहात्तस्मा–त्पुराच्च सोऽतिसाहसी । हेलयैव बहिः प्राप्तः, प्रतापसिंहभूपजः ॥ ५७ ॥ स एकको बहिर्गत्वा, प्राच्यकर्मद्वितीयकः । सद्विहगोदीरितायां, दिश्येकस्यां ततोऽचलत् ॥ ५८ ॥ अग्रे कार्पटिकं कंचि–द्ददर्श स विशुद्धधीः । मूल्यात्तदात्तवेषः सन्, गुप्ताम्यवेषभूषणः ॥ ५९ ॥ गच्छन्नग्रे कुबेराशां, प्रति मार्गे विलोकयन् । पुरोद्यानसरोवापी–नदीगिरिमठादिकं ॥ ६० ॥ क्वचित्तुष्पदीबंधं, श्रीचंद्रचरितोद्भवं । राधावेधप्रबंधं च, क्वचित्तद्भवरासकं ॥ ६१ ॥ क्वचित्तिलकमंजर्या, उपालंभपदानि च । क्वचिद्वार्ता (ध्रुवाः) क्वचिच्छंदः, क्वचित् पद्पदयोजनं ॥ ६२ ॥ क्वचिद्गीतं सुवेगाश्च–पद्मिनीवर्णनादिकं । कौटुंबिन्यस्तथा गोपा,

गोप्यः केदारपालिकाः ॥ ६३ ॥ कीर्तयंत्यः स्त्रियो दोला–रसिकारामचालिकाः । नरा नार्यश्च गायंति, सरसं मधुरस्वरं ॥ ६४ ॥ स्थाने स्थाने गुणान् स्वीयान्, शृण्वंस्तिष्ठति याति च । स कुमारः सुखाद्वेष–परावृत्त्यातिकौतुकी ॥ ६५ ॥ कुलकं ॥ इतश्च–

धीरमंत्री अगे तत्र, गत्वा सभां नृपाग्रतः । श्रीचंद्रस्य विवाहार्थे, युक्त्याकरोन्निमंत्रणं ॥ ६६ ॥ दीपचंद्रस्य सेनानीः, कन्यासार्थागतस्तदा । भूपस्याहाखिलं चंद्र–कलापरिणयादिकं ॥ ६७ ॥ राज्ञापि ज्ञापितं सूर्य–वत्यास्तत्सापि हर्षतः । भगिन्याश्चंद्रवत्या मे, सुतानैतेति सत्वरं ॥ ६८ ॥ नृपादेशात्कुमारस्य, सौधे प्राप सदुत्सवं । लात्वा चंद्रकलां पार्श्वे ( लोत्संगे ), हृदालिंग्य प्रमोदतः ॥ ६९ ॥ तयापृच्छि च तत्रत्यं, सर्वेषां कुशलादिकं । करमोचनदानं च, प्रत्येकमवलोकितं ॥ ७० ॥ त्रिभिर्विशेषकं । सत्सवं तां च सा राज्ञी, सार्थे लात्वा सविस्तरं । आगादुपनृपं (भूपगृहे) राजा, तत्तां दृष्ट्वा चमत्कृतः ॥७१॥ कुमारः केति तत्पृष्टः, स श्रेष्ठी तत्सखा भटाः । भृशं (अलं) गवेषयंतोऽपि, नापुस्ते क्वापि तं तदा ॥७२॥ सर्वे ते दुःखिनोऽभूवन्, गुणचंद्रो विशेषतः । रतिं न प्राप कुत्रापि, तुच्छवारिस्थमीनवत् ॥ ७३ ॥ श्रेष्ठ्यवोचदभाग्योऽहं, यद्व्यधायि कदाग्रहः । अश्वाधानापि यन्मूल्या–रसोऽगात्तद्दूमितः क्वचित् ॥७४॥ माताप्याह स्ववक्त्रेणा–नेनामार्गि कदापि न । किमप्यद्य महाश्चर्यं, यदिदं मोदकादिकं ॥ ७५ ॥ मार्गयत्यत्र सर्वेषां, विभज्यार्पयति स्वयं । परं ज्ञातं मया नेदं, कालेनायात एष यत् ॥ ७६ ॥ युग्मं । जले तैलं खले गुह्यं, पात्रे दानं यथा तथा । स्वयमेव पुरे तस्मिन्, तद्वार्ता प्रससार च (सा) ॥ ७७ ॥

इतः सूर्यवती प्राह, पुत्रि स्वयंवरं विना । कथं वृतं तदा तस्याः, सर्वान् हेतुन् जगाद सा ॥७८॥ कुमारः क्वाप्यगादेषा,

१ ' कल्ये तैत्यमेपयत् ' इति प्रतिपाठोऽपि एकाक्षरन्यूनत्वात् सशंकः ।

वार्ता राजकुलेऽप्यभूत् । तदा चंद्रकला मयं, ततो लात्वागमद् गृहे ॥७९॥ गुणचंद्रो रुदंस्तस्याः, पार्श्वे गत्वातिदुःखितः । क्व हा स्वामिनि ! मे स्वामी, यदि जानासि तद्वद ॥८०॥ तदोवाच प्रहस्यासौ, यत्किंचित्सतीशेखरा । तद्दि केश्चन न ज्ञातं, गूढं यन्मानसं तयोः ॥ ८१ ॥ तत्पुरादिक्षु सर्वासु, मार्गेषु सकलेषु च । नृपेण स्वभटैस्तत्रा–लोकि प्राप्तः परं न सः ॥ ८२ ॥ तत्र घस्रत्रयं याव–न्न कैर्विलसितं क्वचित् । व्यवसायादिकर्माणि, न कैः कान्यपि चक्रिरे ॥८३॥ न कैर्गीतं न कैर्भुक्तं, न कैः सूक्तं न कैः स्मितं । श्रेष्ठ्यावासे विशेषेण, तद्वियोगजदुःखतः ॥८४॥ चतुर्थे दिवसे तत्र, कोऽप्येतो ज्ञानवान् मुनिः । नृपश्रेष्ठ्यादयः सर्वे, सूर्यवत्यादयश्च ताः ॥८५॥ तथा लक्ष्मीवतीचंद्र–कलाद्यास्तं गुरुं विधेः । प्रणम्योपाविशंस्तत्र, यथास्थानं तदग्रतः ॥८६॥ युग्मं ॥ दत्त्वाशीर्वचनं धर्मो–पदेशं प्रददौ सुधीः (मुनिः) । देशनांते यतिः सूर्य–वत्योचे भगवन् पुरा ॥८७॥ मया जयमयात्पुत्रो, गृहोपवनिकांतरा । तादृक्पुण्योच्चयेऽमोचि, तस्य किं किं ततोऽजनि ? ॥८८॥ युग्मं ॥ सर्वसभ्यजनश्रव्यं, ज्ञानात्स साधुरब्रवीत् । भद्रे भाग्याधिकः सूनुः, स ते तेजस्विनां वरः ॥ ८९ ॥ गोत्रदेवतया तत्र, ज्ञात्वा तस्य (स्या) हितं परं । लक्ष्मीदत्तस्य तत्स्वप्नं, दत्त्वा तस्य तमार्पयत् ॥ ९० ॥ युग्मं ॥ लक्षेश्वरोऽपि स श्रेष्ठी, तस्मात्कोटीश्वरोऽभवत् । लक्ष्मीवत्या तया हर्षा–द्वर्धितः स स्वपुत्रवत् ॥ ९१ ॥ यद्युवाभ्यामजातस्य, तस्य श्रीचंद्र इत्यहो । नाम चक्रे तदा नामां–किता मुद्रापि निर्मिता ॥ ९२ ॥ तन्मुद्राह्वाश्रयादाभ्यां, नामास्य स्थापितं ह्मदः । नाम वा(तो) नाममुद्रातः, पित्रोः क्वापि मिलत्वयं ॥ ९३ ॥ राजन् ! पुरा त्वया स्वांके, गृहीतोऽयमभूत्तदा । किं सुतस्य तव (स्यांतर) स्नेहो,

---

१ 'ततोऽयोचद्रहस्यस्य, यत्किंचित्सा सती तदा' इति प्रतौ पाठः ।

न दृष्टो दृग्विमोहतः ॥ ९४ ॥ राज्ञ्याप्येत्यैकदा दृष्टः, श्रीचंद्रः स्नेहकारणं । एतत् श्रेष्ठिमुखाद् ज्ञेय-मस्यान्यत्ख्यातमेव हि ॥ ९५ ॥ श्रेष्ठशुक्रेर्दानशौंडत्वा-त्मोऽगाद्देशांतरेऽधुना । वर्षेऽस्मिन्नेव वः सोऽयं, नृपीभूय मिलिष्यति ॥ ९६ ॥ श्रुत्वेरि म नृपो राज्ञी, श्रेष्ठिनं श्रेष्ठिनीं तथा । प्रशंसतुस्तथा स्नेहो, यथाभूद् द्विगुणस्तयोः ॥ ९७ ॥ जज्ञे ज्ञानिवचो यत्सा-श्रेष्ठिमित्रि-करचश्च तत् । सर्वं सत्यमभूत्तस्मिन्, जाते सूर्यवतीसुते ॥९८॥ इत्युक्तवत्सु सर्वेषु, हर्षप्रकर्षभाजिषु । विशेषान्मंत्रिभूचंद्र-कलादिषु प्रमोदिषु ॥ ९९ ॥ मागधैः पंडितैश्चापि, कविर्वैर्बहुभिस्तदा । तद्दानतोषितैरग्रे, श्रीचंद्रो वर्णितो भृशं ॥ ७०० ॥ नरसिंहकु-लादित्य(त्यः)-प्रतापसिंहभूपभूः । जीयात्सूर्यवतीसूनुः, श्रीचंद्रो जगतीतले ॥ १ ॥ त्रिभिर्विशेषकं । गुरून्नत्वा ततः सर्वे, स्वस्थानं ते ययुस्तदा । राज्ञा स्वपुत्रशुद्ध्यासे-श्चक्रे तत्सोत्सवं पुरं ॥ २ ॥ सूर्यवत्या स गंधेभः, पुत्रार्थे चिंतितः पुरा । अयं श्रीचंद्रपट्टेभ, इत्युक्तास्थापि तत्पुरे ॥३॥ कदा चंद्रकला भूप-गृहे श्रेष्ठिगृहे कदा । कदा च श्रीपुरे धर्मं, कुर्वंत्यस्थादह-र्निशं ॥ ४ ॥ यतः-धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैः कृते-स्तत्किं यन्न करोति किं तु कुरुते स्वर्गापवर्गावपि ॥ ५ ॥

। श्री श्रीचंद्रचरित्रे श्रीचंद्रराधावेधसाधनचंद्रकलापाणिग्रहणादिपितृमातृतदवगमनरूपो द्वितीयोऽधिकारः समाप्तः ॥

पानीयं, पीत्वा लात्वा च ततः । पुनर्गत्वा गुहामध्ये, जलं मुक्त्वा च पूर्ववत् ॥ १५ ॥ गुहाया विवरस्यास्ये, शिलां दत्त्वा
जलाश्रये । स एत्य कृतगंडूषो, गुटिकां तां मुखे ललौ ॥ १६ ॥ युग्मं ॥ तत्प्रभावाददृष्टोऽभू-त्स परं तस्य पूर्ववत् । कुमरे-
णातपे छाया, दृष्टा यांती पुरं प्रति ॥ १७ ॥ तं च दूरे गतं ज्ञात्वा, गुहांतरेत्य साहसात् । बलींद्रः स शिलां तत्रो-त्पाट्यां-
तर्विवरं गतः ॥ १८ ॥ सौधं तत्र ददर्शैकं, स्वर्णरत्नादिभिर्भृतं । तन्मध्ये तरुणीमेकां, सप्रौढां मध्य(ढामति)यौवनां ॥१९॥
तत्रोचे भगिनि ! त्वं का, स्थितात्रैकाकिनी कथं ? । पृष्टा तेनेति सा साश्रु-नेत्रोवाच शृणूत्तम ! ॥ २० ॥ नायकाख्ये पुरे
विप्रा, वसंति सार्थवाहिनः । ग्रामेशोऽपि द्विजस्तत्रा-धिकारिणस्त एव हि ॥२१॥ तेष्वेकस्तत्र मंत्रीशो, रविदत्तोऽवमद् द्विजः ।
तत्पत्नी शिवमत्येषा-हं मे चात्रागतिं शृणु ॥ २२ ॥ तत्पुरे स्यात्सदा चौर्यं, रक्षोपाये कृतेऽपि हि । एकदा पुरलोकैस्तै-
र्विज्ञप्तस्तत्पुरेश्वरः ॥ २३ ॥ रक्षात्र चेत्त्वया न स्या-त्तदा कुशस्थले वयं । ज्ञापयामो यथा रक्षां, कर्ता देशाधिपः स वै ॥२४॥
श्रुत्वेति स भयभ्रांतो, लोकान् सन्मान्य तत्क्षणं । तत्राहूय तलारक्षं, हक्कयामास रोषतः ॥ २५ ॥ स आह सिद्धचोरोऽयं,
द्रक्षाम्यद्य तथापि तं । तेनावलोकितं रात्रौ, क्वापि नाप्तः स तस्करः ॥२६॥ तत् ज्ञात्वा निशि चौरेण, मुषितं तद्गृहं हठात् ।
एवं यो यः प्रतिज्ञाह-चौर्यं तत्तद्गृहेऽभवत् ॥२७॥ रविमंत्री ततो रिक्ती-कृत्य स्वं सदनं तदा । प्रतिज्ञां कृतवान् रात्रौ, सर्वत्र
तं व्यलोकयत् ॥ २८ ॥ स स्तेनस्तद्गृहे किंचि-दप्राप्ते रुष्ट एव मां । वस्त्रेणास्यकरौ बध्ध्वा, स्कंधे कृत्वात्र चानयत् ॥ २९ ॥
भद्रे ! रत्नाकरं (रत्नपुरं) चौरं, मां जानीहीति सोऽवदत् । भ्रातः ! किमपि नो जाने, तेनानीतास्म्यहं क्व हि ॥३०॥ कदा दृश्यः
कदाऽदृश्यो, नित्यं यातीदृशे दिने । निशाशेषे (मुखे) स आयाती-त्यत्र मेऽभूद्दिनत्रिकं ॥ ३१ ॥ बालपुत्रवियोगो मे, हृद्यलं

बाधते पुनः । कस्त्वं कथमिहैतश्च, मद्भाग्येन निमंत्रितः ॥ ३२ ॥ कुमारेण तदा तस्या-स्तत्स्वरूपं यथास्थितं । ऊचे कार्प-
टिकः पांथो-ऽहमिति ज्ञापितं ततः ॥ ३३ ॥ तयोचे भद्र ! तत्पापा-दस्मान्मां स्वपुरं नय । गुप्तिमुक्तिफलं ते स्या-द्दानं च
जीवपुत्रयोः ॥ ३४ ॥ सा तेन बहिरानीय, तत्स्थानाद्धिवरानने । तां शिलां दृषदं चान्यां, प्रौढां मुक्त्वा शनैः शनैः ॥३५॥
स्वस्थाने प्रापिता तत्र, तद्भर्त्रा स प्रशंसितः । शिवमत्या यथाशक्त्यो-पचक्रे स प्रमोदतः ॥ ३६ ॥ युग्मं ॥ स तत्र न किम-
प्यादा-त्तस्या वस्त्रधनादिकं । बलात्तस्य निजां मुद्रां, सा ददौ स्मृतिहेतवे ॥ ३७ ॥

सोऽपि चौरास्पदं पश्चा-त्कोऽस्ती( प्रष्टा कोऽपी)ति शंकया ततः । ययौ शीघ्रं तरौ तस्मिन्, यावत्तिष्ठति तत्र द्राक् ॥३८॥
तावत्तत्रैकतः पार्श्वा-दागच्छंतं स पश्यति । चौरं तमेव विच्छायं, स चौरस्तमुपस्थितः ॥३९॥ तयोर्मिथोऽभिधाप्रश्ने, कुमारः
प्राह मेऽभिधा । लक्ष्मीचंद्रोऽपरश्चाह, रत्नाकरोऽहमाख्यया ॥ ४० ॥ ततो दध्यौ कुमारश्चे-च्चरोऽयं कथयेत्तदा । उद्-
घाटयामि तद्द्वार-मस्येति पृष्टवांश्च तं ॥ ४१ ॥ सचिंत इव किं मित्र !, दृश्यसे सोऽपि यावता । हृदि किंचिद्विमृश्याह,
तावत्पंचाध्वगाः परे ॥४२॥ तत्रागत्य तरौ तस्थु-श्चक्रे वार्ता मिथश्च तैः । शिरोवस्त्रांचले दस्यो-र्बद्धां तां गुटिकां तदा ॥४३॥
बुद्ध्वा पुष्ट्वा कुमारोऽव-क्तेषु पंचसु साक्षिषु । एकीकृत्य शिरोवस्त्रं, स्वकं तस्यैव ( स्य च ) हेलया ॥ ४४ ॥ य एते वाससी
न्यस्ते, शिलाधोऽपि स्वकाद्बलात् । निष्कासयति स ग्रंथी, ते उभे अपि लाति सः ॥ ४५ ॥ चतुर्भिः कलापकं । सहेमग्रंथि
तद्वस्त्रं, ज्ञात्वा लोभाद्बलोद्धतः । स्वीकृत्य तत्पणं दस्युः, शिलाधोऽस्थापयच्च ते ॥ ४६ ॥ निष्कास्येते ततः स्थाना-च्छीलया
कुमरः स्वयं । अतिप्रौढशिलाधस्ता-न्निक्षेप बलवान् दृढं ॥४७॥ तत्स्थानाद्दस्युना नो ते, निष्कास्येते परेण वा । सर्वैश्चक्रे

पानीयं, पीत्वा लात्वा च तत्ततः । पुनर्गत्वा गुहामध्ये, जलं मुक्त्वा च पूर्ववत् ॥ १५ ॥ गुहाया विवरस्यास्ये, शिलां दत्त्वा जलाश्रये । स एत्य कृतगंडूषो, गुटिकां तां मुखे ललौ ॥ १६ ॥ युग्मं ॥ तत्प्रभावाददृष्टोऽभू–त्स पर तस्य पूर्ववत् । कुमरेणातपे छाया, दृष्टा यांती पुर प्रति ॥ १७ ॥ तं च दूरं गतं ज्ञात्वा, गुहांतरेत्य साहसात् । बलींद्रः स शिलां तस्मो–त्पाट्यांतर्निगर गतः ॥ १८ ॥ सौधं तत्र ददर्शैकं, स्वर्णरत्नादिभिर्भृतं । तन्मध्ये तरुणीमेकां, सप्रौढां मध्य(ह्यमति)यौवनां ॥१९॥ नत्वोचे भगिनि ! त्वं का, स्थितात्रैकाकिनी कथं ? । पृष्टा तेनेति सा साश्रु–नेत्रोवाच शृणूत्तम ! ॥ २० ॥ नायकाख्ये पुरे विप्रा, वसंति सार्धनाहिनः। ग्रामेशोऽपि द्विजस्तत्रा–धिकारिणस्त एव हि ॥२१॥ तेष्वेकस्तत्र मंत्रीशो, रविदत्तोऽवसद् द्विजः । तत्पत्नी शिवमत्येषा–हं मे चात्रागतिं शृणु ॥ २२ ॥ तत्पुरे स्यात्सदा चौर्यं, रक्षोपाये कृतेऽपि हि । एकदा पुरलोकैस्तै–र्विज्ञप्तस्तत्परेश्वरः ॥ २३ ॥ रक्षात्र चेत्त्वया न स्या–त्तदा कुशस्थले वयं। ज्ञापयामो यथा रक्षां, कर्ता देशाधिपः स वै ॥२४॥

कान् मन्मान्य तत्क्षणं । तत्राहूय तलारक्षं, हक्कयामास रोषतः ॥ २५ ॥ स आह सिद्धचौरोऽयं,

... क्वापि नाप्तः स तस्करः ॥२६॥ तत् ज्ञात्वा निशि चौरेण, मुषितं तद्गृहं हठात् ।

बलं तत्र, न शिला स्पंदते मनाक् ॥ ४८ ॥ फलान्याम्रस्य पक्वानि, तेषामेकस्य पार्श्वतः । मूल्येनादाय सर्वेषां, विभज्यादान्नरेंद्रधः ॥ ४९ ॥ चौरेण चिंतितं ह्येष, गुहास्योद्घाटने क्षमः । इतस्तूर्यरवः कोऽप्या-सीन्नायकपुराध्वनि ॥ ५० ॥ नूनमेतत्पुरेशस्य, भृगोः कटकमेति भोः । तद् ज्ञात्वा तेषु चौरः प्रा-ग्दृष्टः पंचापि ते गताः ॥ ५१ ॥ स तत्र विजने जाते, लात्वा वस्त्रे शिलातलात् । नीत्वास्ये गुटिकां चैना-मदृश्योऽस्थाद् द्रुमोपरि ॥ ५२ ॥ तत्रैत्यैकाग्रचित्तस्थै-र्नरैः पादावलोकिभिः । इयद्यावत्पदान्यत्र, दृश्यंतेऽतःपरं न हि ॥५३॥ इत्युक्तः स भृगुः प्राह, मंत्रिन् ! संभाव्यतेऽत्र किं ? । अतः क्वागात्स गुर्वात्मा, तथाप्यालोक्यतां भटैः ॥ ५४ ॥ इतस्ततोऽनलोक्यागा-त्तत्सैन्यं स्वपुरे निशि । भूपजोऽप्यचलत्तस्मा-त्स्थानादभीप्सितां दिशं ॥५५॥ प्राच्यपुण्यानुभावेन, संपत्तस्याभितोऽभवत् । स स्वर्णादिकृ(भृ)तावासो, गुटिका च प्रभावभृत् ॥५६॥

अन्यदा पांथकुट्यां स, बहुपांथभृति स्थितः । शृणोति तद्गिरस्तेषा-मेको वैतालिकोऽब्रवीत् ॥ ५७ ॥ तथाहि-णयरे कुसत्थलंमि, पुहवीमपयानसिंहकुलचंदो । सिरिसुरियवइतणओ, सिरिचंदो जयउ भुवणयले ॥५८॥ राहावेहविहीए, गयंवरवरिओ अ तिलयमंजरीए । मवनिवगवहरणो, वीरिक्को जयउ सिरिचं मर-सुहगंगसुयाइ पुव्वभवनेहा । [illegible] पेचं [illegible] ए, [illegible] णीओ जयउ सिरि

तत्र प्राप्तगुरोर्मुखात् । सूर्यवत्यादिभिर्ज्ञातं, श्रीचंद्रपुत्रतादिकं ॥ ६४ ॥ विदेशगमनं चास्य, वर्षांते मिलनं तथा । श्रुत्वा नृपादयस्तत्र, सर्वे हृष्टा जना ययुः ( अपि ) ॥ ६५ ॥ कवित्वेष्वेषु सर्वेषु(षां), श्रावितेषु मया तदा । तत्र वै यद्धनं लब्धं, तल्लात्वा याम्यहं गृहे ॥ ६६ ॥ निशम्येति कुमारस्य, हृद्युल्लासस्तथाविधः । तथोत्पेदे यथा ज्ञानी, तं वेत्ति नापरो नरः ॥ ६७ ॥ तोषदानं ददौ तस्या–न्येषां गुडघृतादिकं । ततस्तेनैव वेषेण, सोऽग्रतः पुनरप्यगात् ॥ ६८ ॥ दृश्यः क्वचिददृश्यः स, गच्छन्नाप महाटवीं । तदंतरेकदा रात्रौ, सोऽस्थात्प्रोच्चतरोस्तले ॥ ६९ ॥ स वृक्षोऽस्ति शुकस्थानं, निशास्ये तेन तत्तरौ । चूर्णिं कृत्वाभितोऽनेक–शुका आजग्मुरुद्गिरः ॥ ७० ॥ कस्कोऽत्र कुत्र कुत्रागा–दिति तेषु वदत्सु च । तत्रैकस्तद्बृहत्कीर–स्तदायाद्दिवसैस्त्रिभिः ॥ ७१ ॥ तात ! क्वास्था इयत्कालं, क्वाप्याश्चर्यं च दृष्टवान् । इति सोऽपृच्छि हृष्टैस्तै–स्ततो मुख्य-शुकोऽवदत् ॥ ७२ ॥ वत्सा इतो दिशि प्राच्यां, महेंद्राख्यपुरं वरं । तत्र त्रिलोचनो राजा, तत्प्रिया गुणसुंदरी ॥ ७३ ॥ तयोः सुलोचना नाम, जात्यंधास्ति सुताद्भुता । साऽधुना यौवनं प्राप्ता, चतुःषष्टिकलान्विता ॥ ७४ ॥ सा हृद्दृशैव नामानि, श्लोकांश्चापि लिखत्यहो । स मंत्रिवचनाद्राजा, भ्रामयेदिति डिंडिमं ॥ ७५ ॥ य एनामिह नेत्राभ्यां, पश्यंतीं कुरुते पुमान् । तस्यार्धराज्यमेनां च, पुत्रीं दास्ये ममेति वाक् ॥ ७६ ॥ तत्रास्मिन् वाद्यमाने हि, जज्ञेऽद्य मासपंचकं । आषण्मासीं तु तद्भाग्या–त्कोऽप्येता तत्र नाथवा ॥ ७७ ॥ तेषु ये शिशवः कीरा–स्तैरुक्तं तात ! कुत्रचित् । तादृगस्त्यौषधं यस्मा–न्नेत्रे स्यातां हि नूतने ॥ ७८ ॥ सोऽभाषिष्ट तदप्यस्ति, कस्मिन्नेवोल्वणे वने । ते प्रोचुस्तत्किमत्रास्ति, स प्राहेहापि तद्भवेत् ॥ ७९ ॥ परं गुह्यमिदं रात्रौ, कथमप्युच्यते न वै । तथापि तैर्हठं कृत्वा, पृष्टः सोऽव्यग्यथास्थितं ॥ ८० ॥ इहास्त्य-

चलं तत्र, न शिला स्पंदते मनाक् ॥ ४८ ॥ फलान्याम्रस्य पक्कानि, तेषामेकस्य पार्श्वतः । मूल्येनादाय सर्वेषां, विभज्यादान्नरेंद्रसूः ॥ ४९ ॥ चौरेण चिंतितं ह्येष, गुहास्योद्घाटने क्षमः । इतस्तूर्यरवः कोऽप्या–सीन्नायकपुराध्वनि ॥ ५० ॥ नूनमेतत्पुरेशस्य, भृगोः कटकमेति भोः । तद् ज्ञात्वा तेषु चौरः प्रा–ग्नष्टः पंचापि ते गताः ॥ ५१ ॥ स तत्र विजने जाते, लात्वा वस्त्रे शिलातलात् । नीत्वास्ये गुटिकां चैना–मदृश्योऽस्थाद् द्रुमोपरि ॥ ५२ ॥ तत्रैत्यैकाग्रचित्तस्थै–र्नरैः पादावलोकिभिः । इयद्यावत्पदान्यत्र, दृश्यंतेऽतःपरं न हि ॥५३॥ इत्युक्तः स भृगुः प्राह, मंत्रिन् ! संभाव्यतेऽत्र किं ? । अतः कागास्स गुर्वात्मा, तथाप्यालोक्यतां भटैः ॥ ५४ ॥ इतस्ततोऽवलोक्यागा–त्तत्सैन्यं स्वपुरे निशि । भूपजोऽप्यचलत्तस्मा–त्स्थानादभीप्सितां दिशं ॥५५॥ प्राच्यपुण्यानुभावेन, संपत्तस्याभितोऽभवत् । स स्वर्णादिकृ(भृ)तावासो, गुटिका च प्रभावभृत् ॥५६॥

अन्यदा पांथकुट्यां स, बहुपांथभृति स्थितः । शृणोति तद्गिरस्तेषा–मेको वैतालिकोऽब्रवीत् ॥ ५७ ॥ तथाहि–णयरे कुसत्थलंमि, पुहवीसपयावसिंहकुलचंदो । सिरिसूरियवइतणओ, सिरिचंदो जयउ भुवणयले ॥५८॥ राहावेहविहीए, सयंवरवरिओ अ तिलयमंजरीए । सव्वनिवगव्वहरणो, वीरिक्को जयउ सिरिचंदो ॥ ५९ ॥ सिंहउरवरनरेसर–सुहगंगसुयाइ पुव्वभवनेहा । पउमिणिचंदकलाए, परिणीओ जयउ सिरिचंदो ॥ ६० ॥ इत्यादि । तत्रस्थः प्रतिवक्त्येकः, श्रेष्ठिसूनुरयं त्वया । नृपसूनुः कथं प्रोचे, तत्पृष्टः सोऽवदत्पुनः ॥ ६१ ॥ अहं कुशस्थलेऽभूवं, तत्र चंद्रकलाययौ । वीणारवस्य तद्दानं, सर्वेषां भोजनादि च ॥ ६२ ॥ प्रातर्धीरप्रधानेन, सदस्युक्तो नृपोत्तमः । श्रीचंद्रस्तिलके पुरे, विवाहाय प्रहीयतां ॥ ६३ ॥ इत्यादिकं समग्रं त–

१ ' तत्रैत्य कटकाग्रस्थैः ' इति प्रतौ पाठः ।

तत्र प्राप्तगुरोर्मुखात् । सूर्यवत्यादिभिर्ज्ञातं, श्रीचंद्रपुत्रतादिकं ॥ ६४ ॥ विदेशगमनं चास्य, वर्णते मिलनं तथा । श्रुत्वा नृपादयस्तत्र, सर्वे हृष्टा जना ययुः ( अपि ) ॥ ६५ ॥ कवित्वेष्वेषु सर्वेषु(षां), श्राविते‌षु मया तदा । तत्र वै यद्धनं लब्धं, तल्लात्वा याम्यहं गृहे ॥ ६६ ॥ निशम्येति कुमारस्य, हृद्युल्लासस्तथाविधः । तथोत्पेदे यथा ज्ञानी, तं वेत्ति नापरो नरः ॥ ६७ ॥ तोपदानं ददौ तस्या–न्येषां गुडघृतादिकं । ततस्तेनैव वेषेण, सोऽग्रतः पुनरप्यगात् ॥ ६८ ॥ दृश्यः क्वचिददृश्यः स, गच्छन्नाप महाटवीं । तदंतरेकदा रात्रौ, सोऽस्थात्प्रोच्चतरोस्तले ॥ ६९ ॥ स वृक्षोऽस्ति शुकस्थानं, निशास्ये तेन तत्तरौ । चूर्णिं कृत्वाभितोऽनेक–शुका आजग्मुरुद्गिरः ॥ ७० ॥ कस्कोऽत्र कुत्र कुत्रागा–दिति तेषु वदत्सु च । तत्रैकस्तद्बृहत्कीर–स्तदायाद्दिनसैस्त्रिभिः ॥ ७१ ॥ तात ! क्वास्था इयत्कालं, काप्याश्चर्यं च दृष्टवान् । इति सोऽपृच्छि हृष्टैस्तै–स्ततो मुख्य-शुकोऽवदत् ॥ ७२ ॥ वत्सा इतो दिशि प्राच्यां, महेंद्राख्यपुर वर । तत्र त्रिलोचनो राजा, तत्प्रिया गुणसुंदरी ॥ ७३ ॥ तयोः सुलोचना नाम, जात्यंधास्ति सुताद्भुता । साऽधुना यौवनं प्राप्ता, चतुःषष्टिकलान्विता ॥ ७४ ॥ सा हृद्दृश्यैव नामानि, श्लोकांश्चापि लिखत्यहो । स मंत्रिवचनाद्राजा, भ्रामयेदिति डिंडिमं ॥ ७५ ॥ य एनामिह नेत्राभ्यां, पश्यंतीं कुरुते पुमान् । तस्यार्धराज्यमेनां च, पुत्रीं दास्ये ममेति धारु ॥ ७६ ॥ तत्रास्मिन् वाद्यमाने हि, जज्ञेऽद्य मासपंचकं । आषण्मासीं तु तद्भाग्या–त्कोऽप्येता तत्र नाथवा ॥ ७७ ॥ तेषु ये शिशवः कीरा–स्तैरुक्तं तात ! कुत्रचित् । तादृगस्त्यौषधं यस्मा–न्नेत्रे स्यातां हि नूतने ॥ ७८ ॥ सोऽभाषिष्ट तदप्यस्ति, कस्मिन्नेवोल्बणे वने । ते प्रोचुस्तत्किमत्रास्ति, स प्राहेहापि तद्भवेत् ॥ ७९ ॥ पर गुह्यमिदं रात्रौ, कथमप्युच्यते न वै । तथापि तैर्हठं कृत्वा, पृष्टः सोऽन्यथास्थितं ॥ ८० ॥ इहास्त्य-

स्य तरोर्मूले, मग्रभावं लताद्वयं । तत्रैका मृतसंजीव–न्यन्या च व्रणहारिणी ॥ ८१ ॥ आद्या दीर्घदला नेत्र–प्रगुणीकृतिकारणं । वृत्तपत्राऽपरा मध्यः, शस्त्रघातनिवारिणी ॥ ८२ ॥ तद्वचःश्रवणाद् हृष्टः, परोपकृतिकर्मठः । तदौषधीद्वयं लात्वा, तस्मात्स प्राग्दिशं ययौ ॥ ८३ ॥ त्रिदिनानंतरं तस्या–टव्यंते गच्छतः पुरः । आयात्कोऽप्युद्वसो देशो, नगरं तत्र चोद्वसं ॥ ८४ ॥ तत्रारामसरोवापी–सच्छायं नृपशूज्झितं । प्रोच्चवप्रप्रतोलीकं, सौधहट्टादि(लि)मालितं ॥ ८५ ॥ अंतः शून्यं बहिः शून्यं, दृष्ट्वाश्चर्यसमुत्सुकः । पुर्यंतः प्राविशत्येष, यावत्तावत्कुतश्चन ॥ ८६ ॥ सारिकैका समेत्याशु, तमभाषिष्ट संभ्रमात् । मा गाः पांथेह स प्राह, शुकि वार्येऽहमत्र किं ? ॥८७॥ युग्मं ॥ साह भद्र ! वपुर्विघ्न–मस्यांतर्गच्छतां नृणां । सोऽवग्भद्रेऽस्य किं नाम, को राजात्र कुतो भयं ? ॥८८॥ कथं शून्यं च शुक्याह, शृण्वयं कुंडलाचलः । योऽस्याद्देशं परीत्योच्चै–स्तद्योगात्पुरमप्यदः ॥ ८९ ॥ कुंडलाख्यमिति ख्यातं, तत्राभूद् भूधवोऽर्जुनः । तत्प्रियाः पंच तन्मुख्या, राज्यस्ति सुरसुंदरी ॥ ९० ॥ युग्मं । तत्र स्तेयं भवेत् षड्भिः, सप्तभिर्वा दिनैस्त(स्स)दा । चौरमन्वेषयंत्युच्चै–स्तलारक्षनृपादयः ॥९१॥ निश्येकदा नृपस्तैस्तैः, सह च्छन्नं पुरे भ्रमन् । अद्राक्षीद्दैवयोगात्तं, निर्यांतं लोप्त्रसंयुतं ॥ ९२ ॥ तत्पृष्ठौ भूपतिश्छन्नो, यात्यारक्षकदूरतः । स धूर्तो ज्ञातवानेवं, मत्पृष्ठावेति यन्नृपः ॥ ९३ ॥ ततः पुराद्वहिर्दस्यु–र्भूपं संभ्राम्य तद्दृशा । कस्मिन् मठे प्रविष्टस्तं, लोप्त्रं रत्नादिमुद्रकं ॥ ९४ ॥ मठांतः सुप्तनिद्रालु–परिव्राजकसंनिधौ । मुक्त्वा तद्वाससां मध्ये, तद्दृश्यो ययौ क्वचित् ॥ ९५ ॥ युग्मं ॥ निशाशेषे तदा राज्ञा, चौरभ्रान्त्या निजैर्भटैः । स हि कार्पटिकस्तस्मा–दाकर्ष्योच्चैर्विगोप्य च ॥ ९६ ॥ तत्पार्श्वात्तद्धनं लात्वा, कारितश्चौरनिग्रहं । स मृत्वा राक्षसो जज्ञे, तेन रोषान्नृपो हतः ॥९७॥ युग्मं ॥ नाशितः पौरलोकश्च, सैन्यं चाश्वगजा-

दिकं । राजलोकश्च सर्वोऽपि, ययावस्माद्दिशो दिशं ॥ ९८ ॥ परं पंचापि ता राज्योऽ-तःपुरे तेन रक्षिताः । तास्वेका गुणवत्याख्या, गुर्विण्यासीन्न चापराः ॥९९॥ यद्यस्यास्तनयो भावी, तद्धनिष्यामि तं ननु । इति राक्षसधीस्तत्र, दैवात्तस्याः सुताजनि ॥१००॥ नाम्ना चंद्रमुखी सा च, न ज्ञायतेऽथ भावि किं । पुरांतस्तेन यो याति, रोषात्तं हंति राक्षसः ॥१॥ तत् श्रुत्वापि कुमारेंद्रः, पुरांतः प्रविवेश सः । हट्टांस्तथाविधान् पश्यन्, प्राप्तो राजगृहांतरा ॥ २ ॥ प्रादुःकृत्य स्वनेपथ्यं, नृपावासं विलोकयन् । दृष्टा(ष्ट्वा)राज्ञीर्गवाक्षस्थाः, स पश्चादाययौ सभां ॥ ३ ॥ तस्यां श्रामिरपल्यंकं, स दृष्ट्वा कोमलास्तरं । शय्येयं रक्षसस्तेन, रक्षां कृत्वा निजांगके ॥ ४ ॥ तस्मिन् श्रमापनोदार्थं, सुखात्सुष्वाप निर्भयः । इतस्तत्र पलादः स, पूर्मार्गे पादपद्धतीः ॥ ५ ॥ दृष्ट्वा तत्कुपितस्तूर्णं, तत्रैत्य तं विलोक्य च । हृदि चिंतयितुं लग्नः, शौर्याद्भुतरसान्वितः ॥ ६ ॥ कोऽयमत्यंततेजस्वी, मच्छय्यास्थश्च धैर्यतः । कथमत्रागतः शूरः, सुप्तो निद्रामि तत्कथं (मितः कथं) ॥ ७ ॥ अमुमुत्पाट्य किं वार्धौ, क्षिपामि किमु चासिना ( सितः ) । हन्म्येनं दंडतः किं वा, सशय्यं चूरयाम्यहं ॥ ८ ॥ कुलकं ॥ विचिंत्येत्यतिरुष्टस्तं, हक्कयामास कोणपः । अरेरे केसरिस्थानं, शृगालाश्रयसीह किं ॥९॥ शीघ्रमुत्तिष्ठ दुष्टात्मन् !, मत्तः किं न बिभेषि रे ! । रक्षसो वचनं श्रुत्वा, स द्राक्सुप्तोत्थितस्तदा ॥ १० ॥ तमुवाच च भो निद्रा-लसं जागर्षि मां कथं । किं मे कथयसीहाथ, किं कृत्यं ते विलोक्यते ? ॥ ११ ॥ भो मुधाडंबरः कोऽयं, को गर्वस्ते स्वपौरुषे । कस्याग्रे दर्शयते भीष्म-तुंडित्वं क्रूरनेत्रता ॥ १२ ॥ इहाप्यहं स्थितः स्वीय-शक्त्यैव गुरुसत्त्वतः । यथा तथेदृशं जल्पन्, साधुवद्यन्न दृश्यसे ॥ १३ ॥ किमस्मात्क्रूरकर्मत्वा-तृप्तो नाद्याप्यभूस्तथा । राजदाराः सदाचाराः, कारागारे कृता यतः ॥ १४ ॥ ततश्चारुतया तिष्ठा-

न्यथा स्थानादितो व्रज । सशस्त्रं त्वां निरस्त्रोऽहं, न हन्मि तद्धि नो पुमान् ॥१५॥ तद्वचोऽनेकभंगीकं, श्रुत्वा दृष्ट्वा तमुत्थितं । हतप्रभावमात्मानं, तस्मिन् विज्ञाय कोणपः ॥१६॥ स्वयमेवोपशांतः सन्, कुमारं वक्ति साहसिन् ! तव सत्त्वादहं तुष्ट–स्तत्त्वं किमपि मार्गय ॥१७॥ युग्मं॥ लीलयावक्कुमारस्तं, निद्रालोर्मे पदोस्तले । परिमर्दय हस्ताभ्यां, यन्मे नेत्रसुखं भवेत् ॥१८॥ ततो ज्ञात्वा महांतं तं, सर्वलक्षणलक्षितं । स पलादस्तमभ्येत्य, यावत्स्पृशति तत्क्रमौ ॥ १९ ॥ तावच्छीघ्रं कुमारेण, गृहीत्वा तत्करौ ततः । पेते तत्पदयोः सोऽपि, भूपसूनोः पदेऽपतत् ॥ २० ॥ युग्मं ॥ तौ मिथः क्षामणापूर्वं, जातौ प्रशंसनान्वितौ । ततस्तं कुमरोऽवादी–देव ! तुष्टोऽसि मे यदि ॥ २१ ॥ तदा प्राणिवधं पापं, त्यज पुण्यमतिं भज । मुंचैता राजपत्नीश्च, सोऽङ्गीचकार तत्तदा ॥२२॥ युग्मं ॥ धर्मदातृतयात्यंतं, तुष्टः कोणप आह तं । त्वं कुंडलपुरस्यास्य, राज्यं धीर ! समुद्धर ॥ २३ ॥ ततो राजप्रियापार्श्वे, गत्वा ता राक्षसोऽवदत् । राज्यः कोऽप्येष पुण्यात्मा, मत्त्वज्ञाभ्यादिहाययौ ॥ २४ ॥ अथ यूयं भगिन्यो मे, क्षंतव्यं मम दुर्वचः । मयेदं राज्यमत्रत्यं, दत्तमस्मै महात्मने ॥ २५ ॥ कुमारोऽवग्जनन्यो यः, कुले कोऽप्यस्ति तादृशः । पुमान् यादृगिदं राज्यं, पालयेन्नामतो भवेत् ॥ २६ ॥ ता ऊचुर्वत्स ! यद्रक्षः–प्रोक्तं तन्नः सुसंमतं । तावता ( तासु सा ) गुणवत्याह, शृणु चंद्रमुखीमिमां ॥ २७ ॥ अज्ञातकुलशीलस्य, राज्यं मे कन्यकामिमां । यक्षराज ! कथं दत्से, किं च वैदेशिकोऽस्म्यहं ॥ २८ ॥ तेनेत्युक्तोऽपि यक्षः स, लोकान् सैन्यं गजादिकं । स्वशक्त्याभित आनाय्य, राज्यं सर्वं कनीं च तां ॥ २९ ॥ ददौ तस्य ततस्तेन, दर्शिता नाममुद्रिका । प्रकाशितं स्वनामादि, हर्षोऽजनि महांस्तदा ॥ ३० ॥

१ 'न्यथाऽयं त्वमसावहं' इति प्रतौ पाठः ।

॥ युग्मं ॥ तस्याभिषेके राज्यस्य, तस्यां पुर्यां च कारितं । श्रीचंद्रभूपतेराज्ञां, तत्र विस्तार्य सोऽवदत् ॥ ३१ ॥ यः पापो मम चौर्यालं, लोप्त्रं मुक्त्वा ददौ तदा । चौरो वज्रखुराख्यस्तं ( स्तद् ), ज्ञात्वा जघ्ने मया हि सः ॥ ३२ ॥ तत्कुंडलगिरौ राजन् !, गम्यते मुख्यशृंगके । तदंतरस्ति तद्गेहं, रत्नस्वर्णादिसंभृतं ॥३३॥ तत्र गत्वा च तत्सर्वं, स्वीकृत्य यक्षवाक्यतः । तत्र चंद्रपुरं नाम, पुरं स्वधामतोऽद्भुतं ॥ ३४ ॥ यक्षालयं च भूभर्ता, व्यधात्तन्मध्यगं परां । दृषन्मयीं च तन्मूर्तिं, चौरदेहोपरिस्थितां ॥ ३५ ॥ युग्मं ॥ नरवाहनयक्षोऽय-मिति नाम चकार च । सर्वं संकीर्त्य यक्षस्य, स ययौ कुंडले पुरे ॥ ३६ ॥ कियद्दिनानि तद्देशे, स्थित्वा स कुंडलेश्वरः । श्वश्रूलोकानमात्यांश्च, तां बालां सैन्यपं भटान् ॥ ३७ ॥[1] अनुज्ञाप्यात्मनस्तत्र, पादुकां सिंहविष्टरे । संस्थाप्य सर्वमर्यादां, कृत्वा चात्र निजागमं ॥ ३८ ॥ ततः पूर्वेण वेषेण, छन्नं निशामुखेऽचलत् । क्रमात्प्राप महींद्राख्यं, पुरं स तद्बहिर्निशि ॥ ३९ ॥ एककः क्वापि सुप्तश्च, निशीथे तावता पुरात् । चौर्यं लोहखुरश्चौरो-ऽवस्वापिन्यादियोगतः ॥ ४० ॥ कृत्वागात्तत्र तद्भारा-क्रांत उत्थाप्य तं ततः । जगौ कार्पटिक त्वं मे, भाटकाद्भारमुद्वह ॥ ४१ ॥ कुलकं ॥ तद्वाक्यात्सच्व(त्सिद्ध)शार्दूलो, भारमादाय तं तदा । तत्सार्थेन चचालाग्रे, दर्यंतः प्रविवेश च ॥ ४२ ॥ तत्र भूमिगृहं दीप-मालाभिर्भास्वरं वरं । रत्नादि कामिनीं चैकां, स वीक्ष्याश्चर्यवानभूत् ॥ ४३ ॥ चौरोऽवक्तां सुतेऽस्य त्वं, भक्तिं तां महतीं कुरु । ततः सा कुमरं प्राह, स्वामिन्नेहि गृहांतरा ॥ ४४ ॥ स्नानभोजनपानादि, कुर्वेनां मां रमस्व च । तत् श्रुत्वा कूटमत्रैत-दिति ज्ञात्वा कुमारराट् ॥ ४५ ॥ तं बध्ध्वा बहिराकर्ष्य, रोषात्पप्रच्छ तां स्त्रियं । का

१ 'नगरं धाम चाद्भुतं' इति प्रतौ पाठः ।

त्वं कथय रे कोऽयं, भयभ्रांता जगाद मा ॥४६॥ युग्मं ॥ अयं लोहखुरोऽस्यास्मि, पुत्री संकेतयोगतः । नरमत्रामुनानीतं, गर्तांतः पातयाम्यहं ॥४७॥ ततस्तामपि निष्कास्य, दरीवक्त्रं प्रमुद्य च । तर्जयित्वा च तं चौरं, छोटयित्वामुचत्सुधीः ॥४८॥

चौरे सुतायुते तस्मिन्, काप्यन्यत्र गते ततः । प्रातरर्हन्नतिं कृत्वा, पुरांतः प्रविवेश सः ॥ ४९ ॥ कस्यापि श्रेष्ठिनो हट्टे, यावत्तिष्ठेत्स तावता । आगमत्पटहस्तत्र, स पप्रच्छाद्य किं ह्यदः ॥ ५० ॥ शुकवत्सकलं तेन, प्रोचे तस्य यथास्थितं । षड्दिनोनाद्य षण्मासी, जातास्य भ्रमतोऽनिशं ॥ ५१ ॥ तदा पटहभृद्भृत्यैः, शब्दोऽपाति जना अहो । यः कोऽपि राजकन्यायाः, पटूकरोति लोचने ॥ ५२ ॥ तस्य तामर्धराज्यं च, राजा दत्तेऽत्र निश्चयात् । तत् श्रुत्वा कुमरः शीघ्रं, पस्पर्श पटहं ततः ॥ ५३ ॥ युग्मं ॥ तैर्विज्ञप्तो नृपो हृष्ट–स्तं कार्पटिकमादरात् । छत्रचामरहस्त्यादि–योगादानीतवान्मुदा ॥ ५४ ॥ गत्वा नृपसभायां स, आशीर्वादपरायणः । नृपेण त्वा(स्वा)सने मुक्ते, विनयादुपविष्टवान् ॥ ५५ ॥ कुत्र ते वसतिर्भद्र!, भद्रं चास्तीति भूभुजा । पृष्टः स प्राह राजन्! मे, वासः कुशस्थले पुरे ॥५६॥ अद्य युष्मत्पदे दृष्टे, कल्याणं मेऽभितोऽभवत् । अस्मद्भाग्यात्कनीभाग्या–दिह दिष्ट्या त्वमागतः ॥ ५७ ॥ अद्य नः कुरु तत्कार्यं, यत्प्रोक्तं तद् गृहाण च । राज्ञेत्युक्ते कुमारः सो–ऽभाषिष्ट तं वरं नृप ( तं ममास्ति सन् ) ॥ ५८ ॥ विद्यामंत्रौषधीयोगा–भ्यासो गुरुप्रसादतः । परं सा दर्श्यतां बाला, यथायोगं क्रियेत यत् ॥ ५९ ॥ राज्ञानीतां च तां बालां, दृष्ट्वा हाहेति जल्पता । तेनाकारि सभामध्ये, पवित्रा भूरितोऽभितः ॥ ६० ॥ भव्या जवनिकास्थापि, तदंतरे च सा कनी । स्थापिता तेन विज्ञेन, नेत्रशुद्धिचिकीर्षया ॥ ६१ ॥ पूजोपहारः

१ ' केवलज्ञानिदेवस्य, बिंबपट्टोपरि स्फुटं ' इति प्रतौ पाठः ।

सर्वोऽपि, स्नानयोगश्च कारितः । तन्मध्ये च(ऽथ) स्वयं गत्वा, सर्वो विधिरकारि च ॥ ६२ ॥ युग्मं ॥ कृत्वाक्षिपरितः पालीं, मध्ये तदौपधीरसं । मुक्त्वा ततः शनैः सोऽपि, स्नानपूजादिपूर्वकं ॥ ६३ ॥ भूपोत्क्षेपनमस्कार–गुणनं स्वीयवेपभृत् । कुर्वन्न-ध्याद्विधेस्तत्र, रसशोपाय दिव्यधीः ॥ ६४ ॥ युग्मम् ॥ तदौपधप्रभावेण, तन्नेत्रे पद्मपत्रवत् । जाते ततस्तया दृष्टः, स कुमारः सुरेंद्रवत् ॥ ६५ ॥ देवपूजाविधिं कुर्वन्, दिव्याभरणभूपितः । सूर्यवज्ज्वालतेजस्क–स्तं विलोक्याहतो नतिं ॥६६॥ कुर्वंती तां जगादेप, भद्रे ! त्वं चारु पश्यसि । किमु मन्नाममुद्रायां, लिखितं त्वं च (तच) वाचय ॥ ६७॥ युग्मं ॥ तयावाचि च श्रीचंद्र–कुमार इति नाम तत् । हर्षाच्च स्तोतुमारेभे, हे नाथ ! प्राणजीवन ! ॥६८॥ पित्रा तेऽग्रेऽप्यहं दत्ता, मया ह्यद्य धृतो भवान् । मुद्रया नाम ते ज्ञात–माचारैश्च कुलादिकं ॥ ६९ ॥ युग्मं ॥ ततः भव्यवेपं तं, संगोप्य धातुपोतकं । वेपं धृत्वा च तंवृद्दृष्ट्वा, भस्मोद्धूसलितालकः ॥ ७० ॥ भूपपार्श्वे ययौ तत्र, तत्पृष्ठौ सा सुलोचना । सत्याभिधां च तां दृष्ट्वा, ललौ स्वांके नृपो मुदा ॥ ७१ ॥ युग्मं ॥ सर्वेपामद्भुतं जज्ञे, तस्मात्तस्याः कलायुजः । तदोत्सवो महांश्चक्रे, नृपेण सुतजन्मवत् ॥७२॥ ततः सुलोचना राज्ञा, प्रैपि चांतःपुरे निजे । तदीक्षणेक्षणात्सर्वा, हृष्टा राज्यश्च जज्ञिरे ॥ ७३ ॥

इतः कार्पटिकः सौधे, प्रापि भूपेन विस्तरात् । तत्र पाकक्रियाद्यर्थं, मुक्ताश्च बहवो भटाः ॥ ७४ ॥ सभायां मंत्रिभिः सार्धं, मंत्रयामास भूपतिः । कन्येयमस्य दातव्या, कुलादि ज्ञायते न च ॥ ७५ ॥ नृपादेशादमात्योऽपि, तत्रैत्य तं च पृष्टवान् । किं कुलादि तवाख्या का, वद भद्र ! मुदे हि नः ॥ ७६ ॥ प्रहस्य कुमरोऽवादी–द्युष्माभिः पृच्छयते वरं । सत्यमेतदभूदत्र,

१ ' रसशोपावधीद्धधीः ' इति प्रतौ पाठः । २ ' तद्दृष्ट्वा, भस्मोद्भूतलितालकः ' इति प्रतौ पाठः ।

पीत्वांभोऽपृच्छि यद्गृहं ॥ ७७ ॥ तथापि श्रूयतां मंत्रिन् !, पुरे कुशस्थलाभिधे । लक्ष्मीदत्तो वणिक्तस्य, पुत्रोऽहं व्यसनी हठी ॥ ७८ ॥ गृहाल्लक्ष्मीं पितुश्छन्ना–मादाय तादृशे जने । यथा तथा समुज्झंश्च, पित्रा बह्वपि वारितः ॥७९॥ न तिष्ठामि तदा पित्रा, निष्कासितो गृहादहं । द्यूतादिव्यसनासंतो–र्जायते किं न दुःखिता ॥ ८० ॥ ततो मे भ्रमतो भूमा–वेकः सिद्धनरोऽमिलत् । सेवातस्तेन तुष्टेन, मंत्रादीदमदायि मे ॥ ८१ ॥ तं मुक्त्वात्राहमायातो, द्यूतं न स्याद्धनं विना । तेनासुं पटहं ज्ञात्वा, स्पृष्टवान् धीरथेति मे ॥ ८२ ॥ इयदेतद्धनं सर्वं, हस्त्यादि च निजेच्छया । एष्यति द्यूतकार्ये मे, ततश्चिंताविधौ मम ॥ ८३ ॥ तद्वचो मंत्रिणा सर्वं, नृपस्य ज्ञापितं ततः । अतिचिंतातुरो जज्ञे, भूभुक्तैर्मंत्रिभिः सह ॥ ८४ ॥ ईदृशो द्यूतकारस्य, कथं दास्ये सुतेदृशी । स्वदेशे परदेशे च, किं महत्त्वं यशश्च किं ॥ ८५ ॥ दीयतेऽस्य न चेत्कन्या, तर्हीतद्याति मद्वचः । गच्छता तेन किं प्राणैः, किं राज्येन धनेन च ( ज्येनेति दुःखतः ) ॥८६॥ सोऽगादंतःपुरे गीत–गानाद्युत्सवतत्परे । सुलोचनाह किं तात !, श्यामास्यस्त्वं सुखास्पदे ॥ ८७ ॥ युग्मं ॥ राज्ञोचे तस्य वृत्तांतो, राज्यग्रे मूलतोऽखिलः । तस्मात्तासां सचिंतात्वे, जाते पुत्र्याह सस्मितं ॥८८॥ तात ! नैवंविधोऽयं ना, किं त्वस्य वाग्विचित्रता । यद्यज्जातं तदा तत्र, तया दृष्टं च तज्जगौ ॥ ८९ ॥ श्रीचंद्रोऽयं वरो मेऽस्तु, मुद्रातोऽवगताभिधः । पुरताताभिधाने तु, स्फुटमुक्ते सुधीमता ॥ ९० ॥ ततो हृष्टः सभास्थः स, गणकाल्लग्नमाददत् । क्ष्मापालो मंत्रिणः प्रैषी–च्छ्रीचंद्रानयनाय च ( तान् ) ॥९१॥ तत्र गत्वागतैः सद्य–स्तैर्विज्ञप्तखिलोचनः । न ज्ञायते स कुत्रागाद्, दृश्यते नात्र कुत्रचित् ॥ ९२ ॥ ततः ससंभ्रमं राजा, स्वभटैस्तं व्यलोकयत् । दृष्टः कैस्तु न सौधांतर्न पुरे न बहिः स हि ॥ ९३ ॥ श्रुत्वा तत्प्राप सा मूर्छां, कथंचिल्लब्धचेतना । रुदंती रोदयंती च, तां निशामत्यवाहयत्

॥ ९४ ॥ तस्यांप्रासेश्च सा बाला, न भुंक्ते न च जल्पति। तत्रान्यः कोऽपि नो,भुंक्ते-ऽमात्या मूढधियोऽभवन् ॥९५॥ राज्ञाहूय पुरीलोकाः, पृष्टाः कुशस्थलागतः। अत्र कोऽप्यस्ति ते प्रोचुः, संति राजन् ! घना अपि ॥ ९६ ॥ तदुक्ताख्यादिके पृष्टे, तेषामेकोऽवदद्वणिक्। कुशस्थलेऽस्ति यो लक्ष्मी-दत्तसूनुः कुमारराट् ॥९७॥ श्रीचंद्र इति नामायं, जामाता श्रेष्ठिनो मम। ईद्दग्नामांकिता मुद्रा, गूढवत्रास्ति तत्करे ॥९८॥ युग्मं ॥ अहं वाणिज्यभृत्यो (पुत्रो)ऽस्मि, धनस्य तत्र वासिनः। तत्पुत्री धनवत्याख्या, तद्भर्ता स गुणांबुधिः ॥९९॥ तदभिज्ञानतो ज्ञातं, कुमार्यंत्ययमेव मः। ततः सा भोजिता राज्ञा, ज्ञातः पुत्रि ! स ते वरः ॥ २०० ॥ राज्ञः प्रतापसिंहस्य, पार्श्वे (तस्य) च व्यवहारिणः। मंत्रिणः प्रेषयिष्यंते, यथैता सत्वरं वरः ॥ १ ॥ इतस्तदनु तत्स्थाना-त्कुमारः कृतकृत्यधीः। वपुश्चिंतामिषं कृत्वा, चचालाचलमानसः ॥२॥ तं वेषं कस्यचिद्दत्वा, वटुवेषं विधाय च। क्रमान्मुक्त्वाथ (च) तं देशं, प्राप किंचिद्वनं महत् ॥ ३ ॥ दृष्ट्वैकं तत्र कासारं, विपुलं कमलैः कलं। सुनिर्मलजलं केकि (कोक)-मुख्यपक्षिनिषेवितं ॥४॥ तत्र सूर्यवतीपुत्रो, गत्वा रंत्वा च तज्जले। पाल्यां पाल्यां जगामाग्रे, ददर्शोद्यानमेककं ॥ ५ ॥ तत्रैकमाश्रमस्थान-मेकतोऽश्वगजा(तश्च मठा)दिकं । कांश्चिन्नरान् स्त्रियः काश्चि-च्चित्रवेषा विलोक्य सः ॥ ६ ॥ दध्यौ क्वापैदिका नैते, न तापसा न योगिनः। किं वामीभिर्विकल्पैर्मे, कुर्वे तावत्तदीक्षणं ॥ ७ ॥ युग्मं ॥ ततश्चूतवने सोऽगा-त्तदंतः कांतितोऽद्भुतं। कुमारं तापसस्यैकं, चित्रवल्कलवाससं ॥८॥ अमितश्चंद्रव(को)द्दीप्रं, मयूरांगजपादुकं। क्रीडंतं तरुदोलायां, नृवेषेण कनीमिव ॥ ९ ॥ क्वचित्स्वर्णादिभूषांगं, कोमलास्यं स दृष्टवान्। एकां च घूर्मयंतीं तां, पार्श्वे तापसबालिकां ॥ १० ॥ त्रिभिर्विशेषकं ॥ तत्रागतं च तं दृष्ट्वा-त्तत्तापसकुमारकः। तद्रूपाक्षिप्तचेतस्कः, सख्यभ्यागत एष नः ॥ ११ ॥ फलान्यस्मै

प्रदीयंते, ततः सख्याह सादरं । बटुकागम्यतामस्यां, छायायामुपविश्यतां ॥ १२ ॥ कुमारेऽत्रस्थिते राजा—दनीतरुतले तदा । ढौकिरे तयानीय, फलान्युच्चैर्ललौ च सः ॥ १३ ॥ का त्वं कोऽयं किमेतच्च, स्थानं यावत्स पृच्छति । तावत्तत्रापरा बाला, गायंतीत्यागता कलं ॥ १४ ॥-तथा-च-चंदकला रायसुया, सा सव्वकल्ला(ला)ण भायणं जयई । सिरिचंदवरो जीए, सयमेव परिकिऊण कओ ॥ १५ ॥ श्रुत्वेत्याश्चर्यवान् दध्यौ, कुमारः किमिदं वचः । क्व सा क्वैताः क्व तत्स्थानं, क्वेदं कथं विदंत्यदः ॥ १६ ॥ पुनर्वृद्धाययौ त्वेका, विधवा विशदांबरा । तया तत्र नृवेषस्य, स्त्रीवेषस्तस्य चार्पितः ॥ १७ ॥ बटुं दृष्ट्वाह सा वृद्धा, भद्र ! त्वमागतः कुतः । सोऽवक्कुशस्थलादेतो, हृष्टाश्च तास्ततोऽखिलाः ॥ १८ ॥ ताभिश्च ज्ञापितास्तेऽन्ये, तत्रैत्य परितः स्थिताः । बटुः कुशस्थलायातो, जल्पंतीति ससंभ्रमं ॥ १९ ॥ ओमित्युक्त्वाथ ते तेन, प्रोचुश्चंद्रकला तदा । तत्रायात्तद्वरः कोऽभू—त्तानवोचत्स सत्यगीः ॥ २० ॥ लक्ष्मीदत्तसुतस्तत्र, परिणीयानयच्च तां । तथोचुः ( ताः प्रोचुः ) स्वामिनीदक्षा, वार्तालीका भवेन्न हि ॥ २१ ॥ मुख्यामत्रेषु तां ज्ञात्वा, नत्वा चोवाच सोऽग्रधीः । त्वमंवेह कथं केऽमी, काश्चैताः कस्य ( श्च ) संभ्रमः ॥ २२ ॥ इत्यादि सकलं श्रव्यं, श्राव्यतां मम विस्तरात् । वृद्धाह शृणु वत्स ! त्वं, वसंताख्यपुरेऽभवत् ॥ २३ ॥ वीरसेनो नृपो वीर-मतीवीरप्रभे उभे । भार्ये तस्य तयोराद्या, साहं मंगुनृपात्मजा ॥ २४ ॥ मत्पित्रोर्द्वे सुते स्यातां, जयश्रीः प्रथमा तयोः । अन्या विजयवत्याख्या, साप्यहं पितृनामतः ॥ २५ ॥ चतुर्भिः कलापकं ॥ राज्ञी प्रतापसिंहस्य, जयश्रीः सा मम स्वसा । पुत्रास्तस्याश्च चत्वारो, जयाद्याः संति सत्तमाः ॥ २६ ॥ वसंतपुरभूभर्तु—र्मंत्रीशोऽयं सदामतिः । अयं मम पितृव्योऽस्ति, प्राच्या नः स्थितिरीदृशी ॥ २७ ॥

इतो वीरप्रभावत्तु-र्नरवर्माभिधोऽभवत् । सोऽत्यंतं बलवान् जज्ञे, शस्त्रशास्त्रविशारदः ॥ २८ ॥ कालेन कियता मेऽपि, सुताभूदतिचंद्ररुक् । चंद्रलेखाभिधा सेयं, सख्यश्चास्या इमाः समाः ॥ २९ ॥ तदन्वेकः सुतोऽभून्मे, वीरवर्माभिधानकः । अधुना पंचवर्षीयः, सोऽप्यत्रास्ति ततः शृणु ॥ ३० ॥ राज्ञान्यदा स्वदेहस्थ, ज्ञाते कालज्वरे खरे । वीरवर्मा कुमारोऽयं, प्रमुर्णेऽके सदामतेः ॥ ३१ ॥ मम राज्यमिदं देय-मस्यैवेत्युक्तवांश्च सः । दिवं गते नृपे तत्र, नरवर्मा बलोद्धतः ॥ ३२ ॥ तद्राज्यं स्वयमेवादा-द्देशाभिःसुता वयं । गच्छतां पितृपुर्यां न, आयादेकं पुरं पथि ॥ ३३ ॥ युग्मं ॥ तद्बहिर्वय-मुत्तीर्णा-स्ततो मंत्री सदामतिः । पुरांतरेकमायातं, ज्ञात्वा नैमित्तिकं गतः ( तदा ) ॥ ३४ ॥ मानपूर्वकमाहूय, स आनीतो ममांतिके । मयाप्येनां तत्पुरतो, पृच्छया प्रोक्ता निजा स्थितिः ॥ ३५ ॥ अस्या वरश्च कः कुत्र, कदा भावीति ? तद्वद । क्षणं विमृश्य स प्राह, भाग्यस्या वल्लभो महान् ॥ ३६ ॥ तथा च-राज्ञः प्रतापसिंहस्य, सुतश्चंद्रकलापतिः । भर्तास्या भविता चंद्र-कलापरिणयादनु ॥ ३७ ॥ श्लोकं दत्वा पुनः सोऽथ-माख्यत् खादिरे वने । तत्र राजादनीदुग्ध-चपत्तिस ज्ञास्यते परः ॥ ३८ ॥ तद्वचः श्लोकपत्रं च, लात्वा सत्कृत्य तं ततः । कानने खादिरे दासि-त्रियत्परिकरान्विताः ॥ ३९ ॥ वयमाजग्मिमतस्माद्, द्वौ नरौ योगिवेषिणौ । कन्याविवाहशुल्कार्थ-मस्माभिः प्रेषितौ तदा ॥ ४० ॥ युग्मं ॥ तत्र गत्वागतौ तौ च-चाख्यतां वार्ता यथास्थितं । तद्वनस्तद्वनश्चापि, तुल्यमेवाभवद्यतः ॥४१॥ श्रेष्ठिजोऽसौ वरो जज्ञे, न तदुक्तो महीपजः । स्वरूपेण स्वरूपेण, गुणेण कदापि च ॥ ४२ ॥ नानाक्रीडां चरीकर्ति, रंरमीति सखीजनैः । नर्नर्ति बहुभिर्भेदैः, पुष्पोत्तंसं विधत्ते च ॥ ४३ ॥ युग्मं ॥ अत्र स्थातुं च मे योग्यं ( स्थितस्य मे योगो ), मनागपि न दृश्यते ॥ ध्यात्वेति यावदुत्तस्थौ,

कुमारस्तत्र तावता ॥ ४४ ॥ ववर्ष सहसा दुग्धै-स्तस्मिन् राजादनी भृशं । चिरागत सुतऽकस्थ, हृषाश्रुभिः प्रसूरिव ॥ ४५ ॥ युग्मं ॥ ततो हृष्टाश्च ते सर्वे, पुण्याः प्राप्तोऽद्य यद्वरः । चंद्रलेखा तदा लज्जा-नतमुख्यभवत्तरां ॥ ४६ ॥ मात्रादेशाद्वरमालां, पत्युः कंठे च साक्षिपत् । नानाफलादिभिस्तैश्च, कृता ( चक्रे ) तद्भक्तिरद्भुता ॥ ४७ ॥ तेषां महोपरोधेन, स्वनामादर्शि मुद्रया ( मुद्रिका ) । कन्या तत्रोपयेमे च, श्रीचंद्रेण तदाग्रहात् ॥ ४८ ॥ विषापहारिमण्यादि, लेभे तत्करमोचने । इतोऽमु-चत्कुमारस्यो-त्संगे वीरमती सुतं ॥ ४९ ॥ अथामुं वीरधर्माख्यं, यादृशं त्वं करिष्यसि । उदारवीरकोटीर, तादृशोऽयं भवि-ष्यति ॥ ५० ॥ इति श्वश्रूवचः श्रुत्वा, प्रतापसिंहभूपजः । प्रोचेऽम्ब ! नाधृतिः कार्या, भव्यं भाव्यखिलं तव (ह्यथ) ॥ ५१ ॥ मंत्रिनेतरकुमारादि-सर्वे लात्वाथ गम्यतां । कुंडलाख्ये पुरे तत्र, स्थातव्यं स्वाश्रये सुखात् ॥ ५२ ॥ अहं त्वग्रेऽधुना गंता, चिंताशेषास्ति यः पुनः । तत्रत्यमंत्रिणां लेखान्, दत्त्वा सदामतेः करे ॥ ५३ ॥ कियद्दिनानि तत्स्थाने ( तत्कक्षे ), स्थित्वा च प्राच्यवेषतः । निरगादेककस्तस्मा-त्प्राप देशांतरं क्वचित् ( च सः ) ॥ ५४ ॥ युग्मं ॥

इतो वीरमती मंत्रि-सुतादिपरिवारयुक् । प्रतस्थे तद्धनाचंद्र-पुरं प्रति पथि क्रमात् ॥ ५५ ॥ सा महींद्रपुरं प्राप, ज्ञाता च तन्महीभुजा । ससुता मादराहूता, सदस्येता च मंत्र्यपि ॥ ५६ ॥ युग्मं ॥ मिथः स्वस्वस्वरूपोक्ते-र्ज्ञाते तच्च-रितेऽखिले । हृष्टा नृपादयश्चक्रे ( श्चावां ), भगिन्याविति ते उभे ॥ ५७ ॥ तदा कुशस्थलात्कोऽपि, तत्कुंडलपुरांतरा । भूत्वा तत्रागतो वंदी, श्रीचंद्रस्यावदद्गुणान् ॥ ५८ ॥ तद्यथा-राहावेह० १ ॥ सिंहओ० २ ॥ णयरे कुशस्थ० ३ ॥ इत्यादि ॥ श्रीचंद्रभूपपुत्रस्य, चरित्रं कुंडलेशितुः । श्रुत्वा सुलोचनाचंद्र-लेखे हृष्टे पुनर्भृशं ॥ ५९ ॥ राज्ञा तत्सुतया चापि, तत्र वीरमती

बहु । स्थापितापि स्थिता नैषा, प्राप्ता कुंडलसत्पुरे ॥ ६० ॥ इतश्च—

श्रीचंद्रोऽग्रेऽन्यदा गच्छन्, कस्याः पुरो बहिर्भुवं । वस्त्रावासै रथैरश्वैः, सद्वेषैश्च नरैर्भटैः ॥ ६१ ॥ संभृतामुच्छलद्दानां, वीक्ष्यैकं पृष्टवान्नरं । सखे ! किमेतदत्रास्ति, स प्राहैतद्वटो शृणु ॥ ६२ ॥ युग्मं ॥ इयं कांपील्यपूरस्या, जितशत्रुनृपः प्रभुः । प्रीतिस्तत्पट्टराज्यस्ति, रतिराज्यास्तु (श्च) सा स्वसा ॥६३॥ तत्पुत्रः कनकरथो, रंरमीत्यत्र सोऽधुना । सवयस्यैः समं राधा-वेधानुकृतिनिर्मितौ ( ते ) ॥ ६४ ॥ अत्रागतोऽभवद्वीणा-रवो गायनपुंगवः । तेनाश्चान्यस्य भूपस्य, प्रबंधः कोऽप्यनुत्तरः ॥ ६५ ॥ श्रीचंद्रो नायकस्तत्र, राधावेधविधायकः ( नाम्ना नृपविडंबने ) । तत्र तुष्टो नृपो वीणा-रवस्यादाद्धनं बहु ॥६६॥ मया श्रीचंद्रभूपस्या-मोचि ग्रहणके करः । तस्मात्तेनात्मना किंचि-न्नाददे सोऽगमत्ततः ॥ ६७ ॥ प्रबंधांतर्यथा राधा-वेधोऽभूत्तिलकाह्वये । पुरे रतिसुतायास्तत्, श्रुत्वायं कुरुते त(य)था ॥ ६८ ॥ चलेतो दर्शयाम्येत-दयं तावत्स मंडपः । अमी नृपपटावामा, एते नृपसुतादिकाः ( ताः कृताः ) ॥ ६९ ॥ अयं स्तंभ इयं राधा, भद्रेदं तैलभाजनं । नर(रः)प्राप्तकनीवेष, एषा तिलकमंजरी ॥ ७० ॥ एताश्च शिबिकारूढा, नृपपुत्र्यादिकाः स्त्रियः । इदं धनुरमी बाणाः, किं भान्यथ विलोकय ॥ ७१ ॥ तदा तत्र क्रमात्तैस्तै(कुमारैस्तै)-र्धनुर्विद्या कृता परं । साधिता तेषु नैकेन, प्रीतिराज्यात्मजादृतैः ॥ ७२ ॥ कृत-श्रीचंद्रवेषः स, मुक्त्वैकस्मिंस्तरौ रथं । तत्रागत्य धनुर्लात्वा, तद्वच्चक्रे शरोज्झनं ॥ ७३ ॥ युग्मं ॥ शरे लग्नेऽप्यलग्ने चा, तदा कृत्रिमकन्यया । तत्कंठे वरमाला सा, मुमुचेऽभूच तत्र मुत् ॥ ७४ ॥ ततो लात्वा मभालां तां, निर्ययौ ससखा रयात् । यात्यहो यात्यहो एष, इति कोलाहलोऽजनि ॥ ७५ ॥ तदा पिंगलभट्टेनोक्तं—लोइयमिच्छं दुविहं, देवगयं गुरुगयं मुणेयव्वं ।

लोउत्तरं न दुविहं, देवगयं गुरुगयं चेव ॥ ७६ ॥ इय चउहा मिच्छत्तं, सुव्वयवयणाउ वज्जियं जेण । संमत्ततत्तदिट्ठी, सूरो मो जयउ सिरिचंदो ॥ ७७ ॥ इत्यादि ॥

इतः कुमारपार्श्वस्था, दृष्टा कनकवत्यलं । नृपपुत्री निजां धात्रीं, जगौ जातानुरागिणी ॥७८॥ मातः! प्रतिकृतिर्यस्ये-दृशी चित्तानुहारिणी । माहात्म्ययानसौ साक्षाद्, दृष्टः कीदृक्सुशोभितः ॥ ७९ ॥ तेन श्रीचंद्रनामायं, पतिर्मेऽस्तु न चापरः । तदा तिस्रोऽपि तत्सख्यो, मिथः प्राक्कृतनिश्चयात् ॥ ८० ॥ मंत्रिजा प्रेमवत्याख्या, धनश्रीः सार्थपांगजा । हेमश्रीः श्रेष्ठिनः पुत्री, ताभिर्वव्रे स एव हि ॥ ८१ ॥ युग्मं ॥ वरं वृतमिति प्रोच्य, धात्र्या भूभुग्निवेदितः । राजापि मंत्रिणः प्रैषी-त्सद्वराय कुशस्थले ॥ ८२ ॥ ततः कुमारभूशक्रो, दध्यौ तासां वचःश्रुतेः । अत्रोपलक्षिता कोऽपि, तिष्ठतो मे निजे-च्छया ॥ ८३ ॥ अत एतत्पुरीमध्ये, भूत्वा याम्यहमग्रतः । ध्यात्वेत्येष तथा चक्रे, तां विलोक्याभितः पुरीं ॥ ८४ ॥ युग्मं ॥ गच्छता गच्छता मार्गे, मुमुचे तेन भूर्बहुः । दृष्टा चाग्रे पुरी कापि, तद्बहिर्यक्षसद्मनि ॥ ८५ ॥ स यावद्याति तत्रैकं, नरं तावद्ददर्श सः । गले हस्तं प्रदायोप-विष्टं तं चिंतयातुरं ॥ ८६ ॥ दृष्ट्वा प्राह पुरी केयं, कस्त्वं भद्राष्टतिस्तु(श्च) का ? । स निःश्वस्य जगौ पांथ!, पुरी कांतीयमद्भुता ॥ ८७ ॥ त्रिभिर्विशेषकं ॥ भूपोऽस्यां नरसिंहोऽस्ति, सुता प्रियंगुमंजरी । सा सुरूपा विदग्धा च, चतुःषष्टिकलान्विता ॥ ८८ ॥ शृणु मेऽथ सचितत्व-मितो नैर्ऋतकोणगं । पुरं हेमपुरं तत्र, भूधवो मकरध्वजः ॥ ८९ ॥ पुत्रो मदनपालोऽस्ति, तस्य स प्राप यौवनं । गवाक्षस्थोऽन्यदाद्राक्षी-त्स यांतीं पथि योगिनीं ॥९०॥ आहूता मागता तत्र, तेन पृष्टा च ते शिवं । कुत आगाः क गंत्री च, किं चापूर्वं तदाह सा ॥ ९१ ॥ यतः-जर आवइ

जुव्वण गच्छइ, नितओ गिल्लइ भाणि । काला कुसल न पूछीए, हाणि विहाणिविहाणि ॥ ९२ ॥ जरसुणहा जुव्वणसमा, काल आहेडी जाम । भोला कुसल न पूछीए, एता वइरी भाम ॥ ९३ ॥ एकइं घटी वे पाहरी, मूरख कुसल भणंति । जीव जमाला वीसरई, कुज्जरा आवी पडंति ॥ ९४ ॥ कुसल हुंति जु न जामंति, जाया जु न मरंति । मरणपदारघघटिवसइ, कुसल काहां हुंति ॥ ९५ ॥ तथा-चारखाणि चउरासीलक्ख जोणी, तिहां भमी करी आया । जिहांथी आया तिहां मन टाली, जईसि परब्रह्म पाया ॥ ९६ ॥ तथा च-घटभीतरिआ(अ) पूरवजोइ, जनमबालजुव्वणजर होइ । अंगवयवकुंतलपरिणामि, स इंद नट्ठा स सेवक नईसामि ॥ ९७ ॥ इत्युक्त्वाभ्यंतरां बाह्य-स्थितिं साह ततः पुनः । शिवं मेऽस्ति जिनध्याना-त्कांतीतोऽत्राहमाययौ ॥ ९८ ॥ याता कुशस्थले चैत-दथापूर्वं गवेपय । पटे प्रसारितेऽपूर्वं, स्त्रीरूपं दर्शितं तया ॥ ९९ ॥ दृष्ट्वा तद्रूपमेकाग्र-दृष्ट्या तां कुमरो जगौ । योगिन्येतत्स्त्रियाः कस्या, लिखितं रूपमद्भुतं ॥ ३०० ॥ साऽवोचन्नरसिंहस्य, पुत्र्याः कांतीपुरीपतेः । इदं प्रियंगुमंजर्याः, कन्याया रूपमत्र हि ॥ १ ॥ श्रीचंद्रे सानुरक्तास्ति, गुणंधरमुखात् श्रुते । यास्यामि ( तथामि ) तत्पुरे तस्य, पट्टप्राप्त्यै कनीगिरा ॥ २ ॥ ततः स तत्पटादाने, तत्पार्श्वाद्बह्वपि व्यधात् । परं तयार्पितो नैव, स पटः सा ययौ ततः ॥ ३ ॥

इतः कामज्वरी सोऽभू-त्क्षीणदेहः शनैः शनैः । तन्मित्रैर्ज्ञापितो राजा, कांतीपतिसुताध्येयं ॥ ४ ॥ तत्पित्रामार्गि सा कन्या, परं सोऽदान्न तस्य तां । ततः स जगदे पित्रा, मा त्वं वत्साधृतिं कुरु ॥ ५ ॥ रूपात्तदधिका भूप-पुत्री ते भाविनी प्रिया । तथापि न रतिं लेभे, तत्रस्थः स मनागपि ॥ ६ ॥ सोऽहं मदनपालोऽत्र, पित्रादेशच्छन्न आगतः । आकृष्टो रूपत-

स्तस्याः, केतकीगंधतोऽलिवत् ॥ ७ ॥ अत्रागत्य स्थितोऽहं प्रा-ग्नृपारामिकसद्मनि । कुमारीधाम्नि गच्छंती-मवदं मालिकप्रियां ॥ ८ ॥ भद्रे! संदेशकं क्ष्माप-पुत्र्या मे कथयेरमुं । यत्पटे लिखितं रूपं, तव हेमपुरेशसूः ॥९॥ वीक्ष्य तन्मोहबद्धोऽत्रा-ययौ तं पश्य तत्कलाः । विलोकयैकवारं च, पश्चादिदं हि तत्क्रियाः ॥ १० ॥ युग्मं ॥ इत्यादि तत्र तत्कथ्यं ( वक्तव्यं ), मम रूपकलादिकं । यथा मय्यनुरागं सा, धत्तेऽत्यंतमसुप्रदे ॥ ११ ॥ इत्युक्त्वा भूरि दत्त्वा स्वं, प्रेषिता तेन सा ततः । तत्र गत्वा तया तस्या-स्तत्सर्वं ज्ञापितं तथा ॥ १२ ॥ बभाषे स्वामिनीदक्षो, विदग्धः कोऽपि क्वापि न । श्रुत्वेति सा विमृश्याह, विलोक्यतेऽस्य दक्षता ॥ १३ ॥ लात्वा पुष्पोच्चयाद्रक्तं, कणवीरसुमं ततः । तया कर्णद्वये धृत्वा, दृष्टं प्रोज्झ्य च दूरतः ॥१४॥ शतपत्रं ततो लात्वा, कृत्वा कुंकुमरागभृत् । धृत्वा च कर्णयोर्दृष्ट्या, विलोक्य स्थापितं हृदि ॥ १५ ॥ जजल्पे सा तया मुग्धे!, गच्छ तद्धि म(द्वीभृ)दंतिकात् । एतत्प्रत्युत्तरं लाहि, ज्ञास्यतेऽतःपरं पुनः ॥१६॥ मारामिकवशा गेहे, ज्ञापयामास मेऽखिलं । नाहं तदुत्तरं वच्मि, भावं वेद्मि न तत्कृतेः ॥ १७ ॥ किं कुर्वेऽथ गच्छामि ?, तच्चिंताविवशोऽभवं । कामयक्षालयेऽस्मिन् मा, नित्यमेति नृपात्मजा ॥ १८ ॥ अत्रापि तिष्ठतस्तस्या, मेलोऽभून्नैकदापि मे । प्रतिहारिण्य एतस्या, हत्वा निष्कासयंति यत् ॥ १९ ॥ कस्याग्रे कथ्यते हृत-चेन दुःख्यस्मि सुंदर! । निशम्य तद्वचस्तस्मिन्, श्रीचंद्रोऽभूत्कृपापरः ॥ २० ॥ दध्यौ चात्रागमो हि प्रा-ग्गुणंधरगुरोरभूत् । अहो चास्या विदग्धत्वं, पुष्पभावः ( च ) प्रदर्शितः ( ता ) ॥ २१ ॥ रक्तपुष्पवदेष त्वं, स्वयं रक्तः श्रुतौ श्रुतः । न पश्यामि न रक्षामी-त्यत्यजत्सेति दर्शितं ॥ २२ ॥ यत्पुनः शतपत्रं च, तद्वच्छुभ्रः मसौरभः । विरक्तोऽपि मया रक्ती-कृतः कोऽपि श्रुतौ धृतः ॥ २३ ॥ स सदा मे हृदि स्थाते-त्यस्ति ( स्येतद् ) ज्ञापितमेतया ।

अप्ययं पंडितंमन्यो, न च वेत्त्येतदित्यपि ॥ २४ ॥ परं सा दीयते बुद्धि-र्यथास्य स्यान्मन सुखं । ततः प्राह कुमारस्तं, भद्राथ किं करिष्यसि ? ॥२५॥ कदापि युवयोर्जज्ञे, दृष्टिमेलापको मिथः । मोऽजदत्सा ( वक् न मा ) मयादर्शि, न दृष्टश्च तयाप्यह ॥ २६ ॥ अथ मित्र ! भवित्री मे, कार्यसिद्धिरियं कथं ? । परोपकारसारोऽसि, तन्मे बुद्धिं प्रकाशय ॥ २७ ॥ ततः शखध्वनिं श्रुत्वा, सात्रे(त्रे)ति चलितावतः ( ततः ) । तावुद्यानवने गत्वा, तद्दत्तलोचनौ स्थितौ ॥ २८ ॥ मानिशत्काम-वेश्मांतः, सखीभिश्च सह स्थिता । मृदंगवेणुवीणादि-नृत्यगीतपरायणा ॥ २९ ॥ ततश्च तत्र नार्येका, धूलिधूसरितांबरा । चैत्यांतः प्रविवेशाशु, नर्तनादि स्थितं तदा ॥ ३० ॥ क्षणांतरेण तत्राभू-द्रोदनं हाहहेति च । रुदंत्येका सखी चैत्या-द्वेगादागाश्च तद्वने ॥ ३१ ॥ तेनोचे माद्भुतं सुभ्रु, गानादौ रुदितं कुतः । कथयैतत्ततः साह, मम वेलाधुनास्ति न ॥ ३२ ॥ ज्वलत्येकस्य कूर्चे य-स्करोत्यन्यश्च दीपकं । सत्या(त्यी)कृतमुपाख्यान-मितोऽन्या सख्युवाच तां ॥ ३२ ॥ भगिन्यागच्छ वेगेन, कदलीदलमानय । स्वामिनी मूर्च्छिता वाढं, तस्यै समर्प्य तत्ततः ॥ ३३ ॥ सावोचत्तानता(थ) प्राता, चै(वे)षा नः स्वामिनी पुरा । स्वां सखीं योगिनीवेषा-त्प्राहिणोच्च कुशस्थले ॥ ३४ ॥ श्रीचंद्रस्य स्वरागादि-ज्ञप्त्यर्थं तत्पटादिभिः । तत्र गत्वाधुनैता सा, परमस्याः स नामिलत् ॥ ३५ ॥ तत्र यद्यद्यथा जातं, तदनोक्तं तया स च । श्रेष्ठिसूनुरिति ज्ञात्वा, धृतोऽप्यस्याः सुभाग्यतः ॥ ३६ ॥ ज्ञाति(नि)भ्यो राजसूर्यज्ञे, पितृभ्यां चोपलक्षितः । तेन हृष्टा पर कार्य-सिद्धिर्न काप्यभूत्तथा ॥ ३७ ॥ तद्दुःखात्स्वामिनी सात्र, विललाप मुमूर्छ च । न ज्ञायतेऽथ किं भावी-त्युक्त्वा सागात्सखीमम ॥ ३८ ॥ तासां पुरांतर प्राप्ते-ष्वथ सूर्यवतीतनुः । तद्विवाहमनिच्छन् स-न्नुवाच मदनं प्रति ॥ ३९ ॥

आतर्मुक्त्वा निजं राज्यं, भ्रमसीतस्ततो मुधा। विनैनां न सरत्येव, तदा शृण्वत्र मे मतिं ॥ ४० ॥ धनैस्ते कार्यसिद्धिः स्या-द्विफलं तद्विनाखिलं। कथं स्याचेत्तदाहामा-वुपायोऽस्त्यत्र कैतवात् ॥ ४१ ॥ स कुमारस्ततः स्थाना-द्ययौ देशांतरे क्वचित्। यदुक्तमनया तस्य, मेलेनात्र प्रपंच्यते ॥ ४२ ॥ त्वं कुमारो भवाहं ते, भवामि परिचारकः। पूर्मध्ये गम्यते सद्म, लात्वा द्रव्येण कस्यचित् ॥ ४३ ॥ तत्र त्वमर्थिनां दद्या, गुप्तदानं विशेषतः। तद्दानाद्याच-केभ्यश्च, प्रसिद्धिर्भाविनी स्वयं ॥ ४४ ॥ ततोऽहं ते तथा कर्त्ता, यथा ज्ञास्यत्ययं नृपः। श्रीचंद्रः स्वपुराच्छन्नो-ऽत्रायातोऽस्तीत्यतःपरं ॥ ४५ ॥ भाग्यमेव तव ज्ञेयं, कर्मशक्तिर्गरीयसी। श्रुत्वा तद् हृष्टचेतस्को, मदनोऽभूत्तरां तदा ॥४६॥ युग्मं ॥ तथा कृतं ततस्ताभ्या-मूर्ध्वभूमौ स्थितश्च सः। कुमारो द्वारसंस्थः सं-श्चक्रे सर्वं यथोचितं ॥ ४७ ॥ ततस्तमागतं ज्ञात्वा, पुरे हृष्टा नृपादयः। राज्ञा तैर्मंत्रिभिस्तत्र, यातायातं विधापितं ॥ ४८ ॥ योगीव भव मौनी त्व-मित्युक्त्या तेन तत्पुरं। रंजितं निजचातुर्याद्, भूपः कन्या च मंत्रिणः ॥ ४९ ॥ नृपेण स तदा कष्टा-त्कन्योद्वाहममीमनत्। कुमारः प्राह भो मंत्रिन्!, लग्ने तन्मा विलंब्यतां ॥५०॥ क्ष्माभृद्गोधूलिकं लग्नं, द्वितीयेऽह्न्येव स ललौ। स्थानद्वये विवाहस्य, सामग्रीं तामचीकरत् ॥५१॥ श्रीचंद्रोऽत्रागतोऽस्त्येव, लग्नपृच्छांतरप्यदः। हर्षोत्कर्षाज्जनैः सर्वैः, सद्यः शृंगारिता पुरी ॥५२॥

इतो लग्नदिने वाता-यनस्थो मदनोऽशृणोत्। तन्मार्गे जलहारिण्यो, मिथो जल्पन्ति यत्स्त्रियः ॥ ५३ ॥ कैव ते शीघ्रता सुभ्रु, साह वेत्सि न किं सखि। यच्च प्रियंगुमंजर्या-धीतं गुणंधराद्गुरोः ॥ ५४ ॥ पद्मिन्यादिस्त्रियां भेद-लक्षणादि श्रुतं परं (श्रुतं)। श्रीचंद्रो वेत्ति तच्छास्त्रं, तेनैवाध्यापितः पुरा ॥५५॥ युग्मं ॥ तदद्य प्रागियं गोष्ठीं, तां तत्सार्धं विधास्यति। पश्चात्प-

रिणयो भावी, तत्र भाव्यतिकौतुकं ॥ ५६ ॥ तेनास्ति त्वरिता पश्चा-द्गंतव्यं राजसद्मनि । मदनस्तन्निशम्योच्चैः, सचिंतोऽभूत्तमाह च ॥ ५७ ॥ मित्रात्र स्त्रीवचस्त्वेवं, तेनाथ किं करिष्यते ? । स आह वेद्म्यहं किंचि-त्स्त्रीणां भेदचतुष्टयं ॥ ५८ ॥ लिखित्वा भण वेगेन, तत्कार्यं भाव्यतोऽपि ते । अन्यथैतत्समारब्धं, वृथा भाव्यत्र सोऽब्रवत् ॥ ५९ ॥ लिखने भणने चास्य, का वेलास्त्यधुना सखे ! । जाते प्रदीपने कूप-खननं यज्जलाप्तये ॥६०॥ बहुरप्युद्यमस्तेऽभू-त्परं मेऽत्रास्त्यभाग्यता ॥ त्वया या(त्वी)दृग्महाक्षेपो-ऽकारि तेनेति मे मतिः ॥ ६१ ॥ मत्तस्त्वं वयसा किंचि-ल्लघीयान् रूपतः परं । मत्तुल्योऽसि विभूषाभी, रूपाधिकत्वमाप्स्यसि ॥६२॥ ततो गृहाण वेषं मे, त्वद्वेषं च ममार्पय। मत्स्थाने त्वामिमां पाणौ, विधाय देहि सन्मते ! ॥६३॥ इयदग्रेऽपि कर्तासि, मदर्थं त्वथ कुर्विदं । परोपकारिभिः क्वापि, याञ्चाभंगः क्रियेत किं (न) ॥६४॥ ततो दध्यौ कुमारो यद्दोपमर्थी न पश्यति । तमुवाच च यद्येवं, रुचिस्तव तथास्तु तत् ॥ ६५ ॥ तदा वेषं परावृत्त्य, स जज्ञे द्वारपालकः । श्रीचंद्रस्तु स्ववेषेण, शुशुभे नान्यवेषतः ॥६६॥ इतश्चाखिलसामग्र्या, तत्रागत्य विधेः कृतं । नृपांगनादिभिः स्त्रीभि-र्वर्णकोद्वर्णकादिकं ॥६७॥ तदनु स्वर्णरत्नादि-कृतोत्तंसेऽद्भुते सति। स्वकुंडलादिभिर्दीप्रः, सोऽशुभन्नाममुद्रया ॥६८॥ गजारूढः सितच्छत्र-चामरश्रीकरीश्रितः । वादित्रभट्टपूलोक-सामंतादिपुरस्सरं ॥ ६९ ॥ बहूत्सवैः पुरीमध्ये, भूत्वा प्राप्तो नृपौकसि।स यावत्तावता भट्ट-वारकेणोपलक्षितः ॥ ७० ॥ युग्मं ॥ पठितं च-तइया विवाहसमए, धणवइपमुहाण अट्ठकन्नाणं । सिरिचंदो सिट्ठिघरे, जो दिट्ठो सो इमो जयउ ॥ ७१ ॥ ततस्तस्मै ददुर्दानं, नृपाद्याः पारितोपिकं । कुमारं च नृपः स्वांके, लात्वा सिंहासने स्थितः ॥ ७२ ॥ पादपीठे च तां पुत्रीं, तस्य रूपं निरूपयन् । कुंडले नाममुद्रां च, मिथो गोष्ठीमकारयत् ॥ ७३ ॥ युग्मं ॥

तथाहि—तदा साक्षिषु सर्वेषु, प्रोचे प्रियंगुमंजरी। कुमारेंद्र! वद स्त्रीणां, भेदांस्तल्लक्षणादि च ॥७४॥ श्रीचंद्रोऽप्यवदद्-भद्रे, स्त्रीणां भेदचतुष्टयं। पद्मिनी हस्तिनी चैव, चित्रिणी शंखिनी तथा॥७५॥ एकैकस्यैषु चत्वारो, भेदाः सर्वे च षोडश। नामानि प्राक्तनान्येव, ज्ञेयान्येषां यथाक्रमं ॥७६॥ आसां गंधः—पद्मिनी पद्मगंधा च, मदगंधा च हस्तिनी। चित्रिणी चित्रगंधा च, मत्स्यगंधा च शंखिनी ॥७७॥ अंगशोभा—पद्मिनी मुखशोभा च, गतिशोभा च हस्तिनी। चित्रिणी ऊरु(र)शोभा च, कुचशोभा च शंखिनी ॥७८॥ गतिः—पद्मिनी हंसवद्याति, हस्तिनी गजगामिनी। चित्रिणी मृगवद्याति। शंखिनी खरगामिनी ॥७९॥ दंताः—पद्मिनी दंतकोमल्या, स्थूलदंता च हस्तिनी। चित्रिणी सूक्ष्मदंता च, दीर्घदंता च शंखिनी ॥ ८० ॥ केशाः—पद्मिनी श्लक्ष्ण-केशा च, स्थूलकेशा च हस्तिनी। चित्रिणी सूक्ष्मकेशा च, खरकेशा च शंखिनी ॥८१॥ नेत्रं—पद्मिनी स्थूलनेत्रा च, हीननेत्रा च हस्तिनी। चित्रिणी तीक्ष्णनेत्रा च, पीतनेत्रा च शंखिनी ॥८२॥ स्तनः—पद्मिनी स्तनविस्तीर्णा, स्तनहीना च हस्तिनी। चित्रिणी स्तन ऊर्ध्वा च, स्तनदीर्घा च शंखिनी ॥८३॥ निद्रा—पद्मिनी निद्रया हीना, स्थूलनिद्रा च हस्तिनी। चित्रिणी कृश-निद्रा च, दीर्घनिद्रा च शंखिनी ॥८४॥ आहारः—पद्मिनी स्वल्पस्वाहारा, बह्वाहारा च हस्तिनी। चित्रिणी संस्कृताहारा, दीर्घाहारा च शंखिनी ॥८५॥ कामविकारः—पद्मिनी स्वल्पकामा च, घनकामा च हस्तिनी। चित्रिणी चित्रकामा च, दीर्घकामा च शंखिनी ॥८६॥ स्वेदः—पद्मिनी स्वल्पस्वेदा स्या—दतिस्वेदा च हस्तिनी। चित्रिणी मध्यस्वेदा च, दीर्घस्वेदा च शंखिनी ॥८७॥ क्रोधः—पद्मिनी क्रोधनिर्मुक्ता, त्वति(स्वल्प)क्रोधा च हस्तिनी। चित्रिणी स्वल्पक्रोधा च (क्रोधवैचित्र्या), दीर्घक्रोधा च शंखिनी ॥८८॥ प्रियः—पद्मिनी प्रियपुष्पौघा, हस्तिनी मौक्तिकप्रिया। चित्रिणी प्रियभूषा च, शंखिनी कलहप्रिया ॥८९॥ हस्तलक्षणं—

पद्मिनी पद्महस्ता च, शंखहस्ता च हस्तिनी । चित्रिणी मकरहस्ता, मत्स्यहस्ता च शंखिनी ॥ ९० ॥ इत्यादि-॥

शृणु बालेऽथ नारीणां, लक्षणैश्च शुभाशुभैः। सामान्यतोऽत्र भेदौ द्वौ, शुभैका ह्यशुभापरा ॥९१॥ पूर्णचंद्रमुखी कन्या, बालसूर्यसमप्रभा। विशालवक्त्रा रक्तौष्ठी, सा कन्या प्रोच्यते शुभा ॥ ९२ ॥ अंकुशं कुंडलं चक्रं, यस्याः पाणितले भवेत् । पुत्रं प्रसूयते नारी, नरेंद्रं लभते पतिं ॥ ९३ ॥ यस्याः पाणितले रेखा, प्राकारं तोरणं तथा । अपि दासकुले जाता, राजपत्नी भविष्यति ॥ ९४ ॥ मंदिरं पद्मचक्रं वा, पूर्णकुंभं तु तोरणं । यस्याः करतले छत्रं, राजपत्नीत्वमाप्नुयात् ॥ ९५ ॥ यस्याः करतले रेखा, मायूरं छत्रमीक्ष्यते। राजपत्नीत्वमाप्नोति, पुत्रैश्च सह वर्धते ॥ ९६ ॥ मृद्वंगी च मृगप्रेक्षी, मृगग्रीवा मृगोदरा । हंसीतुल्यगतिर्नारी, राजपत्नी भविष्यति ॥ ९७ ॥ यस्याश्च कुंचिताः केशा, मुखं च परिमंडलं । नाभिश्च दक्षिणावर्ता, सा नारी प्रीतिभाजनं ॥ ९८ ॥ दीर्घांगुलीयुता नारी, दीर्घकेशा च या भवेत् । दीर्घमायुरवाप्नोति, धनधान्यं च वर्धते ॥ ९९ ॥ कृष्णश्यामा च या नारी, गौरी चंपकसुप्रभा । स्निग्धांगी स्निग्धवदनी, सा नारी लभते सुखं ॥ १००॥-

नीलोत्पलदला नारी, वर्णपिंगसमप्रभा । समस्तं सर्वसौवर्ण-मलंकारं परीप्यते ॥ १ ॥ यस्याश्च हस्यमानाया, ललाटे स्वस्तिको भवेत् । वाहनानां सहस्राणा-माधिपत्यं विनिर्दिशेत् ॥ २ ॥ वामपार्श्वे गले चाथ, स्तनयोर्लांछनं यदि । मसकं तिलकं चापि, प्रथमं जनयेत्सुतं ॥ ३ ॥ अल्पस्वेदा स्वल्परोमा, निद्राभोजनदुर्बला । गात्रेभ्योऽपि न रोमाणि, स्त्रीणां लक्षणमुत्तमं ॥ ४ ॥ ऊरौ घनौ करिकरप्रतिमावरोमा-वश्वत्थपत्रसदृशं विपुलं च गुह्यं । श्रोणीललाटमुरुकूर्मसमुन्नतं च, गूढो मणिश्च विपुलां श्रियमादधाति ॥ ५ ॥ यस्याश्च रोमशे जंघे, रोमशौ च पयोधरौ । ओष्ठोपरि च रोमाणि, शीघ्रं वैधव्य-

मादिशेत् ॥ ६ ॥ स्थूलजंघा च या नारी, चतुस्रपादलक्षणा । दासी वा विधवा चापि, दारिद्र्यदुःखभागिनी ॥ ७ ॥ पृष्ठावर्ता पतिं हंति, हृदावर्ता पतिव्रता । कट्यावर्ता च स्वच्छंदा, त्रिविधा सा प्रकीर्तिता ॥ ८ ॥ यस्यास्त्रीणि प्रलंबानि, ललाटमुदरं भगं । त्रीण्येव हंति सा नारी, श्वशुरं देवरं वरं ॥ ९ ॥ कृष्णजिह्वा च लंबोष्ठी, पिंगाक्षी घर्घरस्वरा । अतिगौरा त्वतिकृष्णा, पडेता वर्जिताः स्त्रियः ॥ १० ॥ यस्या अ(श्र)हस्यमानाया, गंडे भवति कूपिका । न सा भर्तृगृहे तिष्ठे-त्स्वच्छंदा कामचारिणी ॥ ११ ॥ पादप्रदेशिनी चैव, त्वंगुष्ठाग्रं व्यतिक्रमेत् । न सा भव्या मुनेर्वाक्यैः, पादे मध्यमिका मता ॥ १२ ॥ पादे मध्यमिका चैव, त्वं(अं)गुलीमतिवर्तते । दुःशीला दुर्भगा ज्ञेया, यासां ताः परिवर्जयेत् ॥ १३ ॥ पादेऽप्यनामिका चैव, भूमौ न स्पृशते यदि । कुमारी रमते जार-मुन्नता न भवेद्यदि ॥ १४ ॥ पादे कनिष्ठिका चैव, भूमौ न स्पृशते यदि । कुमारी रमते जारं, यौवने नात्र संशयः ॥ १५ ॥ उद्भृ(द्ध)ता कपिला यस्या, रोमराजी निरंतरा । अपि राजकुले जाता, दासत्वमुपजायते ॥ १६ ॥ यथा मुखं तथा गुह्यं, यथा चक्षुस्तथा कटिः । यथा हस्तौ तथा पादौ, बाहुजंघे तथैव च ॥१७॥ काकस्वरा काकजंघा, पृष्ठिरोमा पृहद्वती । दशमासे पतिं हंति, सा कन्या नात्र संशयः ॥ १८ ॥ विकटांगुलिर्या नारी, छिद्रपादा च या भवेत् । सा स्त्री वैरकारिणी स्या-त्सामुद्रस्य वचो यथा ॥ १९ ॥ यस्या गमनमात्रेण, भूमिकंपः प्रजायते । सा स्त्री वैरकारिणी स्या ( सा वैर० )-त्सामुद्रस्य वचो यथा ॥२०॥ अति दीर्घो भृशं ह्रस्व-श्चातिस्थूलो भृशं कृशः । अतिदीर्घो भृशं कृष्णः, पडेते दुर्भगा भगाः ॥ २१ ॥ विवादशीलासनमर्दधारिणीं, परानुकूलां परपाकपाकिनीं । आक्रोशिनीं

१ 'सा वैरकारिणी ज्ञेया' इति प्रतौ पाठः ।

शून्यगृहोपवेशिनीं, त्यजस्व भार्यां दशपुत्रपुत्रिणीं ॥ २२ ॥ पिंगाक्षी कूपगंडा-खरपरुषरवा- स्थूलजंघोर्ध्वकेशी, लंबोष्ठी-दीर्घवक्त्रा प्रविरलदशना श्यामताल्वोष्ठजिह्वा । शुष्कांगी संहितभ्रूर्विषमकुचयुगा नासिकाक्रांतवक्त्रा, सा कन्या वर्जनीया सुखसुतरहिता भ्रष्टशीला च नारी ॥ २३ ॥ कूर्मपृष्ठा गजस्कंधा, पद्मपत्रा सुसंवृता । अनुष्णांबर(अत्युष्णा वर)सद्वृत्ता, षडेते सुभगा भगाः ॥ २४ ॥ पीनोरू पीनगंडा लघुसमदशना दक्षिणावर्तनाभिः, स्निग्धांगी चारुसुभ्रुः पृथुकटिजघना सुस्वरा चारुकेशी । कूर्मप्रष्ठा सतुष्णा द्विरदसमपृथुस्कंधभागा सुवृत्ता, सा कन्या पद्मनेत्रा-सुभगगुणयुता नित्यमुद्वाहयोग्या ॥ २५ ॥ इत्यादि ॥

एवं तया समं गोष्ठी, कुमारेण चिरं कृता। ततः क्षिप्ता च तत्कंठे, वरमाला तया मुदा ॥ २६ ॥ मंडपद्वारसंस्थस्य, तस्य पोंखणकादिके । विभौ जाते ततः सोऽपि, मातृगेहे समाययौ ॥ २७ ॥ तत्रत्यसकलाचारान्, विधाय सवधूवरः । अभूदार्द्र-सुवंशोध-चतुःकलसमध्यगः ॥ २८ ॥ परितः पावकं तत्र, जामातुर्भ्रमतो नृपः । चतुर्थे मंगले प्रादा-च्चतुरंगदलादिकं ॥२९॥ दत्त्वा तदोचितं राज्ञा, स प्रैषि समहं ततः । समं प्रियंगुमंजर्या, वर्यवाहन(र्यानिकप)संस्थितः ॥ ३० ॥ चलन्नभिमुखं स्वीय-मंदिराय प्रतापजः । पौराणां पथि शुश्राव, स्थाने स्थानेऽद्भुतां गिरं ॥३१॥ रूपविद्याकुलप्रज्ञा-मुख्यैर्गुणैरनुत्तरः । कांतिमानेक(ष) एषा च, भुवि रूपादनुत्तरा ॥ ३२ ॥ यः शचीशक्रयोर्योगो, यथाभूद्रतिकामयोः । रोहिणीचंद्रयोर्यश्च, रत्नादेव्यर्कयोश्च यः ॥ ३३ ॥ तद्वदनयोर्योग-मकुर्वत्सु(गं कुर्वन् वै स)विधिर्विधिः । इति पौरगिरं शृण्वन्, श्रीचंद्रः प्रापदालयं ॥ ३४ ॥ समंगलं गतिश्याम, गर्वे स्थाने प्रसृत्य च । दानं दत्त्वा यथायोगं, वामागारं जगाम सा(सः) ॥ ३५ ॥ पल्यंकसंगिनः पत्युः, प्रिया

प्रियंगुमंजरी । निपसाद संनिधाने, सखीयुग्विहसन्मुखी ॥ ३६ ॥ काव्यगोष्ठ्यां मिथः सत्यां, तदेतो मदनेन हि। भ्रूसंज्ञया संज्ञितोऽसौ, स्मर मित्र(सावेहि याहि)निजं वचः ॥ ३७ ॥ सोऽपि कृत्वा वपुश्चिता–मिपं यावद् गृहात्ततः । निस्ससार प्रिया ताव–दासांधुरत्नु चागता(नुगाऽजनि) ॥ ३८ ॥ श्रीचंद्रस्तामुवाचैवं, यूयमत्रैव तिष्ठत । वर्चोगेहेऽत्र यास्यामि, जलं तत्रास्ति यद्यपि ॥३९॥ ऊर्ध्वभूमेरधः प्राप्य, लब्धं श्वशुरवर्गतः । तदा मदनपालस्य, तेन तत्सर्वमर्पितं ॥४०॥ निजं कुंडलमुद्रादि, श्वश्रूदत्तां च मुद्रिकां । तत्पार्श्वादात्मवेपं चा–दाय प्रोचे स तं प्रति ॥४१॥ मदन! त्वन्मनस्तोपो, जज्ञेऽथाहं प्रयाम्यतः। सोऽवसर्वं त्वया भव्यं, चक्रेऽथ ते यथा रुचिः॥४२॥ हृष्टोऽथ मदनस्तद्व–त्कृत्वा नेत्रांजनादि तत्। तदीयवेपमाधाय, ततो वासगृहे ययौ ॥४३॥ आगच्छंतं तथा तत्रो–पविशंतं तथाविधं । न्युग्मुखं तं विरुग्देहं, स्तब्धं (ब्ध) कंप्रांह्रिपाणिकं ॥४४॥ दृष्ट्वा तद्ब–हिरागत्य, सखीः स्वीया जजल्प सा । कोऽयमत्रागतः किं नु, भर्तृवेपधरो नरः ॥ ४५ ॥ युग्मं ॥ सख्यः प्रोचुः शुभे किं त्वं, व्यामूढासि यदत्र कः ? । तं विनान्यः पुमानेति, वेपभूपादि पश्य तत् ॥४६॥ साह सख्यो! न मन्यध्वं, चेत्तर्हि यात पृच्छत । प्राग्वार्तां प्रेमवाक्यं त–त्कथापयत पश्यत ॥ ४७ ॥ ताभिस्तथा कृते ज्ञातं, प्रागुक्तव्यतिजल्पनात् । श्रीचंद्रोऽयं न किं त्वेप, कोऽप्यन्योऽत्रागमत्वरः ॥ ४८ ॥ ताभिरुक्तं सखैतस्य, द्वारस्थोऽस्ति स पृच्छ्यते । नादर्शि तत्र स क्वापि, ततः सा नृपनंदिनी ॥ ४९ ॥ तत्रैकां स्वसखीं मुक्त्वा, मातुः पार्श्वे ययौ तदा । माता प्राह स्वयं पुत्रि! किमागा अधुनेदृशी ॥५०॥ कुशलं विद्यते ताद्द–क्सा(तावत्सा)योचद्दुःखपूर्णहृत्। तत्र जातं यथादृष्टं, तत् श्रुत्वा सा (त्वांबा) नृपं जगौ ॥५१॥ पुत्री सख्यश्च तन्नत्यं, किंचिद्वदंत्यनीदृशं । यो मत्पाणिगृहीताभू–त्तत्स्थानेऽन्योऽस्ति कोऽपि हि ॥ ५२ ॥ ततो नृपः किमित्येत–दिति

न्याकुलितोऽभवत् । प्रभाते च तमाहूय, ददर्श सूक्ष्मया दृशा ॥ ५३ ॥ सोऽयं नेति च निर्णीय, स्वतः परोक्तितस्तथा । सा मुद्रा कुंडले ते च, क्व ते वत्सेत्यभापत ? ॥५४॥ तेनान्यदर्शिते ( नापि दर्शिता ) राज्ञा-चिंत्यहो घटतेऽत्र किं ? कारापिता च सा गोष्ठी, पुनस्तत्र तयोर्मिथः ॥ ५५ ॥ विचारं वेत्ति न स्त्रीणां, पद्मिन्यादिचतसृणां । स न वक्ति तदा राज्ञा, पृष्टः कस्त्वं वदासि रे ! ॥ ५६ ॥ तथापि न वदेत्सत्यं, स यावत्तावता नृपः । रोपात्कंबाभिरार्द्राभि-स्तच्छिक्षां दातुमिष्टवान् ॥ ५७ ॥ ततश्च तेन भीतेन, प्रोक्तं सर्वं यथास्थितं। अहं मदनपालोऽस्मि, वटो(बंधो)र्बुद्धिरियं मम ॥५८॥ आमूलतश्चरित्रं स्वं, तावद्यावदसौ बटुः । मद्वाक्यादात्समद्वेपः, कन्यां यः (यः) परिणीतवान् ॥ ५९ ॥ स निर्व्याजोपकारस्य, कर्ता सर्वं प्रदाय मे । न ज्ञायते स्थितोऽत्रास्ति, गतो वान्यत्र कुत्रचित् ॥६०॥ [श्रीचंद्रो न हिं सोऽप्यत्र, नाप्यहं वेति तद्वचः। श्रुत्वा प्रोचुर्नृपः पौरा, बटुः श्रीचंद्र एव च ॥६१॥ प्राह तारकभट्टोऽपि, स श्रीचंद्रो न संशयः। ततस्तैस्तत्र चालोकि, परं नाप्तः स कुत्रचित् ॥६२॥] ततोऽलं विलपंतीं तां, भूपोऽवक्पुत्रि ! मा रुदः । मिलिष्यतीह ते भर्ता, परं त्वं लक्षयिष्यसि ॥६३॥ साह योऽत्र मया दृष्टो, वामांगस्फुरणादिना । परीक्ष्य च वृतो भर्ता-भिजानाम्येव तं स्वयं ॥ ६४ ॥ इयं कनीनिका मुद्रा, तेन दत्तास्ति मे हि तत्। तावदत्रार्चयिष्ये तां, यावत्स्याद्भर्तृसंगमः ॥ ६५ ॥ इतो मदनपार्श्वात्त-त्सर्वमाभरणादिकं । गजादिकं च सर्वस्वं (संभाल्य), नृपोक्त्या सचिवा ललुः ॥ ६६ ॥ राज्ञीदत्तात्र मुद्रा क्व, तत्पृष्टः स जगौ तदा । श्वश्रूदत्तां बटुर्मुद्रां, लातवांश्च (वान्न) ममांतिकात् (के) ॥ ६७ ॥ अहो परोपकारित्व-मस्य धैर्यमहो मतिः । अहो अत्र च कन्याया, भाग्यमेवेह पश्यत ॥ ६८ ॥ इत्यभूत-

१ इदं श्लोकद्वयं प्रतौ नास्ति ।

स्तुतिं कुर्व-न्नृपः पौरजनोऽपि च । स जीवन्मदनो मुक्तो, राज्ञा दत्त्वा कियद्धनं ॥ ६९ ॥ भूभुजा प्रेषिता भृत्या-स्तां पुरीमभितस्तदा । तच्छुद्ध्यर्थं तदप्राप्ते-स्ते विलक्षा इवाययुः ॥ ७० ॥ मंत्रिणः प्रेषयिष्यंते, सुदिनेऽथ कुशस्थले । श्रीचंद्रानयनार्थं त-द्विमृश्यास्थात्तदा नृपः ॥ ७१ ॥

इतः क्षत्रियवेषेण, तत्पुरादग्रतश्चलन् । श्रीचंद्रश्चंद्रवक्त्रास्यः, प्राप कांचिन्महाटवीं ॥ ७२ ॥ तस्यां च सोऽन्यदा गच्छं-स्तृषया बाधितो भृशं । यावत्स्थित्वोच्चदेशे स, जलस्थानं गवेषयन् ॥७३॥ दिश्येकस्यां तदा ताव-त्स किंचिद् द्युतिमंडलं । विरुक्कृतझात्कार-मद्राक्षीद् दूरसंस्थितं ॥ ७४ ॥ युग्मं ॥ किमत्रास्तीति तत्स्थाने, गतः शस्त्रं च दृष्टवान् । चंद्रहासमसिं त्वा, ललौ हस्ते स भूपभूः ॥ ७५ ॥ कस्येदं ज्ञायते नैव, भूचरस्य खगस्य वा । तत्स्वामी सर्वतस्तत्रा-लोकि दृष्टो न तेन तु ॥७६॥ विस्मृतं कस्य वा व्योम्नि, गच्छतः कस्य चापतत् । विमृश्येति सुधीः खड्गं, जग्राह स्वस्तिहेतवे ॥ ७७ ॥ विलोकयतेऽस्य तीक्ष्णत्व-मत्रेत्येकप्रहारतः । वंशजालं स चिच्छेद, क्षणादेवाब्जनालवत् ॥ ७८ ॥ तस्मिंस्तत्र द्विजाते त-न्मध्येऽधोमुखसंस्थितं । द्विधा जातं नरं दृष्ट्वा, हाहेति स जगौ तदा ॥ ७९ ॥ अहो अज्ञानतो मौढ्या-च्चक्रेऽदः पातकं महत् । नरकेऽपि स्थितिर्न स्या-न्ममाथ माव्यहं कथं ॥ ८० ॥ इत्यात्मनिंदनं कुर्वन्, किंचित्किंचिच्च जीवतः । तस्य पाणौ कुमारोऽदा-त्तमसिं तं जगाद च ॥८१॥ सापराधं त्वमेनं मां, जहनेनासिनोत्तम ! । तेन वक्तुमशक्तेन, सोऽसिस्तस्यैव चार्पितः ॥८२॥ स हस्तसंज्ञयोक्तश्च, जलमत्रास्ति पायय । श्रीचंद्रेण तथाकृत्य(त्वा), क्षामितश्च पुनः पुनः ॥८३॥ तस्मिन् परा-

१ ' द्विधा जाते, तन्मध्येऽधोमुखं स्थितं ' इति प्रतौ पाठः ।

सुताभासे, स्थित्वा तत्र क्षणं ततः । तदुदुःखान्निर्जलाहारः, स सासिरग्रतो ययौ ॥ ८४ ॥ निशीथिन्यामतिश्रांतः, स प्रापैकं वनद्रुमं । शय्यालुस्तत्र तत्स्कंधो–परि भूरिकुशास्तरे ॥ ८५ ॥ स्थितो दध्यौ स कोऽप्यत्र, सुप्तो भाव्यध्वगः पुरा । तथाप्यालोकितो दर्भ–पुंज उत्पाट्य तेन तत् ( सन् ) ॥ ८६ ॥ युग्मं ॥ तत्र तत्कोटरं दृष्ट्वा, पिहितं काष्ठयष्टिभिः । मार्गं कृत्वा च तन्मध्ये, प्रविवेश स साहसी ॥८७॥ क्षणं विश्रम्य तन्मूले, ददर्शैकां दृषच्छिलां । तामुत्पाट्य ततोऽपश्य–त्कराभ्यां तदधः क्रमात् ॥ ८८ ॥ सोपानपद्धतीर्ज्ञात्वा, स तत्रोत्तीर्णवान् शनैः । तदग्रे विवरं तत्रा–द्राक्षीत्पातालमंदिरं ॥ ८९ ॥ रत्नप्रदीपदीप्रं त–त्सौधं दृष्ट्वा द्विभूमिकं । विलोक्य तदधः पूर्वं, तदूर्ध्वं स ययौ ततः ॥ ९० ॥ मणीभिः खचिते तत्र, मंडपे रत्नविष्टरे । उपविश्य स तत्सर्वं, सार्थीचक्रे प्रतापजः ॥ ९१ ॥ तत्रापवरकद्वार–मुद्घाटितं सुलीलया । तदंतः रत्नशय्यास्था, दृष्टैका तेन वानरी ॥ ९२ ॥ तां दृष्ट्वानीदृशं चेति, सोऽभूदाश्चर्यवांस्तदा । सापि दृष्ट्वा तथाभूतं, तं तत्रैतं तथाभवत् ॥ ९३ ॥ तल्पं विहाय सा शीघ्र–मलगत्तस्य पादयोः । तद्वस्त्रांचलमाकर्ष्य, तत्रोपावीविशच्च सः ॥९४॥ चेष्टया मानवी दृष्ट्वा, वानरी त्वमभूः कथं । इति जिज्ञासुरस्मीह, तामेवं कुमरोऽब्रवीत् ॥ ९५ ॥ ततः सा रुदती तत्र, भित्त्यालयमदर्शयत् । हस्तचालेन तस्य स्व–नेत्रे अपि पुनः पुनः ॥ ९६ ॥ तत्संज्ञया स उत्थाय, स्वकरेण तदालयात् । संशोध्य कुंपिकायुग्मं, जगृहेंऽजनसंभृतं ॥ ९७ ॥ कृष्णमेकं सितं चान्य–त्तच्चदस्ति तयोश्च सः । प्लवंगीसंज्ञया कृष्णां–जनं चिक्षेप तद्दृशोः ॥ ९८ ॥ तदंजनस्य माहात्म्या–त्सा दिव्यवेषधारिणी । कन्याऽभून्मानवी तां च, दृष्ट्वा जज्ञे स कौतुकी ॥ ९९ ॥ अभाषिष्ट च भद्रे त्वं, कासि केनेदृशी कृता ? स्थानं च किमिदं साह, हर्षलज्जान्विता तदा ॥५००॥ नाथ ! हेमपुराधीशो, मकरध्वजभूपतिः । तत्पत्न्या

मदनावल्ल्या, सुता मदनसुंदरी ॥ १ ॥ साहं मदनपालस्या-नुजा पित्रोश्च वल्लभा । क्रमाच्च यौवनं प्राप्ता, नृलक्षणावबोधिनी ॥ २ ॥ द्वात्रिंशल्लक्षणोपेतं, वरिष्ये वरमेव तं । प्रतिज्ञामिति चक्रे चा-न्यदा मे बांधवस्य च ॥ ३ ॥ प्रियंगुमंजरीरूपं, दृष्ट्वा रागोऽप्यथो(गो घनो)ऽजनि । सा तु श्रीचंद्रसंज्ञे प्रा-ग्राधावेधविधायिनि ॥ ४ ॥ रागं धत्ते नितांतं च, मदने न मनागपि । तथापि तीव्ररागत्वा (त्रतद्रागा)-द्बंधुमें निर्ययौ क्वचित् ॥ ५ ॥ त्रिभिर्विशेषकं ॥ सभायामेकदा हेम-पुरेशस्य पुरोऽपठत् । प्रतापसिंहपुत्रस्य, कीर्तनं कोऽपि याचकः ॥ ६ ॥ यथा-दानव्यजनकोद्भूतः, श्रीचंद्रस्य यशोऽनिलः । नव्यः कोऽप्यर्थिधूलीनां, पुंजं सन्मुखमानयत् ॥ ७ ॥ इत्यादि ॥ तन्निशम्य नृपेणोच्चै-स्तं सन्मान्य स्वमंत्रिभिः । साकं कोऽपि ममोद्वाह-मंत्रश्चक्रे तदा महान् ॥ ८ ॥

इतः क्रीडितुमुद्याने, साहं सखीयुतागमं । पुष्पकेलिगृहांतःस्थां, मां खगः कोऽप्यपाहरत् ॥ ९ ॥ तेनाहं तत्कलत्रादि-भीतेनास्मिन्निकेतने । स्थापितास्मि विवाहार्थं, जनेऽद्य दिनपंचकं ॥ १० ॥ स जगाद रुदंतीं मां, भद्रे किमिति रोदिषि । जानीहि रत्नचूडं मां, खगं वैताढ्यवासिनं ॥ ११ ॥ अधुना गोत्रिभूपेन, पुरं मे मणिभूषणं । गृहीतं तद्बहिर्वृत्त्या, स्थितोऽस्मि परिवारयुक् ॥ १२ ॥ एकदाहं भुवि भ्राम्यन्, प्राप्तः कुशस्थले पुरे । तत्रोद्याने रथाश्वेभ-सैन्यं दृष्टं महत्स्थितं ॥ १३ ॥ तदंतर्वस्त्रवेश्मांतः, स्वर्णपल्यंकसंस्थितां । पुष्पक्रीडां प्रकुर्वंतीं, सखीभिर्बहुभिर्वृतां ॥१४॥ यांतीं पितृगृहे भ्रात्रा, सह श्वशुरवेश्मतः । समीक्ष्य पद्मिनीमेकां, आतोऽहमतिरागवान् ॥ १५ ॥ त्रिभिर्विशेषकं ॥ लावण्यसुभगांगीं ता-मपहर्तुमना अहं । दिनमेकमदृष्टः सं-स्तदा तत्र स्थितोऽपि हि ॥ १६ ॥ परं भर्तृकृता रक्षा, शीलरक्षा च तादृशी । अस्ति तस्या यया नाभू-द्विरूपं मत्कृतं

मनाक् ॥ १७॥ ततश्च दुर्मनस्कोऽहं, रूपेण तत्समां कनीं । भुवि कामपि पश्यंस्त्वां, दृष्टवान्नीतवानिह ॥ १८॥ अतस्त्वां परिणेष्यामी-त्युक्त्वा मुक्त्वा फलादिकं । शुक्लांजनेन मामत्रे-दर्शीं कृत्वा स जग्मिवान् ॥१९॥ तृतीयेऽह्नि समेत्यात्र, स कृष्णां-जनयोगतः । मानवीकृत्य मामाह, गृह्ण सुंदरि! मोदकान् ॥२०॥ लग्नं दृ(पृ)ष्ट्वा समेतोऽस्मि, मध्याह्ने गुरुवासरे । लग्नमस्त्यत्र सामग्री-मिमां सर्वं गृहाण त्वं (सर्वां समानय) ॥ २१ ॥ अथ विद्याविधेः कार्यं, ममास्ति तेन याम्यहं । बुधरात्रावथैष्यामि, गुरोर्वा निश्चयात्प्रगे ॥ २२ ॥ मयोक्तं खचर त्वं किं, विदग्धोऽपि जडोऽभवः । यत्त्वं मत्ताततुल्योऽसि, कथं मां परिणेष्यसि ॥ २३ ॥ तदप्येष विहस्यैव, ययौ कृत्वा तथैव मां । बुधरात्रिस्तु जाताद्य, प्रातरेता च सोऽधमः ॥ २४ ॥ कस्त्वं कथं त्व-मत्रागाः, साहसैकशिरोमणिः । त्वं चेतो दुष्टपार्श्वान्मां, नयान्यत्र समुद्धर ॥ २५ ॥ दध्यौ चंद्रकलाकांतः, कल्ये यः प्राग्मया हतः । स भावी रत्नचूडाख्य-श्चेतसीति विचिंत्य तां ॥ २६ ॥ निर्गर्वः प्राह भद्रेऽहं, पथिकोऽस्मि कुशस्थलात् । धनार्जनाय दारिद्र्य-वशात्प्राप्तो विदेशितां ॥ २७ ॥ युग्मं ॥ अटव्यां वटवृक्षोर्ध्वे, सुप्तोऽभूवं मया तदा । अस्मिंश्च कोटरं वीक्ष्यां-तस्त-स्यागच्छता सता ॥ २८ ॥ पातालसदनं दृष्टं, तस्योर्ध्वे च त्वमीदृशी । अथ त्वं किं मुधा दुःखं, वहसीह कृशोदरि ॥ २८॥ युग्मं ॥ कुमार्यसि खगोद्वाह्या-द्विद्याधर्येव भाविनी । किमप्यत्राशुभं नो ते, दृश्यते तत्स्थिरा भव ॥ २९ ॥ सा प्रोचे नाथ! मद्भाग्या-त्त्वमागा इह निश्चितं । प्रतिज्ञाभूच्च पूर्णा मे, यल्लक्षणैर्महानसि ॥ ३० ॥ यतः—

पंच दीर्घं चतुर्ह्रस्वं, सूक्ष्मं तुंगं चतुश्चतुः । सप्तारुणं त्रिविस्तीर्णं, त्र्यगाधं द्वात्रिंशद्वरं ( द्व्यसितं परं ) ॥ ३१ ॥ तद्यथा-भुजनेत्रांगुलीजिह्वा-नासासु दीर्घता शुभा । पृष्ठिकंठे च पुंश्चिह्ने, जंघायां ह्रस्वता वरा ॥ ३२ ॥ दंतत्वगनखकेशेष्व,

ुःग्रस्मैः प्रशस्यते । कृश्यंसमूर्धपादेषु, चतुर्पून्नतता शुभा ॥ ३३ ॥ पाणिपादतलौ तालु-नेत्रांतरसनानखाः । ओष्ठौ च
, रक्तानि, भालस्योरस्तु सन् पृथुः ॥ ३४ ॥ नाभौ सत्त्वे स्वरेऽगाधः, कृष्णौ ताराकचौ शुभौ । द्वात्रिंशल्लक्षणैरेभि-र्युक्त-
चमसि निश्चितं ॥ ३५ ॥ मुखमर्धं ( मूर्ध्नं ) शरीरस्य, सर्वं वा मुखमुच्यते । तत्रापि नासिका श्रेष्ठा, ततश्चक्षुस्ततो द्युतिः
३६ ॥ वर्णाद्वरतरः स्नेहः, स्नेहाद्वरतरः स्वरः । स्वराद्वरतरं सत्त्वं, सर्वं सत्त्वे प्रतिष्ठितं ॥ ३७ ॥ अन्यच्च-ईदृशं करवालं न,
.य तस्य करे भवेत् । त्वं प्राणास्त्वं निवोढा मे, जीवितं च त्वमेव तत् ॥ ३८ ॥ विधयालं खगेनालं, पित्रोः संगेन किं परं ।
मेककः प्रभातं चा-गतं स्वामिन् स एष्यति ॥ ३९ ॥ तदितो गम्यते क्वापि, यथावां स न पश्यति । यद्वा तेऽस्ती(स्मी)ह
ता मे(ति), इुर्नेत्र त्वं यथारुचि ॥ ४० ॥ परमेषा च(त्र) सामग्री, लग्नं मध्यंदिनेऽद्य च । तद्गांधर्वविवाहेन, त्वं मां परिणय
मो ! ॥४१॥ मोऽत्रास्ति सुखेन त्वं, मा भीर्भीरु मनागपि । स ममेत्येकदा ताव-त्कीदृशोऽस्ति विलोक्यते ॥ ४२ ॥ परं
पाद्धेलान, स्थितौ(तैः) सा ज्ञायते कथं । साह देव गृहस्यास्य, निकटेऽस्त्यवटो महान् ॥ ४३ ॥ पार्श्वे तत्र (तत्पार्श्वेऽत्र)
वाक्षस्य, द्वारिकास्ति लघीयसी । रात्रिर्दिना दिवामध्यं, तदस्यां ज्ञायतेऽखिलं ॥ ४४ ॥ ततस्तया समं तत्र, प्रातश्चक्रे
पारणं । मध्याह्ने तत्र तल्लग्ने, विवाहः समभूत्तयोः ॥ ४५ ॥ साह स्वामिन् खगः सोऽत्र, नागात्किंचिद्धि ( गात्तत्कि वि )
यंवे । पत्न्यग्रे स यथाजातं, तद्वृत्तांतं तदा जगौ ॥ ४६ ॥ [ कुमंत्रैः पच्यते राजा, फलं कालेन पच्यते । लंघनैः
यते तापः, पापी पापेन पच्यते ॥ ४७ ॥ ] तद्दिनं तत्र स स्थित्वा, ततः पत्नीद्वितीयकः । लात्वा तत्रत्यरत्नानि, साराणि
पेकं च ते ॥ ४८ ॥ यथा तेनैव निःसृत्य, तद्द्वारं शिलया तया । दृढीकृत्याचलचस्यां, भुवि क्षिप्त्वा कियद्धनं ॥ ४९ ॥

क्रमादुल्लंघयामास, करवालोल्लसत्करः। केसरीवाटवीं तां स, ग्रामं चैकमवाप्तवान् ॥ ५० ॥ तत्र स्थित्वा सरःपाल्यां, कुमारः प्राह हे प्रिये ! । अस्मिन्नुपवनेऽद्यात्र(नोद्याने), पाकं विधाय भुज्यते ॥ ५१ ॥ साह पाकं विधास्येऽहं, सामग्रीं मेलयतामिह । आरामिकनरात्सर्वं, तच्चेनानायितं तदा ॥ ५२ ॥ स (सा) तान् घृतवरांश्चक्रे, पूपिकास्तत्र भूरिशः । इतः प्रतापस्त्र्ः स्नानं, कृत्वाभरणभूषितः ॥ ५३ ॥ सत्तीर्थाभिमुखीभूय, विदधे देववंदन । तदा तन्नाममुद्रांत-स्तस्य नाम विवेद सा ॥ ५४ ॥ युग्मं ॥ यः प्राक्कुशस्थलेशस्य, स्वनुर्वैतालिकात् श्रुतः । श्रीचंद्रो हि स एवायं, रूपस्फूर्तिकलान्वितः ॥ ५५ ॥ ततः सातितरां हृष्टा, तदौदार्यगुणादिभिः । पतिं प्राह विभो ! पूर्वं, भोजनायोपविश्यतां ॥ ५६ ॥ सोऽवक्सुभ्रु ! प्रियाहस्ता-द्भवन्मेऽद्यास्ति भोजनं । तेन कोऽप्येति साधुश्चे-द्दत्वा तस्मै च भुज्यते ॥ ५७ ॥ इतस्ततः सर.पाल्या, उपरिस्थो विलोकयन् । आकृष्टमिव तद्भाग्या-त्साधुयुग्मं ददर्श च ॥ ५८ ॥ आकार्य वत्सकच्छाख्य-साधू भक्त्या तयोर्मुदा । सिताघृतयुतं सोऽपि, घृतपूरादिकं ददौ ॥ ५९ ॥ ततो बहुजनैः सार्धं, स भुक्तवान् प्रियापि च । क्षणादनु सपत्नीकः, स साध्वोरंतिके ययौ ॥ ६० ॥ जगौ नत्वोपविष्टस्य, तस्याग्रे वत्ससाधुराट् । चित्तवित्तसुपात्राणां, योगोऽसौ भद्र ! दुर्लभः ॥ ६१ ॥ यतः-काले सुपत्तदाणं, सम्मत्तविसुद्धबोहिलाभं च । अंते समाहिमरणं, अभवजीवा न पावंति ॥ ६२ ॥ अपि च-उत्तमपत्तं साहू, मज्झिमपत्तं च सावया भणिआ । अविरयसम्मद्दिट्ठी, जहन्नपत्तं मुणेयव्वं ॥६३॥ श्रुत्वेति कुमरश्चक्रे, विज्ञप्तिं मुनिपुंगव !। मयास्यां पाप्मनाटव्यां, जघ्ने कोऽपि खगोत्तमः ॥ ६४ ॥ अज्ञानादनया रीत्या, तत्प्रायश्चित्तमर्प्यतां । शल्यवद् हृदि यत्पापं, बाधते मामहर्निशं ॥६५॥ मुनिरूचे च पुण्यात्मन् !, भव्या ते पापभीरुता । पश्चात्तापेन दानेन, शुद्धिस्तेऽभूत्तथापि-

च ॥६६॥ अर्हदादिनमस्कारान्, गुणयेर्विधिनामुना । सति योगेऽर्हतश्चैत्यं, कारयेथा यथा शृणु ॥६७॥ युग्मं ॥ उक्तं च श्रीसिद्धांते—महाआरंभयाए, महापरिग्गहिआए, कुणिमाहारेणं, पंचिंदियवहेणं, जीवा नरयाउत्ताए (नेरईअत्ताए) कम्मं पकुणंति, कह णं भंते जीवा सुहदीहाउयत्ताए कम्मं पकरंति ? गोयमा ! णो पाणे अइवइत्ता, णो मुसं अइवइत्ता०, तहारूवं समणं वा माहणं वा वंदित्ता नमंसित्ता जाव पज्जुवासित्ता, अन्नतरेणं मणुन्नेणं पियकरणेणं असणपाणखाइमसाइमेणं पडिलाभित्ता, एवं खलु जाव(जीवा)सुहदीहाउयत्ताए कम्मं पकरंति, तवसा वा झोसइत्ता, कडाणं कम्माणं मुखो अत्थि वेअइत्ता नो अवेइअत्ता ।

अतश्च-लक्षणैर्भालतश्चेति, विभो भावी महान्नृपः । नूनं प्रभावकोऽपि त्वं, तत्सम्यक्त्वं भज स्थिरं ॥ ६८ ॥ यतः—

जह गिरिवराण मेरू, सुराण इंदो गहाण जह चंदो । देवाण य जिणचंदो, तह सम्मत्तं च धम्माणं ॥ ६९ ॥

पाए अणंतदेउल-जिणपडिमा कारिआ य जीवेणं । असमंजसवट्टीए, न वि लद्धो दंसणलवो वि ॥ ७० ॥

अंतोमुहुत्तमित्तं पि, फासिअं जेहिं हुज्ज सम्मत्तं । तेसिं अवड्ढपुग्गल-परियट्टो होइ संसारो ॥ ७१ ॥

दंसणभट्ठो भट्ठो, दंसणभट्ठस्स नत्थि निव्वाणं । सिज्झंति चरणरहिआ, दंसणरहिआ न सिज्झंति ॥ ७२ ॥

सम्मत्तं परमो देवो, सम्मत्तं परमो गुरू । सम्मत्तं परमं मित्तं, सम्मत्तं परमं पयं ॥ ७३ ॥

सम्मत्तं परमं झाणं, सम्मत्तं वरसारही । सम्मत्तं परमो बंधू, सम्मत्तं सुहभूसणं ॥ ७४ ॥

सम्मत्तं परमं दाणं, सम्मत्तं परमं तवं । सम्मत्तं परमं सीलं, सम्मत्तं वरभावणा ॥ ७५ ॥

चिंतामणिकप्पतरू-निहिसुरधेणुनरिंदइंदेहिं । कह उवमिज्जइ सम्मं, इह लोइयएहिं सव्वेहिं ॥ ७६ ॥

लहिऊणं हारंति, ते पुण पावंति णंतकालाऊ। तम्हा दंसणरयणं, सव्वपयत्तेण रक्खिआ ॥ ७७ ॥
जह सियवाड(वडे)ण य विणा, न तरइ इह सायरम्मि बोहित्थं। तह सम्मत्तेण विणा, किरियरुई न तरइ भवोहं ॥ ७८ ॥
जह य महावडसाहो, मूलम्मि हए विणस्सई रुक्खो। सम्मत्तमूलविगमे, तह नासइ सेसचरणाइं ॥ ७९ ॥
जह चउरंगं सिन्नं, हणिए नाहंमि नस्सई सयलं। तह सम्मत्तम्मि हए, नासइ दाणाइओ धम्मो ॥ ८० ॥
जह विच्छायं कमलं, हवइ विणट्ठंमि कत्तिए मासे। तह विच्छाया किरिआ, हवइ सम्मत्तनासंमि ॥ ८१ ॥
जह य महाआययणं, पीढविणासे विणस्सइ अवस्सं। तह दंसणस्स विगमे, सयलं वि हतं [विहलं] परमतत्तं ॥ ८२ ॥
जह रणि पहरणरहिओ, पुरिसो अग्गी वि इंधणविही(ह)णो। विज्झायइ तह सयलं, चरणं सम्मत्तरहिअस्स ॥ ८३ ॥
इय सम्मत्तेण विणा, सव्वं वि अ छारुअवहसरिच्छं। बहिरस्स कत्त(न्न)जीवो, हवइ तुसखंडणं च (व) समं ॥ ८४ ॥
अंधारनघिअं पि च (व), मयदेहविवड्ढणं जहा विहलं। इय सम्मत्तेण विणा, वज्झं सव्वं अणुट्ठाणं ॥ ८५ ॥
सम्मत्तंमि उ लद्धे, ठि(ठई)याइं नरयतिरियदाराइं। दिव्वाणि माणुसाणि अ, मुक्खसुहाइं सहीणाइं ॥ ८६ ॥
सम्मत्तम्मिं उ लद्धे, विमाणवज्जं न बंधए आउं। जइ न वि सम्मत्तघणो(जढो), अहव न बद्धाउओ पुव्विं ॥ ८७ ॥
सव्वाइ जिणेसर भासिआइ वयणाइं नन्नहा हुंति। इय बुद्धी जस्स मणे, सम्मत्तं निचलं तस्स ॥ ८८ ॥

ईदृग्गुरुवचः श्रुत्वा, तं च नत्वा कुमारराट्। तत्प्रायश्चित्तमासाद्य, चचाल सप्रियस्ततः ॥ ८९ ॥ क्रमेण जग्मिवान् कस्मिन्, स कल्याणपुरे पुरे। सप्तदेशाधिपस्तत्र, भूपोऽस्ति गुणविभ्रमः ॥ ९० ॥ पुरांतर्जिनचैत्ये स, गत्वा नत्वा जिनो-

त्तमं । कलस्वरेण संस्तुत्य, सभार्यो बहिराययौ ॥ ९१ ॥ तदा तत्र नरैर्नैकै–र्नारीभिश्च पदे पदे । निर्निमेषदृशा तौ चा–लोकितावद्भुताकृती ॥ ९२ ॥ एकाभिः पौरनारीभिः, सुंदर्याः पट्टवाससी । गतिः काभिर्मुखं काभी, रूपं काभिश्च कुंडले ॥ ९३ ॥ काभिश्च कुमरः काभि–स्तस्याक्षि काभिराननं । काभिश्चाभरणान्येष, वर्णयांचक्रिरे मिथः ॥ ९४ ॥ युग्मं ॥ पूर्ववत्तत्पुरोद्याने, भुक्त्वा भोज्यं प्रियाकृतं । कुमारस्तु सरःपाल्यां, तरुच्छायाश्रये स्थितः ॥ ९५ ॥ सा तत्र पत्युरादेशाद्, भुंक्ते यावत्कृतांबरा । तावत्कापालिकः कोऽपि, समायात्कुमरांतिके ॥ ९६ ॥ द्वात्रिंशल्लक्षणोपेतं, तं दृष्ट्वा हृदि हृष्टवान् । दध्यौ चास्मान्नरायोगी, मत्कार्यं सिद्धिमेष्यति ॥ ९७ ॥ गुणविभ्रमभूपोऽपि, नेदृशो देहलक्षणैः । चिंतयित्वेति सोऽवोच–त्कुमरं प्रति सस्पृहः ॥ ९८ ॥ यतः–विरला जाणंति गुणा, विरला जाणंति अत्तणो दोसा । विरला परकज्जकरा, परदुक्के दुक्किया विरला ॥ ९९ ॥ तन्निशम्य कुमारोऽव–कस्त्वं किमिति भाषसे । स आह त्रिपुरानंदो, योग्यस्मि खर्परानुजः ॥ ६०० ॥ गुर्वास्यलब्धविद्यातः, परोपकृतिहेतवे । सुवर्णनरसिद्ध्यर्थं, भ्रामं भ्राममिहागमं ॥ १ ॥ न दृष्टस्तादृशः कोऽपि, यो मे स्यात्पार्श्वसाधकः । किं त्वाकृत्या वपुःकांत्या, दृश्यसे त्वं परोपकृत् ॥ २ ॥ यतः–जइ वि हु चंदणरुक्को, फलपत्तविवज्जिओ कओ विहिणा । तह वि हु नियदेहेणं, परउवयारं कुणइ लोए ॥ ३ ॥ ततस्त्वमद्य रात्रौ चे–द्भवेदुत्तरसाधकः । तदैषा कार्यसिद्धिः स्या–त्त्वत्सहायान्ममाखिला ॥ ४ ॥ यतः–परपत्थणापवन्नं, मा जणणी जणेसु एरिसं पुत्तं । मा उअरे वि धरिज्जसु, पत्थणभंगो कओ जेण ॥ ५ ॥ सोऽथ तं प्राह किं तर्हि, कृतं तत्र विलोक्यते । स्वर्णपुरुषसिद्धिस्तु, कथं स्यादिह जल्प्यतां ॥ ६ ॥ सोऽग्रिमिशि श्मशाने सा, भवेन्नरशवाद्ध्रुवात् । सत्त्ववन्नरसान्निध्या–त्सामग्री सुलभापरा ॥ ७ ॥

श्रीचंद्रः प्राह योगींद्र!, यद्येवं तर्हि याहि तां । सामग्रीं कुर्वहं तत्र, समेष्यामीति निश्चयः ( मि निशि स्वयं ) ॥ ८ ॥ स तं शंसन् ययौ कर्तुं, सामग्रीं तत्क्रियोचितां । अग्निकुंडशवस्थाना-दिकं सर्वं स चक्रिवान् ॥ ९ ॥ पत्न्यापृच्छि कुमारेंद्रः, किमुक्तं योगिनामुना ?। योग्युक्तं सकलं तस्या, जगाद कुमरस्तदा ॥१०॥ सावदत्कंपमानांगी, नाथ! त्वं किमिदं वचः । योगिनोऽदाः सदाप्येते, निर्घृणाः कूटचारिणः ॥ ११ ॥ तत्र यातुं न दास्येऽहं, भवतः कथमप्यतः । एवं विवदतोस्तत्र, तयो रात्रिः समाययौ ॥ १२ ॥ तस्य वस्त्रांचलं लात्वा, सा नाथं (स्थाचं) नैव मुंचति । तेन सा जगदे कांते !, भव्यं भाव्युज्ज्वलात्मनां ॥ १३ ॥ यतः-मनोवाक्कायशुद्धानां, संपदस्तु पदे पदे । अंतर्मलिनचित्तानां, सुखं स्वप्नेऽपि दुर्लभं ॥ १४ ॥ दुःखं मा धेहि तेन त्वं, नमस्कारप्रभावतः । शुभं भाव्येव वै ( नः ) तस्मा-त्तिष्ठ त्वं भव वानरी ॥ १५ ॥ वृक्षोपरि स्थिता निर्भी-र्भूया अत्र पतिव्रते ! । दुःखं तेऽस्ति परं कार्य-मेतत्कृतं विलोक्यते ॥१६॥ इत्युक्त्वा वानरीं कृत्वा, तां मुक्त्वा तत्र तादृशीं । करवालं करे धृत्वा, कुमारो धीमदग्रणीः ॥ १७ ॥ जगाम योगिनः पार्श्वे, पश्यन् कुंडाग्निनाखिलं । श्मशाने सर्वसामग्रीं, विधाय प्राक्स्थितोऽस्ति सः ॥ १८ ॥ युग्मं ॥ कुमारं प्राह भो धीर!, रक्षाकरोऽत्र मे भव । सोऽप्योचन्निर्भयो भूत्वा, यथेच्छं कुरु साधनं ॥ १९ ॥ विधाय विधिवद्योगी, जापहोमादिकं कियत् । निशीथसमये जाते, पुनः प्राह नृपांगजं ॥ २० ॥ भो वीर! शृणु दिश्यस्यां, प्रसिद्धेऽस्मिन् महावटे । मृतोऽस्ति कोऽपि चौरस्त-च्छाखायामवलंबितः ॥ २१ ॥ तच्छवं त्वं ततः स्थाना-दानयात्रैव निर्भयः । सकृदप्यत्र मा ब्रूयाः, कार्ये जातेऽपि तद्व्रज ॥ २२ ॥ स गत्वा तत्र तच्चौर-शवं वीक्ष्य वटोपरि । चटित्वा चंद्रहासेन, तद्बंधनान्यकर्तयत् ॥ २३ ॥ शवं प्रपात्य भूमौ स, यावदेति वटोऽग्रतः । ताव-

च्छवं च तत्रैवा-द्राक्षीच्छाखावलंबितं ॥ २४ ॥ पुनः स साहसीभूय ( तत्र ), बंधनच्छेदपूर्वकं । साश्चर्यो मृतकं पाणौ, लात्वोत्तीर्य वटोर्ध्व(टात्त)तः ॥ २५ ॥ क्वचित्स्कंधे क्वचित्पाणौ, चैवं कुर्वन् यदा पथि । समेति तत्तदावादी-त्तमट्टहासपूर्वकं ॥ २६ ॥ युग्मं ॥ प्रवीण ! भूपपुत्रोऽसि, भूपोऽप्यसि च तेन मां । श्रावय त्वं कथामेकां, तस्मिंस्तूष्णीं स्थिते पुनः ॥२७॥ शवः प्राह यदस्मासि, यदि त्वं तर्हि हुंकृति । दद्याः पद्मावतीसत्कां वच्म्यहं लौकिकीं कथां ॥ २८ ॥ तथाहि—

क्षितिप्रतिष्ठितात्राज-तनयो गुणसुंदरः । सुबुद्धिर्मंत्रिजश्च द्वौ, निःसृतौ वाजियोगतः ॥ २९ ॥ एकदा तौ महाटव्यां, पतितौ च तृडर्दितौ । प्राप्तौ सरसि कस्मिंश्चि-त्पाल्यां यक्षालये स्थितौ ॥ ३० ॥ सुबुद्धिस्तज्जलं पीत्वा, तत्राभूदश्वरक्षकः । नृपभूस्तु सरोमध्ये, क्रीडन् परतटे गतः ॥ ३१ ॥ तत्रोद्यानात्कनी कापि, क्रीडंत्यागात्करोत्पला । तं वीक्ष्य सास्पृशत्पद्मं, क्रमदंतश्रुती क्रमात् ॥३२॥ संज्ञां कृत्वेति सा वेगा-द्ययौ दृष्ट्वा निजास्पदं। कुमारोऽवभिजं मित्रं, तत्सत्यं किमिदं वद ॥३३॥ स्वबुद्ध्याप्तापि मित्रेण, प्रोक्तं तस्य सखे ! शृणु । एषा पद्मावती कन्या, पुरे दंताख्यपत्तने ॥३४॥ भूपस्य कर्णदेवस्य, पुत्री त्वदनुरागिणी । ततो हृष्टः कुमारोऽपि, समित्रस्तत्पुरे ययौ ॥ ३५ ॥ युग्मं ॥ आरामिकगृहे स्थित्वा, शुद्धिं लात्वा ततोऽखिलां । मालिकस्त्रीमुखात्तस्या, ज्ञापितं मंत्रिसूनुना ॥ ३६ ॥ दृष्टः सरसि सोऽत्रागा-त्का शिक्षेति च तत् श्रुतेः । नृपपुत्र्या-हता मूर्ध्नि, चंदनार्द्रकरेण सा ॥ ३७ ॥ रोषान्निष्कासिता तस्मि-स्तयोक्ते तत्र भूपजः । विलक्षोऽभूजगौ मित्रं, हुं ज्ञातं ज्ञापितं तया ॥ ३८ ॥ त्रिभिर्विशेषकं ॥ पंचम्यां यत्त्वयात्रैवा-गंतव्यं तत्सुखी भव । पृथगुत्तारकं लात्वा, स्थितौ तौ द्रव्य-माटकात् ॥ ३९ ॥ कथं वेत्सीति तत्पृष्टः सखा(मित्रोऽ)वक्सितपंचमीं । जानाम्यस्याः शिरोलग्न-श्वेतपंचांगुलीक्षणात् ॥४०॥

पंचम्यां तेन भूरि स्वं, दत्त्वा प्रैपि च सा .नलात्। तयाज्ञापि च कन्ये (न्या) को, मार्गस्तस्येति सा ततः ॥ ४१ ॥ कुंकुमालिप्तहस्तेन, गच्छे हत्वा जगाद तां। पुनरीदृग्वदस्यग्रे–त्यपमानात्सखीजनैः ॥ ४२ ॥ गृहपृष्ठयूर्ध्वभूमेः सा, प्रोज्झिता रज्जुयोगतः। धाम्नि गत्वा वदत्येनं (दत्तौ च), जीवंत्येतास्मि तद्वर ॥४३॥ त्रिभिर्विशेषकं॥ तदुक्तश्रवणान्मित्रः, प्राह स्वामिन्! विलंब्यतां। रक्तांगुलिचतुष्केण, जानेऽस्त्येषा रजस्वला ॥ ४४ ॥ तन्मार्गेण तदावासे, स ययौ नन-मीनिशि। तं तादृशं तथायातं, दृष्ट्वा हृष्टा नृपांगजा ॥ ४५ ॥ कुमारेण समं रेमे, तत्र पप्रच्छ च प्रभो!। हार्दभावं कथं मेऽत्र, निचार (त्रिचार) ज्ञातवानसि ॥ ४६ ॥ तेनोक्तं मुग्धभावेन, ज्ञातं तन्मित्रतो मया। तया प्रभोज्य वाढं तं, समर्प्य विपमोदकं ॥४७॥ देचरायार्प्यतामेप, प्रेपितस्तेन तत्कृतं। सुबुद्धिः प्राह मन्नाम, मुधा च रुथमुक्तवान् (चारुथयक्तवान्) ॥४८॥ युग्मं ॥ प्रातस्तं मोदकं पार्श्वे, मुक्त्वा यावत्करोति सः। शौचक्रियां तदा तत्र, ददर्श मक्षिका मृताः ॥४९॥ विज्ञप्य तं विपाक्रांतं, भूमौ प्रक्षिप्य मंत्रिजः। कुमार शिक्षयामास, कार्यं रात्राविति त्वया ॥ ५० ॥ तेनैत्य तत्र तत्सार्धं, क्रीडनाद्ग-मिता निशा। सा निद्रालुः प्राक्(प्रगे)सुप्ता, तज्जंघांत रेखात्रयं (घायां नखत्रयं) ॥ ५१ ॥ दत्त्वा तन्नूपुर लात्वा, स आगा-त्स्वगृहे ततः। तौ भूत्वा योगिनौ प्राप्तौ, श्मशाने मंत्रिसूर्गुरुः ॥ ५२ ॥ युग्मं ॥ तच्छिष्यश्च कुमारोऽभू–च्छिष्योऽगात्कन-कापणे। लात्वेदं नूपुर द्रव्यं, देहि मे स वणिक्तदा ॥ ५३ ॥ तन्नृपाग्रेऽमुचद्राज्ञो–पलक्षि नामतः स्वकं। स पृष्टश्च तथा(दा)वोच–द्गुरुर्मे वेत्ति न त्वहं ॥५४॥ गुरुराकारितो राज्ञा–पृच्छीदं भवतः कुतः?। स आहाद्य श्मशानेऽस्थां, शक्ति-स्तत्रागतोत्कटा ॥ ५५ ॥ मया सांह्रो धृता नास्था–त्तन्नूपुर करे स्थितं। य(त)ज्जंघायां मया शक्ति–र्मुक्ता लग्ना च

कीदृशी ॥ ५६ ॥ मध्ये नीतः स भूपेन, सुतां दृष्ट्वा तथाविधां । दृष्ट्वा दोषमाक्रांतां ( मोक्त्रीं तां ), विधां वेत्सि स आह वै ॥ ५७ ॥ तर्ह्येनां मम पुत्रीं त्वं, शक्तिदोषोज्झितां कुरु । सोऽवग्भूपाद्य रात्रौ चे-द्वस्त्रान्मयाभिमंत्रितात् ॥ ५८ ॥ तस्या नेत्रे मुखं बध्ध्वा, रथेन स्वैर्भटैश्च सा । पूर्वस्यां दिशि देशांते, करौ बध्ध्वा च मोच्यते ॥ ५९ ॥ युग्मं ॥ तैर्भटैः पृष्ठितो नैव, विलोक्यं तर्हि सा कनी । तद्वनस्थाष्टभिर्यामै-र्निर्दोषा भाविनी ननु ॥ ६० ॥ पश्चाच्च समहं नेया, स्वस्थानेऽतश्च वः सुखं । ततश्च तौ गतौ धाम्नि, राज्ञा सा मोचिता वने ॥ ६१ ॥ इतो वाजिस्थितौ तत्र, तौ गत्वा तां ततो वनात् । छित्त्वा तद्बंधनानि द्रा-ग्लात्वा स्वपुरिं जग्मतुः ॥ ६२ ॥ सा सुबुद्धिं जगौ मार्गे-ऽदः किं देवर ! चेष्टितं । सोऽवक्तां भ्रातृजायाया, एवेदमखिलं न मे ॥६३॥ इतस्तत्समये जाते, राजा तस्मिन् वनेऽगमत् । पुण्यप्राप्तेर्हृदः स्फोटो-ऽभवद्भूपस्य तद्वद ॥६४॥ कस्येद(य)मलगत्पापं(द्वत्या), कन्यायाः कुमरस्य वा । राज्ञो मित्रस्य वा जान-न्न वदेः पातकं तव ॥ ६५ ॥ प्रतापजः शवं प्राह, हृत्याभूद्राज्ञ एव सा । कथं पुत्रीदृशी वृद्धा, कुमारीत्वेन रक्षिता ॥ ६६ ॥ एकतश्च चतुर्णां सा, घटते हेतु भूपतिः ( भावतः ) । कुमारजल्पनाच्छीघ्रं, शवो गत्वा वटे स्थितः ॥ ६७ ॥ एवं वारत्रयं चक्रे, शवेन तस्य भापणात् । पुनः स तूर्य-वेलायां, वटाद्धात्वा शवं स्थितः ॥६८॥ यावच्छवं दृढीकृत्य, यियासुरेष तद्वटात् । कुमारस्य शवं ताव-दिदं वचनमब्रवीत् ॥६९॥ अहो राजाधिराज ! त्वं, किं लग्नो योगिना समं ? । न वेत्सि यदयं धूर्त-स्त्वत्तः कर्ताऽसिसाधनं ॥ ७० ॥ शवोक्तं तन्निशम्यैष, किमेतदित्यचिंतयत् । इतो मध्यवयस्कैका, नारी तत्रागता तदा ॥ ७१ ॥ त्वं केति तेन पृष्टा सा, प्राह निःश्वस्य साश्रुदृक् । पुरादस्माद्यमाशायां, नंदग्रामे वसाम्यहं ॥७२॥ मद्भर्तायं दरिद्रत्वा-च्चौर्यं व्यधे कदा कदा । नृपेण चैकदा

धृत्वा, वटेऽस्मिन्नित्ययं कृतः ॥७३॥ ज्ञात्वाद्याहं जनश्रुत्या-धुनामुं द्रष्टुमागता । किं कर्तासि त्वमेतस्य, कुमारः प्राह हे शुभे ! ॥७४॥ क्षेप्स्याम्यमुं श्मशानेऽस्मि-न्नग्नौ यत्पाथिकोऽस्म्यहं । पुनर्यत्तव चित्ते स्या-त्क्रियते तत्तवाज्ञया (तद्भगिन्यथ) ॥७५॥ सैवं वरमिति प्रोच्य, तं शवं चंदनादिना । आलिंपेद्यावता ताव-त्तन्नकाग्रं ललौ शवः ॥७६॥ सा रुदंती ययौ ग्रामे, कुमारोऽपि ततः शवं । लात्वागाद्योगिनः पार्श्वे, कुंडाग्रे च मुमोच तत् ॥७७॥ योगिना विधिवन्नीरैः, स्नापयित्वा शवश्च सः । पुष्पादिभिश्च संपूज्य, कुंडाग्रेऽस्थापि मंडले ॥ ७८ ॥ स्वयं शवशिरःपार्श्वे, योगी तत्संमुखः स्थितः । पराङ्मुखं शवांह्र्यग्रे, संस्थाप्याह नरेंद्रजं ॥ ७९ ॥ करोमि साधनां धीर !, त्याज्यं पृष्ठीक्षणं त्वया । कुमारः कृतरक्षांगः, सावधानः स्थितस्तदा ॥८०॥ योगी तंडुलसिद्धार्थै-राच्छोट्याष्टोत्तरं शतं । शवं हक्कितवांस्तत्र, स उत्तस्थौ सुरेरितः ॥ ८१ ॥ इतस्ततो विलोक्यैव, दृग्भ्यां सुप्तस्तथैव सः । वक्रग्रीवः कुमारस्त-त्कृतं पश्येद् दृगंततः ॥८२॥ योगी चक्रे पुनः प्राग्व-त्स उत्थायापतत्तथा । योगिनापृच्छि धीर ! त्वं, किं चिंतयसि सोऽब्रवीत् ॥ ८३ ॥ यथा चित्ते तथा वाचो, यथा वाचस्तथा क्रिया । ये संत्यत्र त्रिधा शुद्धाः, सिद्धकार्या भवंतु ते ॥८४॥ ततस्तद्वचनं श्रुत्वा, योग्याह तं पुनः नरो ! । स्मरेति योगिनोऽस्यैत-त्कार्यं सिद्ध्यतु सिद्ध्यतु ॥८५॥ योगी तृतीयवारं तु, विधानं चक्रिवांस्ततः । स विशेषमजानंस्तु, शवे नक्राग्रशल्यतां ॥ ८६ ॥ ततः क्रोधज्वलद्दृष्ट्या, पश्यन्नुत्थित- वान् शवः । क्रुत्कृत्य तद्बहिः शल्यं, प्रोज्झ्य योगिनमब्रवीत् ॥ ८७ ॥ अरे दुष्ट ! सशल्येऽस्मिन्, शवे मामवतारयन् । वंचयन्मुग्धमेनं च, त्वं मृतोऽद्यासि मत्करात् ॥ ८८ ॥ अस्य स्थाने त्वमेवैहि, साधनं न निरर्थकं । इत्युक्त्वा योगिनं लात्वा, कराभ्यां शवगः सुरः ॥ ८९ ॥ अक्षिपत्कुंडवह्न्यंत-र्हुं हुं कुर्वेति भूपजे । शवान्निर्गत्य देवोऽगा-द्योग्यभूत्स्वर्णपूरुषः ॥९०॥

युग्मं ॥ दध्यौ च कुमरः शल्यं, विस्मृतं मे हहा ततः । सुरकोपो बभूवात्र, हाहा जज्ञे किमीदशं ॥ ९१ ॥ चिंतयित्वेति तत्राग्नौ, तं शवं सोऽक्षिपत्तदा । कुंडाग्नौ शमिते लात्वा, तं सुवर्णनर ततः ॥ ९२ ॥ क्वाप्यन्यत्र भुवि क्षिप्त्वा, प्रातर्गत्वा प्रियांतिकं । अंजनात्तद्विधां कृत्वा, स तां सर्वं न्यवेदयत् ॥९३॥ युग्मं ॥ तत् श्रुत्वा विस्मिता साह, नाथ ! स्वर्णनरस्य कः । प्रभावो वर्तते तेन, किं स्यात्तत्कुमरो जगौ ॥९४॥ पूजयित्वा विधेरस्य, गृहीत्वां (हृते) गचतुष्टयं । वस्त्रेणाच्छाद्य मुक्तोऽयं, प्रगे भवति तादृशः ॥ ९५ ॥ एवं प्रतिदिनं कुर्व-न्नरः स्यात्तत्प्रसादतः । दाता भोक्ता च, लक्ष्मीवान्, परमस्मिन्न मे मनः ॥ ९६ ॥ अन्यायोपात्तवित्तत्वा-द्धिंसांगत्वाच्च मूलतः । चित्ते नैर्घृण्यहेतुत्वा-दाद्याणुव्रतखंडनात् ॥ ९७ ॥ अस्य भोगोपभोगत्वं, युज्यते न कृपात्मनां । इति वार्तां प्रकुर्वंतौ, ततस्तौ यातुमुद्यतौ ॥ ९८ ॥ युग्मं ॥ क्रीडां कर्तुमितो भूप-स्तत्रागाद्गुणविश्रमः । सरःपाल्यां प्रपास्थाभ्यां, ताभ्यां सोऽत्र विलोकितः ॥ ९९ ॥ पक्कस्या(प्रक्रीडया)प्रतरोश्छाया-श्रयेऽस्थात्स नृपस्तदा । कोऽपि देशांतरी बंदी, नृपाग्रे किंचिदब्रवीत् ॥ ७०० ॥ तथाहि—

सहोदरः परस्त्रीणा-मनाथश्रीपराङ्मुखः । अर्थिकामगवी यश्च, स श्रीचंद्रनृपो जयी ॥ १ ॥ यः शून्यं नगरं दृष्ट्वा, मध्ये गत्वा च राक्षसः । येन निजपादतला-भ्यंगं काराप्य किंकरः ॥ २ ॥ तत्कुंडलपुरराज्यं, लात्वा तन्नृपसुतां च चंद्रमुखीं । परिणीय यः स्वनाम्ना, चंद्रपुरमवासयत्तत्र ॥ ३ ॥ युग्म ॥ राधावेधांतधनु-र्विद्यादिकलाविशारदो जगति । एकः स एव वीरः, श्रीचंद्रो जयति जगतीशः ॥४॥ प्रतापसिंहभूपस्य, सूनुः श्रीचंद्रभूपतिः । तत्कुंडलपुराधीशः, स जीयात्पद्मिनीपतिः

१ शून्यं नगरं दृष्ट्वा, मध्ये गत्वा च राक्षसो येन । निजपादतलाभ्यंगं, काराप्य स किंकरश्चक्रे ॥ प्रतौ पाठः ॥

॥५॥ तथा च–जेण य महिंद्णयरे, धूआ तिलोअणस्स जचंधा। वरपउमपत्तनित्ता, विहिया सो जयउ सिरिचंदो ॥६॥ खयरवणम्मि जस्स य, सिरूवरि खीरं झरइ खीरतरू। ता चंदलेहि तिहिं सो, परिणीओ जयउ सिरिचंदो ॥ ७ ॥ अपि च–कंतीइ नियमिसेणं, मयणत्थं जो पियंगुमंजरिअं। सयलच्छिलक्खणविऊ, परिणइ सो जयउ सिरिचंदो ॥ ८ ॥ इत्यादि।

तत्कीर्तिश्रवणाद्राजा, तं पप्रच्छ सविस्मयः। वैतालिक! कुतोऽभ्यागाः, स जगाद नरेश्वर! ॥९॥ कुंडलाख्यपुरादागां, तत्रत्यं च यथास्थितं। नृपस्य कथयामास, श्रीचंद्रचरितं च तत् ॥१०॥ युग्मं ॥ अथ आत्रंतिके याता, वीणापुराख्यपत्तने। तन्निशम्य नृपोऽन्येऽपि, नरास्तस्योचितं ददुः ॥ ११ ॥ तत् श्रुत्वा मदना हृष्टा, जगौ नाथाद्य यन्मया। चरित्रं ते श्रुतं किंचि–त्त्वयानुक्तमपि स्वयं ॥१२॥ प्रियां स प्राह को वेत्ति, श्रीचंद्राः संत्यनेकशः। साह प्राणेश्वराद्याप्या–त्मानं नाविष्करोषि किं? ॥१३॥ स स्मित्वैवोत्तरं तस्या, ददौ ततश्च तत्प्रिया। भूपे पुर्यां गते तस्या–र्थिनोऽदात्स्वर्णमुद्रिकां ॥१४॥ ततोऽचलत्सपत्नीकः, स तद्वीणापुरेहया। गच्छतस्तस्य तन्मार्गे, तलारक्षोऽमिलत्पुरः ॥१५॥ तथाविधं स तं दृष्ट्वा, तां तादृशीं च विस्मितः। स जगौ को भवानेत–त्कृपाणं कस्य मेऽर्पय ॥१६॥ सोऽवक्ते चेत्कृपाणेहा, तत्स्वं खड्गं च सज्जय। यथाहं तेऽर्पयाम्येत–द्दर्शयामि च सुंदरं ॥१७॥ स्फूर्तिमत्तद्वचः श्रुत्वा, रोषांधः सोऽधमस्ततः। पुरे गत्वा नृपादेशा–त्तस्यासिस्त्रीजिघृक्षया ॥१८॥ सेनानीयुक्तलारक्ष–स्तत्रागाच्छीघ्रमागमत्। तत्सैन्यमागमद् दृष्ट्वा, चकिता मदनावदत् ॥१९॥ युग्मं ॥ विभो! किमिदमायाति, पृष्ठितः कटकं महत्। संगरे कृतहस्तः स, विहस्य (स्तां)तां जगाविति ॥ २० ॥ माभैर्बिभेपि (मा भैर्बिभेषि) यद्यस्मा–न्ममाग्रतस्तदा भव। ताममी(ग्रे)कृत्य तत्रैव, सोऽस्थाद्वीरो दृढासिभृत् ॥२१॥ अग्निस्त्रीतस्कर त्वं रे!, क्व यास्यसि मृतोऽसि रे!। बंध बंध हतेत्यत्र,

ब्रुवाणं सैन्यमागतं ॥२२॥ कुमारस्तन्मुखीभूय, सिंहनादादिपूर्वकं। तैर्भटैः सह संग्राम-मेककः सिंहवद्व्यधात् ॥२३ ॥ तत्सिंह-
नादसंत्रस्ता, राज्ञश्वा(गजा अ)श्वा रथा भटाः। उपर्युपरि ते पेतु-र्मृताः केऽर्धमृताश्च के ॥२४॥ नश्यंतस्ते मिथः प्रोचु-र्वयं
वृथा मृता इह। अयं विद्याधरः कोऽपि, दृष्ट्वापि ज्ञायते न किं ? ॥२५॥ तस्मिन्नष्टे गते सोऽपि, प्रियार्चितभुजद्वयः। क्वाप्युन्मार्गे
क्वचिन्मार्गे, क्वचिच्छीघ्रं क्वचिच्छनैः ॥ २६ ॥ बालामेलेन गच्छंश्च, प्राप सिद्धपुरं पुरं। तस्मिन् जिनविहारोऽस्ति, तस्योच्चै-
र्महिमाद्भुतः ॥ २७ ॥ युग्मं ॥ तत्रायांति जना नैके, यात्रार्थं देशदेशतः। वस्त्राक्षतफलौघाद्यैः, पूजां कुर्वंत्यनेकधा ॥ २८ ॥
संघे गते च तत्रस्यै-र्लोकैः सर्वैर्वणिग्मुखैः। देवसंबंधि तद् द्रव्यं, विभज्य लीयतेऽनिशं ॥२९॥ दिने दिने च ते लोका, निर्धना
जज्ञिरेऽखिलाः। प्रायः कुलक्षयश्चास्ति, विच्छायं तदभूत्पुरं ॥३०॥ तत्स्वरूपं स विज्ञाय, जिनेंद्रनत्यनंतरं। प्रियां प्राह पुरेऽस्मि-
न्नौ, देवद्रव्यस्य भक्षणात् ॥३१॥ अन्नपानादिकं लातुं, न युक्तं कस्यचिद् गृहे। तत वृद्धनरानूचे, कुमारः किमिहेदृशं ॥३२॥
प्रासादो दृश्यते जीर्ण-श्चैत्यपायपदं घनं। ऋणं सर्वमभव्यं प्रा-ग्देवर्णं त्वशुभाशुभं ॥ ३३ ॥ त्रिभिर्विशेषकम् ॥ उक्तं च—

देवद्रव्येण या वृद्धि-स्तेन द्रव्येण यद्धनं। तद्धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत् ॥ ३४ ॥
यदागमः—जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं। जिणदव्वं भक्खंतो, अणंतसंसारिओ होइ ॥ ३५ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं। जिणदव्वं रक्खंतो, तित्थयरत्तं लहइ जीवो ॥ ३६ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं। जिणदव्वं वुड्ढंतो, तित्थयरत्तं लहइ जीवो ॥ ३७ ॥
अपि च—भक्खणे देवदव्वस्स, परत्थीगमणेण य। सत्तमं नरयं जंति, सत्तवारा उ गोयमा ॥ ३८ ॥

भक्खइ जो उविक्खइ, जिणदव्वं तु सावओ । पन्नाहीणो भवे जीवो, लिप्पइ पावकम्मणा ॥ ३९ ॥ इत्यादि ॥

उपायस्तेन युष्माभिः, प्र(स) कार्यो येन छुट्यते । इत्युक्त्वा तांस्ततोऽन्यस्मिन्, ग्रामे गत्वा स भुक्तवान् ॥४०॥ ततोऽचलद् द्वितीयेऽह्नि, स कस्मिन्नपि कानने । गच्छंती च (गच्छन् गच्छन्) दिवाशेषे, श्रांता सा सुंदरी तदा ॥४१॥ कुमारोऽवक्प्रिये ! ग्रामो, दूरे पादौ च ते स्थितौ । वटेऽस्मिन् स्थीयते तेन, किमु कुत्या प्रयोजनं ॥४२॥ वटाधः स्रस्तरं कृत्वा, सोपयोगौ स्थितौ च तौ । साद्ययामद्वयं सुप्ता, स च यामे तृतीयके ॥ ४३ ॥ चतुर्थे च पुनर्यामे, सा सुप्ता निशि निर्भरं । कुमारस्तत्र जागर्ति, विलोकयति चाभितः ॥४४॥ तदा किमपि कौबेर्यां, दिशि तेजो ददर्श सः । रत्नमिव च ( रत्नधामेव ) तद् द्रष्टुं, शीघ्रं कौतुकतो ययौ ॥ ४५ ॥ धावन्नपि स तद्धाम, क्वचिद्दूरेऽतिके क्वचित् । पश्यन्नग्रे गतस्ताव-दकस्मात्तत्क्षचिद्गतं ॥ ४६ ॥ इंद्रजालमिदं ज्ञात्वा, पश्चादागत्य तत्पदैः । शय्यायां संस्थितस्तत्रो-वाच सुप्तां प्रियां प्रति ॥४७॥ यथा—ग्रोज्जृंभते परिमलः कमलावलीनां, शब्दायते क्षितिरुहोपरि ताम्रचूडः । मार्गस्तवापि सुकरः किल शीतलत्वा-दुत्थीयतां प्रियतमे ! रजनी जगाम ॥४८॥ उत्तरे च तदा कस्मि-न्न दत्ते प्रियया ततः । क्षणं प्रतीक्ष्य सोऽवादी-द्वचनं पुनरप्यदः ॥४९॥ एते व्रजंति हरिणास्तृणभक्षणार्थं, चूर्णि विधातुमथ यांति च पक्षिणोऽपि(मी) । शृंगं स्पृशत्युदयसानुमतो विवस्वा-नुत्थीयतां सुनयने ! रजनी जगाम ॥ ५० ॥ पत्नीप्रत्युत्तराप्राप्तेः, करेण कुमरस्तदा । आलोकयति चेत्स्थानं, तत्तत्र क्वापि नास्ति सा ॥५१॥ स तद्वियोगदुःखेन, दुःखितस्तत्र सर्वतः । ईक्षांचक्रे प्रगे जाते, नापश्यत्तत्पदान्यपि ॥५२॥ स दध्यौ च ममोद्योत-भ्रमान्मुग्धात्र केनचित् । अपजह्रे हहा तत्र, कथं स्थास्यति साबला ? ॥५३॥ यतः—यत्कदापि मनसा न चिंत्यते, यत्स्पृशंति न

गिरः कवेरपि । स्वप्नप्रांतेऽपि यत्र दुर्लभा, हेलयैव विदधाति तद्विधिः ॥५४॥ अपि च—अघटितघटितानि घटयति, सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति, यानि पुमान्नैव चिंतयति ॥५५॥ जं चिय विहिणा लिहियं, तं चिय विप्फुरइ सयललोअस्स । इय जाणिऊण धीरा, विहुरे वि न कायरा हुंति ॥५६॥ विधत्ते यद्विधिस्तस्य ( स्तत्स्यात् ), न स्याद् हृदयचिंतितं । एवमेवोत्सुकं चित्त—मुपायांश्चिंतयेद्बहून् ॥ ५७ ॥ कस्य स्यान्न स्खलितं, पूर्णाः सर्वे मनोरथाः कस्य । कस्येह सुखं नित्यं, दैवेन न खंडितः को वा ॥ ५८ ॥ स्खलितोऽत्र हि धूर्तोऽपि, चिंतयित्वेति तत्त्ववित् । ततोऽचलत्क्रमात्प्राप, कनकाख्यपुरं वरं ॥ ५९ ॥ तस्मिन् पुरे सरःपाल्यां, वटाधः शीतलाश्रये । क्षणमेकं स सुष्वाप, तदाभूत्तत्र तत् शृणु ॥ ६० ॥

अपुत्रस्तत्पुराधीशो, राजा श्रीकनकध्वजः । दैवान्मृतस्तदामात्यै, राज्याधिष्ठायिका सुरी ॥ ६१ ॥ आराधिता च पृष्टास्मिन्, राज्ये कः स्थापयिष्यते ? । सा देवी आह दिव्यानां, पंचकं ह्यधिवास्यतां ॥६२॥ युग्मं ॥ यस्य मूर्धनि हस्तिन्या—भिषेकः क्रियते स्वयं । राजा स एव कर्तव्य—स्तत्र ( व्यो, नव ) लक्षपुरेश्वरः ॥ ६३ ॥ त्रीण्यहानि पुरस्यांत—र्बहिश्च सा करेणुका । भ्रामं भ्रामं तदा तत्र, प्राप्य श्रीचंद्रमस्तके ॥ ६४ ॥ कलशं ढोलयामास, गजाश्वच्छत्रचामरैः । स्वयमेव तदा चास्य, चेष्टां चक्रे यथोचितां ॥ ६५ ॥ युग्मं ॥ सुप्तोत्थितस्तदा सोऽपि, किमेतदिति चिंतयन् । अमात्यैर्जगदे नाथ !, राज्यं स्वीक्रियतामिदं ॥ ६६ ॥ कनकाख्यपुराधीशो, मृतेऽत्र कनकध्वजे । नवलक्षाख्यदेशेऽत्रा—स्मद्भाग्याच्चमभूर्नृपः ॥ ६७ ॥ विवाहं कनकावल्या, नृपपुत्र्याश्च कुर्वथ । इत्युक्त्वा मंत्रिणः सर्वे, लक्ष्मणाद्याः स्मिताननाः (नं) ॥ ६८ ॥ चंद्र-

१ 'तदा स्वा स्वा, चेष्टा चक्रे यथोचिता' इति प्रतौ पाठः ॥

हासासिदीप्रांगं, कुंडलादिविभूपितं । नामांगुलीयकज्ञातं, श्रीचंद्राभिधमद्भुतं ॥ ६९ ॥ तं दृष्ट्वा हर्षतो राज्ये, स्थापयांचक्रिरे विधेः । कुमारी तस्य वामांगे-ऽभिषिक्ता तैः सदुत्सवं ॥ ७० ॥ पुरीप्रवेशपूर्लोक-मानवर्धापनादिभिः । गुप्तिमोक्षणदानादि-करमोचनपूर्वकं ॥ ७१ ॥ देवपूजादिभिः कृत्यै-र्गीतनृत्यादिसंमर्दैः । श्रीचंद्रनृपतेस्तत्र, प्राज्यो राज्योत्सवोऽजनि ॥ ७२ ॥ पंचभिः कुलकं ॥ एकदा लक्ष्मणो मंत्री, भूपं प्रति व्यजिज्ञपत् । देव ! तेऽत्र सदाचारै-र्ज्ञाताचो(तैवो)त्तमता स्वयं ॥ ७३ ॥ यतः-आचारः कुलमाख्याति, देशमाख्याति भाषितं । संभ्रमः स्नेहमाख्याति, रूपमाख्याति भोजनं ॥ ७४ ॥ तथापि गायनैः पौर-नरनारीभिरादरात् । गीयमानस्य ते वंशं, मातृपित्रभिधेप्स्यते ॥ ७५ ॥ तन्निशम्य नरेंद्रेण, सर्वसभ्यजनाग्रतः । प्रोक्ता हरिबलस्यैव, मात्सिकस्य कथा प्रथा ॥ ७६ ॥ तथाहि-यथा हरिबलस्यास्य, विशालायां गतस्य च । कुलं नामादि पित्रोश्च, ज्ञातं किं किं पुरीजनैः ? ॥७७॥ तथापि तस्य सा कीर्ति-रौदार्यादिगुणोत्करैः । तिसृभिर्नृपकन्याभिः, परिणीतः स भाग्यवान् ॥७८॥ तथात्रापि हि भो लोकाः !, कुलादिज्ञापनेन किं ? । गुणा एव विलोक्यंते, किमन्येन प्रयोजनं ? ॥७९॥

एकदा तत्पुरेऽभ्येयुः, केचित्कलरवादयः । यांतो वीणापुरे राज-पुत्र्याः स्वयंवरोपरि ॥ ८० ॥ तैर्गायनैस्तदा तत्र, बहुकाल्यां नृपाध्वनि । सारस्याद्गातुमारेभे, श्रीचंद्रचरितं स्वयं ॥ ८१ ॥ कुशस्थलपुरेशस्य, प्रतापसिंहभूपतेः । यथा सूर्य-वतीराज्ञ्या(ज्ञी), सपत्नीपुत्रसाध्वसात् ॥ ८२ ॥ पुष्पोच्चये मुमोच स्वं, पुत्रं श्रेष्ठिगृहे यथा । स वृद्धिमाप तन्नाम, श्रीचंद्र इति विश्रुतं ॥ ८३ ॥ युग्मं ॥ राधावेधावदातः स, पद्मिनीपाणिपीडनं । वीणारवस्य तद्दानं, विदेशगमनं यथा ॥ ८४ ॥ तत्सर्वं तद्रसाकृष्टै-र्निशम्य पौरमानवैः । दानं तदीप्सितं दत्त्वा, स पृष्टोऽदार्शि स त्वया ॥ ८५ ॥ ज्येष्ठोऽस्वम्मे पितृव्याद्यैः, स दृष्टो

मार्गितोऽस्ति च । तत्कवित्तान्यनेकानि, संति नायांति मे परं ॥ ८६ ॥ ततः प्रगे सभां प्राप्ताः, पृष्टा भूपेन मंत्रिणः । निशि किं नागता यूयं, तैस्तदोक्तं यथाश्रुतं ॥८७॥ किंचिद्विहस्य भूपाले, न्यग्मुखे मौनिनि स्थिते । दध्यौ स लक्ष्मणो मंत्री, भवेदय कदापि सः ॥ ८८ ॥ इति चिंतां प्रकुर्वंतं, तं विज्ञाय ततो नृपः । चतुरंगदलोपेतः, क्रीडां कर्तुं वने ययौ ॥ ८९ ॥ खेलयित्वा बहूनश्वान्, श्रांतश्चूततले स्थितः । भूभुग्गवेषयामास, जात्यानश्वान् पृथक्पृथक् ॥ ९० ॥

इतश्च पश्चिमाशात, आगच्छन्नध्वगोऽध्वनि । स्कंधस्थयष्टिकः कोऽपि, धूलिधूसरिताननः ॥ ९१ ॥ नीरपात्रकरः स्फार-संधृतोर्ध्वीकृतांशुकः । दूरदेशागतश्चेति, ज्ञात्वाहूतस्तदा भटैः ॥ ९२ ॥ युग्मं ॥ यावत्स भूपमभ्येति, तावत् श्रीचंद्रभूपतिं । दृष्ट्वा हर्षाश्रुपूरेणा-ययौ शीघ्रं ब्रुवन्निति ॥९३॥ अहो ! वृष्टिरनभ्राभू-दहो ! अपुष्पजं फलं । अहो ! मे प्राक्तनं पुण्यं, यद् दृष्टोऽद्य मया प्रभुः ॥ ९४ ॥ जल्पंतमिति तं शब्दा-द्गुणचंद्रं सुहृद्वरं । ज्ञात्वा भूपस्तदोत्थाया-लिलिंग सहसा चिरं ॥ ९५ ॥ ततश्च गुणचंद्रोऽपि, श्रीचंद्रक्रमपंकजे । अलिवच्छिरसा लग्नो, वाढं हर्षाश्रुपूर्णदृक् ॥ ९६ ॥ भूपं नत्वोचितस्थाने, निषण्णो नृपतेः सखा । मंत्रिभिः पौरलोकैश्च, प्रणतः सादरं तदा ॥९७॥ पप्रच्छ नृपतिर्मंत्रि-पुत्र ! त्वं कथमेककः ? । केन केन पथा-ऽऽगाः, कदा मुक्तं कुशस्थलं ? ॥९८॥ कल्याणं पितृवर्गादि-भ्रातृजाया क्व तेऽस्ति च ? । चलिते मयि तत्स्थाना-द्यज्जज्ञे तत्र तद्वद ॥ ९९ ॥ शृण्वत्सु सर्वसभ्येषु, मंत्रिजोऽवग्नृपं प्रति । तदाहं श्रीमदादेशा-च्चक्रे तन्मंत्रिलेखकं ॥ ८०० ॥ परं देहे ममालस्यं, जृंभमाणं ( जृंभादि च ) पुनः पुनः । भवेत्तदा ततश्चाह-मागां प्रगे भवद्गृहे ॥ १ ॥ त्वां तत्रावीक्ष्य दुःखी स-न्निभालयन्नितस्ततः । गतश्चंद्रकलापार्श्वे, दृष्ट्वा चिंतातुरां च तां ॥ २ ॥ पप्रच्छ स्वामिनि ! स्वामी, क्व मेऽस्ति त्वं विदंत्यसि । बहु पृष्टा

च सावोच–द्रुदंती गद्गदस्वरा ॥ ३ ॥ युग्मं ॥ आमूलचूलवृत्तांतं, तन्निशम्यातिदुःखितः । तामजल्पमहं तर्हि, मां विनागात्प्रभुः कथं ॥ ४ ॥ साह पित्रोर्वियोगोऽस्य, मा भूयादिति हेतुतः । त्वामत्रैव विमुच्याशु, ययौ देशांतरं प्रभुः ॥५॥ यादृशस्तादृशो मेऽसि, पत्युर्मित्रं विना त्वया। ज्ञाप्यं कस्याप्यदो नेति, यत्प्रियां प्रोच्य जग्मिवान् ॥६॥ ततस्त्वद्विरहे दुःख–महोरात्रमभूत्तदा । पितृपार्श्वस्थितस्यापि, यन्मे कस्यापि ना(मा)स्तु तत् ॥ ७ ॥ ततस्तत्र गुरूक्तादि, जगादा(वामांगा)गमनादि च । स्वामिन्याः पितृवेश्मादौ, प्राप्तिः सख्यादिभिः सह ॥ ८ ॥ महींद्रा(ध्रा)त्सुंदरो मंत्री, तत्रागात्तन्मुखात्तदा । श्रीमतां शुद्धिरस्माभि–र्ज्ञाता–न्यद्वेपता च सा ॥९॥ तत्कुंडलपुरान्मंत्रि–विशारदागमादि च । तत्र यद्यद्यथा जातं, तत्तत्प्रोक्तं यथास्थितं (तथा तदा) ॥१०॥ किं च सूर्यवती माता, हृष्टा त्वद्शुद्धितो भृशं । चक्रे त्वन्मीलनं याव–न्मोदकाज्याद्यभिग्रहं ॥ ११ ॥ सगर्भास्ति च सा देवी, स्वामिंस्त(स्वास्थ्यं त) त्रास्ति सर्वतः । स्वजनक्षितिपश्रेष्ठि–मुख्यानां कुशलं परं ॥ १२ ॥ दुःखं तत्रैकमेवास्ति, सर्वेषां त्वद्वि–योगजं । ततो महींद्र(ध्र)मंत्रीश–मुखाद् ज्ञात्वा (ता) च दिक्प्रभोः ॥ १३ ॥ तदा प्रतापसिंहेन, दिश्यस्यां बहवो भटाः । श्रीमद्गवेषणार्थं च, प्रेषिताः संति सायुधाः ॥ १४ ॥ ततश्चाहमपि स्नेहा–न्मुक्त्वा तत्र धनंजयं । दिश्यस्यां निर्ययौ भूरि–भटैः मार्धमहं (धं क्रमात्) क्रमात् ॥ १५ ॥ कुंडलाख्यपुरे चंद्र–लेखां चंद्रमुखी क्रमात् । तत्वां विज्ञाय तत्रत्यं, स्वरूपं तन्मुखात् श्रुतं ॥ १६ ॥ महींद्र(ध्र)नगरे गत्वा, नत्वा देवीं सुलोचनां । ततो हेमपुरं प्राप्य, स्वरूपं तन्मुखात्ततः (ज्ञात्वा मदनपालतः)

१ ' आदृशोऽपीदृशो मेऽसि ' इति प्रतौ पाठः ॥ २ ' लेखाचंद्रमुखीक्रमात् । नत्वा विज्ञाय तत्रत्यं, स्वरूपं तन्मुखात्ततः ' इति प्रतौ पाठः ॥

॥ १७ ॥ युष्मद्व्यतिकरः (रं) सर्वः (वं), कांत्यां च भृशमागतः (मं)। प्रियंगुमंजरी तत्र, हृष्टात्यंतं मदागमात् ॥ १८ ॥ युग्मं ॥ तां प्रणम्य ततोऽप्यस्यां, दिश्यागच्छन् क्रमादहं। पथि मार्गांतरे जाते, तत्रापि प्रेषयन् भटान् ॥ १९ ॥ विलोकयन् पुरेषु त्वां, नगरेषु वनेषु च। श्रीचंद्रो भूमिपालोऽस्मिन्, पुरेऽस्तीत्यध्वगश्रुतेः ॥ २० ॥ हृष्टश्च सर्वतस्तूर्ण-मायातैतत्पुरं प्रति। मार्गेऽश्वेऽपि मृते पाद-चारी सन्नेककश्चलन् ॥२१॥ अद्याधुनात्र दृष्ट्वा त्वां, कृतकृत्योऽभवंतरां। यद्यग्रे (यज्जज्ञे) मार्गजं दुःखं, सुखमेवाथ मेऽभवत् ॥ २२ ॥ चतुर्भिः कलापकं ॥ ततस्ते मंत्रिसामंत-मुख्या हृष्टाः स्वभूपतेः। गुणचंद्रमुखाद् ज्ञात्वा, कुल-पित्रभिधादिकं ॥ २३ ॥ राज्ञापि ज्ञापयित्वा स्वं, वृत्तांतं सकलं ततः। स्वस्थानं प्राप्य मित्रस्य, महामात्यपदं ददौ ॥ २४ ॥ इति प्राकृतसर्वोक्त-तपःप्रभावतो नृपः। श्रीचंद्रो मित्रयुक्तत्र, प्राज्यं राज्यमपालयत् ॥ २५ ॥

यतः-जगद्धर्माधारं म च सदुपयोगिस्थिरतनु-र्लसत्सत्याः संतस्तदपि सुखसंतोपवशगं।
स संतोपः प्रेंखद्विपयविजयोपार्जितजय-स्तपःसाध्यः सोऽपि प्रभवति तपोवैभवमिदं ॥ २६ ॥

इति श्रीश्रीचंद्रचरित्रे श्रीचंद्र(नष्टचर्यया)राज्याभिषेकवर्णनो नाम तृतीयोऽधिकारः समाप्तः ॥ श्रीरस्तु ॥



## ॥ अथ चतुर्थोऽधिकारः प्रारभ्यते ॥

किंयत्यपि गते काले, स्मृता मदनसुंदरी । चित्ते श्रीचंद्रभूपस्य, समित्रः स ततो स्यात् ॥ १ ॥ भव्याश्वयुग्मयुग्दत्त्वा, शिक्षां लक्ष्मणमंत्रिणः । निर्ययौ तत्पुरादेशं, तं मुमोच क्षणादपि ॥ २ ॥ युग्मं ॥ भीमाटव्यां गतौ तौ तु, तस्यां वृक्षाश्रये स्थितं । एकं कार्पटिकं वृद्धं, दृष्ट्वातीसाररोगिणं ॥३॥ श्रीचंद्रश्चक्रि(क्र)यांस्तस्य, प्रतिचर्यामनेकधा । दूरस्थभिल्लपग्रामा-त्पथ्यौपधविधापनात् ॥ ४ ॥ युग्मं ॥ स्नानाभ्यंगादिना राज्ञा-त्वधूतस्तोषितो भृशं । भूपं जगौ स पुण्यात्मन् !, भाग्यं मेऽद्यापि वर्तते ॥ ५ ॥ यदीदृश्याम(यदंते दृग)वस्थायां, मिलितो मे भवान् सुधीः । तेनामुं स्पर्शपाषाणं, गृहाणात्यंतदुर्लभं ॥ ६ ॥ यस्य स्पर्शात्सुवर्णाः स्युः, सर्वलोहादिधातवः । त्वं सुभगोऽसि तत्तेऽमुं, समर्पयाम्यनेन च ॥ ७ ॥ मेदिनीमनृणीकुर्याः, कारापय (कारयेथा) जिनालयान् । मृते मय्यत्र भूदेशे, मठमेकं च सुंदरं ॥८॥ युग्मं ॥ स्पर्शोपलं बलाल्लात्वां-ऽगीचक्रे तद्वचो नृपः । श्रीचंद्रेण मृते तस्मि-स्तत्स्थानेऽकारि सन्मठः ॥ ९ ॥

ततश्चाग्रे चलन् भूप-स्तद्वनांतः सुहृद्युतः । वंशजाल्यां ददर्शैक-मष्टाग्रशतपर्वकं ॥ १० ॥ सुपक्वं सरलं वंशं, शास्त्रयुक्त्योरलक्ष्य सः । तं विदार्य च तन्मध्या-ल्ललौ मौक्तिकयुग्मकं ॥ ११ ॥ मित्रं प्राहैतयोर्मध्ये, वृद्धो मुक्तामणिर्नरः । नारी त्वपर एतस्या, नारी यत्नेन धीमता ॥ १२ ॥ नारी स्याद्यत्र तत्रैति, निशि नूनं नरः स्वयं । परस्य च्छद्महेतुत्वाद्, दुष्टमेतद्ध्रुवं मनं ॥ १३ ॥ ततश्चाग्रे चलन् प्राप (मार्गे), पल्ल्यंते कनकाधिपः । श्रीपर्वताभिधं प्रोच्चं, गिरिं तत्रातिमोहितः ॥१४॥

सोऽपि (स्वच्छं) तत्परितो गच्छन्, विलोकयन् गुहादिकं। तृषाक्रांतः स शुश्राव, गिर्यंता रुदितं स्त्रियः ॥१५॥ युग्मं ॥ तत्स्त्रीदुःखापनोदार्थं, तत्रागाद्विषमास्पदे। गिरिशृंगस्थिता भिल्ली, दृष्टैका तेन दुःखिनी ॥१६॥ रथा(ह्या)दुत्तीर्य तत्रैत्य, सा पृष्टा किमु रोदिषि। जलं क्वापि च जानासि, सा तौ वीक्ष्य महत्तमौ ॥ १७ ॥ दरीमध्यात्पयःकुंभो, जलैः पूर्णस्तयार्पितः। तद्घटस्थं जलं ताभ्यां, न पीतं तत्तया पुनः ॥ १८ ॥ दर्शितं तज्जलस्थानं, तत्र तौ शीतलांभसि। स्नानपानादिकं कृत्वा, स्वस्थौ जातौ ततस्तयोः ॥१९॥ स्वं दुःखं सा किरात्याह, बभाषे (भद्रैष) श्रीगिरिर्महान्। एतस्य पुरतोऽदूरं, वीणापुराख्यपत्तनं ॥२०॥ चतुर्भिःकलापकं। पद्मनाभनृपस्तत्र, तस्यास्त्येकं पुरं त्विह। तत्स्वामिनः स्वर्णकुंभो-ऽन्यदा चौरेण चोरितः ॥२१॥ तत्पदं चाजगामात्र, तद्भटैर्मे पतिर्धृतः। पदपार्थक्यतो ज्ञातं, चौरोऽन्य इति न स्वयं ॥२२॥ तथापि तादृशं कुंभं, भिल्लपार्श्वे नरे(कदे)श्वरः। मार्गयत्येष यस्माद्धि, त(त्व)त्स्थाने पदमागतं (गमत्) ॥२३॥ तद्दुःखेन रुदंत्यस्मि, श्रीचंद्रः प्रति तां जगौ। लोहं कुंभं च त्वं भद्रे!, रिक्तीकृत्यानयात्र भोः! ॥ २४ ॥ तया तथाकृते स्पर्शो-पलस्पर्शेन तं घटं। स्वर्णीकृत्याग्नियोगेन, सोऽदात्तस्यै परार्तिहृत् ॥२५॥ ततस्तस्मिन् पुरे सागाद्, घटमादाय वेगतः। श्रीचंद्रस्तु ततः स्थाना-दाययौ च विणापुरे ॥२६॥ पुरवप्रप्रतोल्यादि, वीक्ष्य सूर्यवतीसुतः। मित्रेण वाससा वीज्य-मानो वेद्यामुपाविशत् ॥ २७ ॥

इतः प्राच्यशुकीजीवः, पद्मनाभनृपांगजा। पद्मश्रीः सहिता मंत्रि-सुतया कमलश्रिया ॥२८॥ पुराद्बहिर्वने क्रीडां, कृत्वा-यांती स्वसद्मनि। तथाविधं च तं भूप-पुत्रं दृष्ट्वातिमोहिता ॥ २९ ॥ स्थूलचंदनलेपेन, भृत्वा कचोलकं तदा। सशिखं

१ 'लोहकुंभममुं भद्रे!, रिक्तीकुर्वानयानलं' इति प्रतौ पाठः ॥ २ 'स्थानात्, ययौ वीणापुरे तदा' इति प्रतौ पाठः ॥

प्राभृतीचक्रे, सखीहस्तेन युद्धये ॥ ३० ॥ त्रिभिर्विशेषकं ॥ इयं का किमिदं चेति, राज्ञा पृष्टा सखी जगौ । पुरस्यास्य प्रभोः पत्न्याः, पद्मावत्या इयं सुता ॥ ३१ ॥ तया प्रेपितमस्त्येत-त्सफलीक्रियतां प्रभो ! । तन्निशम्य नृपो दध्यौ, नांगभोगार्थमीदृशं ॥३२॥ किं तु स्वगर्वपोषार्थं, परीक्षार्थं च मे हृदः । ततः कनीनिकामुद्रां, क्षिप्त्वा तच्चंदनांतरा ॥३३॥ कचोलकयुतां तां स, विससर्ज ययौ च सा । दृष्टा कनी पुनः प्रैषी-त्स्रक्कीर्णानि सुमानि च ॥ ३४॥ युग्मं॥ मालां कृत्वा नृपेणापि, प्रेपितान्यखिलान्यपि । मंत्र्याह किमिदं चक्रे, नृपोऽवक् शृणु भावनां ॥ ३५ ॥ इदं य(इदंव)द्भूतमग्रेऽपि, पुरमेतद्वरैर्नरैः । मुद्रारत्नवदस्यांतः, स्थानं भावि मम स्वयं ॥ ३६ ॥ पुष्पवद्वयमत्र स्म, एकाकिन्यश्च निर्गुणाः । मालावत्सगुणा इष्ट-युक्ताः स्यादि-( स्मो वे )ति सूचितं ॥ ३७ ॥ ततो नृपांगजा हार्द-भावज्ञं रूपभास्करं । प्राग्भवेष्टं नृपं वव्रे, मंत्रिपुत्री च मंत्रिणं ॥ ३८ ॥ वीक्ष्यमाणे भृशं दृष्ट्या, तौ वरौ द्वौ सरागया । स्वपितृज्ञापनार्थं ते, स्वस्वसद्मन्युभे गते ॥ ३९ ॥

इतस्तत्कुंभदानेन, मोचितः शबरस्तदा । भिल्लया ज्ञापितवृत्तांत-स्तत्रैतस्तत्पदानुगः ॥ ४० ॥ तौ दृष्ट्वा स नमस्कृत्य, मल्लभिल्लो चलात्ततः । स्वस्थानमनयद्भक्त्या, प्रौढान्याम्रफलानि च ॥ ४१ ॥ प्रभाते( अदिने )ऽदात्स भूपस्य, तेनात्तानि समंत्रिणा । हेमंते कुत एतानी-ति पृष्टः शबरो जगौ ॥ ४२ ॥ युग्मं ॥ नगेऽस्मिन् पंच शृंगाणि, तेषूच्चं शृंगमांतरं । ईशानशृंगे विजया-धिष्ठात्र्यस्य गिरेः सुरी ॥ ४३ ॥ तच्चैत्याग्रे सुरीदृष्टा-वेकोऽस्त्याम्रः सदाफलः । तस्यैतानि फलान्यस्मा-दत्रानयाम्यहं सदा ॥ ४४ ॥ पर्वतोऽयं महानुच्च. एकमार्गोऽभितः सदा । मां विनान्यो गिरेरस्यो-परि गंतुं न कोऽप्यलं ॥ ४५ ॥ अस्मिंश्च मार्गे कोशादि, वेद्मि वृद्धक्रमादहं । चल्यतां गम्यते तत्र, दृश्यतामखिलो गिरिः ॥ ४६ ॥ समित्रस्तत्र राजेंद्रो,

भिल्लेन सह तं नगं । हर्षादालोकयामास, गुहाशृंगवनादिकं ॥ ४८ ॥ एकं पल्वलमुत्फुल्ल–कमलं विमलं जलैः । तत्र श्रमापनोदाय, स्नातवान् कुमरस्तदा ॥ ४९ ॥

ततः सदाफलोद्याना–द्विजयासुर्यधिष्ठितात् । समित्रस्य कुमारस्य, भिल्लो भुक्त्यर्थमानयत् ॥५०॥ पक्का अपक्का द्राक्षास्ताः, साक्षात्सुधा इव प्रधीः । पक्कान्याम्राणि कम्राणि, राजादनानि तानि च ॥५१॥ फलानि नालिकेराणां, कदलीनां त्वनेकशः । खर्जूरीणां च जंबूनां, जंबीरीणां विशेषतः ॥ ५२ ॥ सुधामाधुर्यपूराणि, बीजपूराणि भूरिशः । नारंगाणि सुरंगाणि, दाडिमान्यसमानि च ॥ ५३ ॥ क्षीरामलकपील्लूनां, पनसानां फलानि च । सचारुकलिकाचारु–बीजानि करणानि च ॥ ५४ ॥ गुंदीशृंगाटकालुंका ( च )–बदरीचिर्भटादि च । शाकस्थानेऽप्यपक्काम्ला–म्लिकोपोन्निंबुकानि च ॥५५॥ पेयानि मृदुमृद्वीका–पानकान्यब्जिनीदलैः । फलानां नालिकेरीणां, सरसानि रसानि च ॥ ५६ ॥ पृथुलानि निर्मलानि, नागवल्लीदलानि च । एलालवंगलवली–फलजातिफलाद्यपि ॥ ५७ ॥ भोगार्थं शतपत्रीद्यान्, पक्क (घा–शोक) चंपककेतकीः । मालतीमल्लिकाकुंद—मुचकुंदसुमानि च ॥५८॥ नयभिन्नकुलक्कं ॥ तत्सर्वं सफलीकृत्य, भूधरं तं स भूधरः । समंतात्प्रविलोक्याह, गिरिरेषोऽतिसुंदरः ॥५९॥ देव्यादेशात्पुरं रम्यं, ममये स्थापयिष्यते । शास्त्रोक्त्या मध्यशृंगेऽत्रा–र्हच्चैत्यं कारयिष्यते ॥ ६० ॥.

ततस्तत्र कियत्स्थित्वा, शिक्षां भिल्लस्य तादृशीं । दत्त्वा तौ जग्मतुः साध्वौ, पथि चातपबाधितौ ॥ ६१ ॥ सरःपाल्यां स्थितौ तत्रा–ययौ कोऽप्यध्वगस्तदा । तत्करे पंजरं तस्मिन्, शुकयुग्मं विशारदं ॥ ६२ ॥ युग्मं ॥ तद्वीक्ष्यालाप्य शास्त्रोक्त्या, मिथुनं हृष्टवान्नृपः । तं पप्रच्छ कुतो लब्ध–मिदं त्वमसि विक्रयी ॥ ६३ ॥ सोऽवग्नंदिपुरे राजा, हरिषेणस्तदं-

गजा। या तारलोचना तस्या, एतच्चयाद्य मत्करात् ॥ ६४ ॥ वीणापुरेऽत्र पद्मश्री-सख्याः प्रैषि प्रमोदतः। अन्यच्च मन्मुखादस्या ज्ञापितं तारया त्विदं ॥ ६५ ॥ आयास्यंति नृपा नैके, तव स्वयंवरोत्सवे। तद्दिनोपर्यहं तत्रा-यास्यामि तत्र निश्चितं ॥ ६६ ॥ इतस्तत्राह राजापि(ना कोऽपि), सत्यं वीणापुरेऽद्भुतः। मंडपो जायमानोऽस्ति, स्वयंवरणहेतवे ॥ ६७ ॥ क्ष्मापस्तं मंडपं द्रष्टुं, समित्रस्तत्र जग्मिवान्। तत्रानेके जनाः संति, नृपसामंतमंत्रिणः ॥ ६८॥ सर्वान् विस्मापयंस्तांस्तान्, श्रीचंद्रः प्राप मंडपं। हरिवैतालिकस्तत्रो-पलक्ष्य तमवर्णयत् ॥६९॥ तद्यथा-पात्रे पुण्यनिबंधनं तदितरं दीने दयाख्यापकं, मित्रे प्रीतिविवर्धनं रिपुजने वैरापहारक्षमं। भट्टादौ च यशस्करं नरपतौ सन्मानसंपादकं, भृत्यैर्भक्त्यतिपोपि दानमफलं श्रीचंद्र! न क्वापि ते ॥७०॥ तथाऽन्यच्च-जो परणारीसहोअर, दुत्थियपरदुक्खकायरो सययं। परउवयारपरो सो, मग्गणकप्पद्दुसिरिचंदो ॥७१॥ इत्यादि कथयेद्याव-द्भट्टस्तावन्नृपोत्तमः। पूर्यतामिति तस्योक्त्वा, ददौ दानं तदोचितं ॥७२॥ अत्र ज्ञाता इवात्मानो, गम्यतेऽत इति ब्रुवन्। चचाल दिशि कौबेर्यां, रात्रावपि कुमारराट् ॥७३॥ निशीथे स च कस्मिंश्चि-त्सुष्वाप यक्षसद्मनि। प्रगे सुप्तोत्थितो भूमा-निमग्नस्य स्वममुक्तवान् ॥७४॥ मेरु(रौ)कल्पतरुच्छाया-श्रये स्त्री काचिदद्भुता। लक्ष्मीर्वा कुलदेवी वा, प्राशीर्वांके निनाय मां ॥ ७५ ॥ अधुनैव मयेदृक्षं, दृष्टं स्वप्नं महाफलं। तदद्यैव फलं किंचि-द्भाव्यात्मनां न संशयः ॥ ७६ ॥ इतस्तत्राटवीमध्या-त्काचिच्चकितलोचना। भास्वराभरणा मार्ग-त्रुटद्भव्यारुणांशुका ॥७७॥ सगर्भा सधवा नारी, तत्रायात्यतिवेगतः। श्रीचंद्रेणेक्षिता प्रोचै-रमृतांजनवद्दृशोः ॥ ७८ ॥ युग्मं ॥ तां वीक्ष्य सहसोत्थाय, स तस्याः संमुखं

१ 'यात्री यत्ते परः स मे' इति प्रतौ पाठः ॥

ययौ । पतित्वा पदयोर्द्वंद्वं(तत्पदद्वंद्वे), मातरागम्यतामिह ॥७९॥ किं दुःखेन मनःखेदा-दप्यलं पूरिता(पूर्यतां) भिया। कासि त्वं कथमत्रैका-स्मद्भाग्यान्मिलितात्र च ॥ ८० ॥ इति तद्वचनं श्रुत्वा, तं दृष्ट्वा हृष्टवत्यसौ । तच्चैत्यमंडपे याव-दुपाविशति तावता ॥८१॥ श्रीचंद्रस्याभिधामुद्रां, वीक्ष्य तामुपलक्ष्य च । अचटत्स्तनयोः स्तन्यं, तस्या हर्षप्रकर्षतः ॥ ८२ ॥ युग्मं ॥ तदा तन्नालमालोक्य, मावोचद्वत्स ! किं भवान् । लक्ष्मीदत्तगृहे ख्यातः, श्रीचंद्र ओं स इत्यवक् ॥८३॥ ततः श्रीचंद्रमंकं स्वं, नीत्वा हर्षाश्रुवारिभिः । सा बाढं स्नपयामास, रुरोद च पृथुस्वरं ॥ ८४ ॥ अहं सूर्यवती वत्स !, त्वन्माता त्वं च मे सुतः । पुत्र ! त्वं द्वादशे वर्षे, दिष्ट्याद्य मिलितोऽसि मे ॥ ८५ ॥ इत्युक्त्वा दृढमालिंग्या-भूद्दर्पग्रथितेव सा । श्रीचंद्रोऽपि गवित्रीं स्वां, तां ज्ञात्वा मुमुदेतरां ॥ ८६ ॥ उवाच च कथं मात-स्त्वं माता मे कथं पुनः । तवावस्थेदृशी वस्त्रलौहित्यं च कथं वद ॥ ८७ ॥ ततः सूर्यवतीमाता, मूलतश्चरितं निजं । विवाहादि निमित्तज्ञ-वाक्यस्वप्नादींदुभक्षणं ॥ ८८ ॥ नाममुद्रादि पुष्पांत-मोचनादि गुरोर्वचः । ज्ञानिसाधुवचो याव-त्तदग्रे जगदेऽखिलं ॥ ८९ ॥ युग्मं ॥ ततोऽधुनाथ गर्भासे-र्दोहदो विषमोऽजनि । यद्रक्तदीर्घिकामध्ये, जाने क्रीडां करोम्यहं ॥९०॥ राज्ञा च मंत्रिणो वाक्या-ल्लाक्षारसप्रपंचने । दीर्घिकांतरहं रेमे, वनेऽभितो भटैर्वृते ॥ ९१ ॥ रंत्वा तत्र चिरं मां त-त्तटस्थामेत्य सत्वरं । गृहीत्वाद्रामिषभ्रांत्या, खे भारंडखगो ययौ ॥९२॥ भ्रामं भ्राममहोरात्र-मत्रागत्य शिलोपरि । नमोऽर्हद्भ्य इति प्रोच्चै-र्जल्पंतीं रुदतीं खगः ॥९३॥ मामाधाग विमुच्याशु, गायं कापि ययौ स्यात् । दयामहं निशां नीत्वा, द्विश्वस्यामचलं प्रगे ॥ ९४ ॥ युग्मं ॥ दुष्टश्वापदनादोर्घै-र्बिभ्यंती दंपतोऽधुना । अत्रागता तनूज त्वां, प्राप्याजनि प्रमोदिनी ॥ ९५ ॥ अभिग्रहाश्च सर्वेऽपि, पूर्णीभूता

गमाय ते । त्वत्पितुर्दुःसहं दुःखं, भावि त्वन्मद्वियोगतः ॥ ९६ ॥

इति मातृवचः श्रुत्वा, श्रीचंद्रश्चक्रि(क)वान् स्तुतिं। मातः! पुण्यतरुर्मेऽद्य, फली यत्त्वमिहामिलत् ॥ ९७ ॥ धन्योऽहं कृतपुण्योऽहं, कृतकृत्योऽभवं तथा । जज्ञेऽद्यानभ्रवृष्टिर्मे, यदृष्टा त्वं मया प्रगः (प्रगे) ॥९८॥ यतः-ऊ(व्यू)ढो गर्भः प्रसवसमये सोढमत्युग्रशूलं, पथ्याहारैः स्नपनविधिभिः स्तन्यपानप्रयत्नैः । विष्ठामूत्रप्रभृतिमलिनैः कष्टमासाद्य सद्य-स्त्रातः पुत्रः कथमपि यया सूयते सैव माता ॥ ९९ ॥ इत्यादि ॥ गुणचंद्रेण निःशेषं, श्रीचंद्रचरितं तदा । राज्याः प्रोक्तमलं तेन, हृष्टा सूर्यवती प्रगः ॥ स्थिरं ॥ इतस्तत्रागताः (श्रैयरुः) केऽपि, जनाः पदावलोकिनः । साश्वौ तत्रोपविष्टौ तौ, वीक्ष्य हृष्टाश्च ते जगुः ॥१॥ मंत्रिसिंहासितौ तौ स्तो, मंत्री गजाध्युक्तदा । तत्रैत्य तं नृपं भास्व-द्भालं नत्वा व्यजिज्ञपत् ॥ २ ॥ देव ! वीणापुरेशस्य, मंत्र्यहं बुद्धिसागरः । प्राग्दृष्टा या त्वया भूप-पुत्री. त्वय्यनुरागिणी ॥ ३ ॥ त्वन्मंत्रिणि च मत्पुत्री, तद्विज्ञाय नृपः स मां । प्राहिणोत् श्रीमतां शुद्ध्यै, सर्वत्रालोकितौ युवां ॥४॥ परं नासौ तु कुत्रापि, राज्ञा पुत्र्या निवेदितं । एता स्वयंवरे पुत्रि, न ते त्वमुपलक्षिता (?) ॥५॥ तावता तत्र नंदीश-हरिषेणतनूजया । तारलोचनया कीर-युग्मं प्रहितमागतं ॥६॥ सभासीननृपांगणा, सा पद्मश्रीः सुता तदा । तं कीरं सारिकां तां च, दृष्ट्वा मुमूर्छ सत्वरं ॥७॥ वाताद्यैर्लब्धचैतन्या, पृष्टा भूपतिनाह सा । मम जातिस्मृतिर्मेऽभू-त्प्राग्भवेऽहं कुशस्थले ॥ ८ ॥ देवीसूर्यवतीपार्श्वे-ऽभूवं कर्कोटजा शुकी । तत्र श्रीआदिनाथस्य, प्रासादे नागावलिः ॥ ९ ॥ यं समीक्ष्य वरं कृत्वा, विदधेऽनशनं मया । स एवात्रागतो दृष्टो, वरं कुर्वे तमेव हि ॥ १० ॥ त्रिभिर्विशेषकं ॥ एवमागा नास्ति सा याव-त्तावत्तत्रायो हरिः । सोऽवक्स्वयंवरे दृष्टः, श्रीचंद्रः स्वसुहृद्युतः ॥११॥ रात्रावेव नृपेणाहं,

ग्रहितः गैन्यभट्टयुक् । दृष्टस्त्वमत्र भाग्येन, देव पादावधार्यतां ॥ १२ ॥ तदोपलक्षिता राज्ञी, भट्टेन सूर्यवत्यपि । ततः पत्नी-गुतायुक्त-स्तत्रागात्तत्पुरेश्वरः ॥ १३ ॥ प्राग्वचःस्मरणात्तेषा-मन्येऽपि मिलितास्तदा । हर्षोऽभूच्च प्रवेशेऽत्र, जाते भट्टो जगौ हरिः ॥ १४ ॥ तथाहि-पुव्वं कुसत्थलम्मि य, णयरुज्जाणम्मि पढमजिणभवणे । जो दट्ठूण सुईए, चरिओ सो जयउ सिरिचंदो ॥ १५ ॥ अट्ठाहिआण अंते, गुरुवयणाओ य अणसणे सिद्धा । वीणापुरम्मि जाया, पउमसिरी सा सुईजीवो ॥ १६ ॥ पढमं निवपुत्तीए, वरिओ जाईसरे तओ जाए । पउमसिरीए सोच्चिय, उवलक्खिओ जयउ सिरिचंदो ॥ १७ ॥ तथा-गब्भे वरवीरसुए, मोणियरहडोहले तहा (या) जाए । भारंडेणाणीया, सिरिगिरिपासम्मि जा मुक्का ॥ १८ ॥ सा सूरियवइजणणी, मिलिया वरिसे दुवालसे जस्स । सिरिपव्वयस्स निवए (ङ), सो निव्वई जयउ सिरिचंदो ॥ १९ ॥ तथा-च-कणगपुरे कणगज्झय-भूआकणगाउलीइ सह रज्जं । पालइ सुरीइ दिन्नं, नवलक्खपहू अ सिरिचंदो ॥ २० ॥ इत्यादि ॥

[1] धर्मघरसादयः सर्वे, तस्मै दानं महद्ददुः । जनन्याग्रहतस्तत्र, श्रीचंद्रेण महीभुजा ॥ २१ ॥ पद्मश्रीर्नृपतेः पुत्री, तत्रैता तारलोचना । परिणीता स्वमित्रेण, कमलश्रीश्च मंत्रिजा ॥२२॥ सुधर्मं। श्रेणिकोऽवग्जगन्नाथ!, प्राग्भवस्नेहतो यथा । पद्मश्रीः सा शुकीजीवः, श्रीचंद्रमधुणोदय ( णोत्तथा ) ॥ २३ ॥ प्राग्भवे गुणचंद्रस्य, कः स्नेहः कमलश्रिया । भगवानाह भूपाल!, प्रागभूद्वरणो हि यः ॥ २४ ॥ स श्रीशत्रुंजये गत्वा, षष्ठाष्टमतपोभरैः । परमेष्ठिपदध्याना-द्धतहत्योऽभयरक्षणात् ॥ २५ ॥ त्रिभिर्विशेषकं । इतः सिंहपुरे याभूत्, श्रीदेवी सा मृता ततः । जातानंदपुरे पुत्री, सुंदरश्रेष्ठिनो गृहे ॥ २६ ॥ जिनदत्ताभि-

१ ' मन्योऽन्यमिलनात्तदा ' इति प्रतौ पाठः ॥

धानेन ( नित्यं ), जिनवाक्यक्रियारता । सा क्रमाद्यौवनं प्राप्ता, पतीहा तेन ( नैव ) तद्धृदि ॥ २७ ॥ युग्मं ॥ पित्रा सह कुमारी सा, संघं लात्वान्यदा गता । सिद्धाद्रौ तीर्थयात्रार्थं, तत्र तं धरणं तदा ॥ २८ ॥ तीर्थसेवाकरं वीक्ष्य, हृष्टा प्राग्जन्मयोगतः । ज्ञाततत्प्राक्चरित्रा च, प्राग्जातिस्मृतिमाप सा ॥ २९ ॥ युग्मं ॥ तद् ज्ञात्वा क्षामयित्वा तां, धरणोऽनशनं व्यधात् । संलेखनातपश्चक्रे, सा बाला ब्रह्मचारिणी ॥ ३० ॥ धरणस्तीर्थमाहात्म्या-द्गुणचंद्रोऽभवच्च सः । जिनदत्तापि सा तस्मा-त्कमलश्रीरभूदिह ॥ ३१ ॥ ततस्तस्य तया सार्धं, विवाहोऽभूत्सविस्तरः । श्रीचंद्रस्तत्र राजाभू-द्दानशालाविधायकः ॥ ३२ ॥

इतः कुशस्थले मैपि, प्रतापसिंहभूभुजे । पक्षुभिः करभीभिर्द्रा-क्स मंत्री बुद्धिसागरः ॥ ३३ ॥ कनकाख्यपुरेऽत्रस्यां, शुद्धिं लक्ष्मणमंत्रिणः । प्रोच्य पश्चात्पितुर्ग्रामे, कथयेस्तां सविस्तरं ॥ ३४ ॥ श्रीगिरौ तेन भिल्लेन, स्वर्णखानी प्रदर्शिता । राज्ञा च वासितं तत्र, श्रीचंद्रपुरपत्तनं ॥ ३५ ॥ प्रोच्चप्रप्रतोल्यादि-मठौघमंदिरादिभिः । वाप्यारामसरःकूपै-स्तत्पुरं शुशुभेतरां ॥ ३६ ॥ मध्यशृंगे चतुर्द्वारं, जिनचैत्यं महोच्चकं ( च्चयं ) । श्रीचंद्रः कारयामास, चंद्रस्वाम्यभिधं निधे ॥ ३७ ॥ सर्वतो वासिता भीमा-टवी तेन पुरैर्वरैः । तन्मर्मज्ञः स भिल्लश्च, चक्रे त(य)त्कृत्यकारकः ॥ ३८ ॥ प्राच्यपुण्यप्रसादेन, स्पर्शोपलप्रसादतः ( प्रभावतः ) । स्वर्णखन्यादियोगेन, श्रीचंद्रः सकलां भुवं ॥३९॥ प्रीणयामास सर्वत्र, दानपुण्यमहोत्सवैः । प्रासादैर्धर्मशालाभिः, प्रपाश्रमगृहादिभिः ॥ ४० ॥ युग्मं ॥ एकदा दानशालायां, कोऽप्यागादध्वगः स च । राज्ञा पृष्टः कुतोऽत्रैतः, सोऽवकत्पाणसत्पुरात् ॥ ४१ ॥ कनकाख्यपुरस्यात-र्भूत्वाद्याहं समागमं । तत्पुरेशे गते क्वापि, तन्मंत्रिलक्ष्मणोपरि ॥ ४२ ॥ तद्देशं लातुमायातः, षड्(सद्) भूपैर्गुणविभ्रमः । चतुरंगचमूयुक्तो, मंत्री तत्सन्मुखोऽभवत् ॥ ४३ ॥

॥गाभोंविशेषक॥ तांन्निशम्य नृनाथेन, मंत्रं कृत्वा रिपूपरि । प्रहिताः पद्मनाभाद्या, गुणचंद्रश्च सैन्ययुक् ॥ ४४ ॥ तत्प्रयाणत्रिकं यावत्–तत्सार्थं स स्वयं गतः । ततश्च चंद्रहासासिं, तेषां प्रभास्पदं ददौ ( प्रभ्वास्पदेऽर्पयत् ) ॥ ४५ ॥ तान् प्रसा(चा)ल्य ततः पश्चा–द्व(च)लन् स श्रीगिरिं प्रति । समंताद्वीक्षमाणश्च, पथि ग्रामान्नथो(वो)र्पितान् ॥ ४६ ॥ कस्मिन्नपि पुरे रात्रौ, स्थिते तत्कटकेऽल्पके । श्रीचंद्रो नष्टचर्यायां, पांथकुट्यां समाययौ ॥ ४७ ॥ युग्मं ॥ तत्रैकः पथिकोऽवोच–त्कल्येऽहं कुंतले पुरे । सुप्तोऽभवं बलाद्रात्रौ, सुधनश्रेष्ठिनो गृहे ॥ ४८ ॥ कृपणोऽसौ सुतास्तस्य, चत्वारो द्वे(ऽद्वे)गता निशि । तद्वध्वश्च चतस्रोऽपि, मध्यरात्रे समुच्छ्रिताः ॥ ४९ ॥ स्नात्वा ताः कृतशृंगारा, गतास्तद्वाटकद्रुमे । विस्पन्नहं न तत्रागां, निशांते चागतास्तथा ॥ ५० ॥ ततश्च चलितोऽथाह–मागतः पंचयोजनीं । श्रुत्वेति चंद्रभूनाथः, सैन्यं मुक्त्वैककोऽचलत् ॥ ५१ ॥ सोऽदृश्यो गुटिकायोगा–त्संध्यायां तत्पुरे ययौ । सुधनश्रेष्ठिनो गेहे, रात्रौ विश्राममासवान् ॥ ५२ ॥ तथैव तन्निशीथे ता, उत्थिताः कृतमंडनाः । गृहोपवनिकामध्ये, जग्मुस्तदनु भूपतिः ॥ ५३ ॥ शमीवृक्षोपरिस्थास्ताः, मिथः प्रोचुः क यास्यते । तास्वेका प्राह यत्कल्ये, कर्कोटे श्रुतमात्मभिः ॥ ५४ ॥ विलोक्यं तु तदद्यास्ति, तेन तत्रैव चल्यतां । श्रीचंद्रोऽपि शमीमूले, द्रुतमध्यास्ततश्च ताः ॥ ५५ ॥ योगिन्यै खर्परामुख्यै, विद्यादात्र्यै नमोऽस्तु नः । इत्युक्त्वा मंत्रयोगेन, तं खे वृक्षमचालयन् ॥ ५६ ॥ त्रिभिर्विशेषकं ॥ गताः क्षणेन कर्कोट–द्वीपे ताः पुरसन्निधौ । सुस्थाने ते तरुं मुक्त्वा, पुरांतः कौतुकाद्गताः ॥ ५७ ॥ पश्चा तेनैव भूपोऽपि, क्रीडन् पुरांतराययौ । तासु क्वापि गतास्वेष, कौतुकानि विलोकयन् ॥ ५८ ॥ सिंहद्वारपुरोभागे, नानाचंद्रोदयान्विते । विचित्रे मंडपे प्रौढे, प्रदीपावलिभासिते ॥ ५९ ॥ स्थापितं पादपीठाग्र्यं, मणिमौक्तिक-

चित्रितं । सज्जं सिंहासनं दृष्ट्वा, विजनत्वं च भूपतिः ॥ ६० ॥ किंचिद्विमृश्य तत्रैत्य, लसल्लीलमुपाविशत् । वक्त्रादाकर्ष्य गुटिकां, करासिर्निर्भयश्च सन् ॥६१॥ त्रिभिर्विशेषकं ॥ तत्पार्श्वस्थापितस्थाल्यां, तांबूलास्वादनं व्यधात् । तत्रैव स्थापितादर्शे, स चक्रे स्वमुखेक्षणं ॥६२॥ ततश्च सहसा प्रादु-र्भूय वस्त्रांतरस्थिताः । तत्रागत्य नराः प्रोचु-र्जय जीवेति केचन ॥ ६३ ॥ अन्ये वाद्यलसद्गीत-नृत्यादिषु प्रवर्त्तिताः । एके जल्पंत्यहो भाग्यं, सर्वेषां फलितं न्विति ॥ ६४ ॥

इतस्तत्र भटैर्युक्तं, तत्पुरेशं समागतं । वीक्ष्योत्थाय कुमारेण, नत्वा सोऽपृच्छि चात्र (च्छयदो हि) किं ॥ ६५ ॥ तत्रोपविश्य भूपश्च (भूपोऽवग्), नीत्वांके तं स्फुरद्द्युतिं । कुमारमवददत्रा(मयवन्नत्रा)-स्मद्भाग्याच्चमिहागतः(मः) ॥ ६६ ॥ अस्मिन् कर्कोटकद्वीपे, पुरे चाभासनामनि । रविप्रभोऽस्म्यहं राजा, नव पुत्र्यश्च संति मे ॥ ६७ ॥ नाम्नैताः कनकसेना, सुंदरी मंजरी प्रभा । आभा माला रमा चूला, नवमी तु मनोरमा ॥ ६८ ॥ताः क्रमाद्यौवनं प्राप्ता, वीक्ष्य चिंतातुरोऽभवं । सभायामन्यदापृच्छि, कोऽपि नैमित्तिको मया ॥ ६९ ॥ आसां पृथक्पृथग्भावी, भर्तैक एव वा कदा । किंचिद्विलोक्य स प्राह, भावी चा(आ)सां वरो महान् ॥ ७० ॥ परद्वीपेऽस्त्यसौ तत्र, मद्ज्ञानप्रसरो न हि । तेन वेद्मि न तन्नाम-स्थाननामादिकं परं ॥ ७१ ॥ स एता दशमीघस्रे, मध्यरात्रादनु स्वयं । तद्दिनोपरि सामग्र्य-स्तद्वाक्याच्चक्रिरेऽखिलाः ॥७२॥ युग्मं ॥ तद्दिनं चाद्य जज्ञेऽस्मिं-स्तेनोक्तं मिलितं समं । अथाद्यास्त्यधुना लग्नं, कुरु कन्याकरग्रहं ॥ ७३ ॥ कुमारेण, तदा कन्या-स्ता नवापि तदाग्रहात् । परिणीतास्तदीक्षार्थ-माययुस्तत्र पूर्जनाः ॥ ७४ ॥ श्रेष्ठिवध्वोऽपि दंपत्या-लोकनार्थं तदाययुः । तं वीक्ष्य ताश्च तत्रोचु-रहो योगोऽद्भुतोऽभवत् ॥७५॥ ता वीक्ष्य कुमरो दध्या-वेता यास्यंति तर्ह्यहं । अत्रस्थः किं करिष्ये त-द्याम्येताभिरहं सह ॥ ७६ ॥

विचिंत्येति सुधीश्छन्नं, पारिणेत्रांचले स्वके । प्रतापसिंहपुत्रोऽहं, श्रीचंद्रोऽस्मि कुशस्थले ॥ ७७ ॥ कुंकुमेन लिखित्वेति, तद्विवाहविधेरनु । तत्सौधोर्ध्वभूमौ प्राप, निशांते निजवेषभृत् ॥ ७८ ॥ मुद्रां कनकसेनाये, स्वां संमर्प्य तदीयकां । तामादाय वपुश्चिंता-मिषेणागात्तथैव सः ॥ ७९ ॥ त्रिभिर्विशेषकं ॥ शमीवृक्षांतिके यावदागतः पश्यति तदा । पुरात्तत्रैत्य षड् नार्य, उपविष्टास्तदग्रिमा ॥ ८० ॥ योगिनी खर्परान्योमा, ताश्चतस्रश्च तासु सा । खर्परावगुमे ह्येता, दुःखिताः स्वगृहेऽभवन् ॥ ८१ ॥ युग्मं ॥ एकदाहं गता तत्र, भिक्षार्थमाभिरद्भुता । भिक्षा दत्ता तया तुष्टा, ताभ्यो विद्यामदामिमां ॥ ८२ ॥ ताः प्रति प्राह भो भद्रा !, उमैयं (मेयं)मम शिष्यिणी । कांतेऽस्याः प्रथमे नष्टे, सा चक्रे त्वपरं पति ॥८३॥ अत्रत्याश्चर्यवीक्षार्थ-मागता मिलिता वयं (रं) । अथवा कौतुकं द्रष्टुं, यास्यावो वै कुशस्थले ॥ ८४ ॥ तत्र किं कौतुकं ताभिः, पृष्टा सा खर्परा जगौ । तत्र प्रतापसिंहोऽस्ति, तस्य सूर्यवती प्रिया ॥ ८५ ॥ सा रक्तदीर्घिकामध्ये, प्रक्रीड्य तत्तटस्थिता । भारंडेनापजह्रे त-द्वियोगाद्दुःखितो नृपः ॥८६॥ मंत्रिभिः स्थापितः कष्टा-दद्य यावदथ प्रगे । राज्यं सूर्यवतीसूनो-र्देयमेवेति मंत्रिणः ॥८७॥ शिक्षां दत्त्वा म उद्याने, गत्वा पौरजनैः सह । गोत्रदेव्याश्च मूर्त्यग्रे, विधाता काष्ठभक्षणं ॥ ८८ ॥ त्रिभिर्विशेषकं ॥ तदा चेद्गोत्रदेवी मा, किंचित्तत्कथयिष्यति । परिवारयुतस्तर्हि, नृपः स्वस्थीभविष्यति ॥ ८९ ॥ उमायुक्खर्परेत्युक्त्वा, स्ववृक्षेऽगात्ततश्च ताः । पुरेऽस्मिन् वयमायामः, परं स्वल्पास्ति शर्वरी ॥९०॥ तथापि तत्पुरीमध्ये, भूत्वा स्वपुरि यास्यते । इत्युक्त्वा तास्तरौ ( स्वतरौ ) तस्थुः, श्रीचंद्रो ह्यचिंतयत् ॥ ९१ ॥ अहं कुशस्थले यामि, मद्भाग्यान्मिलिते इमे । उपायेन हि तातस्य,

१ 'याव-दद्यः सोऽस्ति तावता ।' इति प्रतौ पाठः ॥ २ 'बलीयकेऽपरं पति' इति प्रतौ पाठः ॥

तच्छुद्धिं ज्ञापयाम्यहं ॥ ९२ ॥ ध्यात्वेति खर्पराधृक्षे, स्थितः श्रीचंद्रभूपतिः ( श्रीपर्वतेश्वरः )। क्षणात्कुशस्थलं प्राप, तद्वृक्षाद्याभवत्पृथक् ॥ ९३ ॥ मनुष्यशतसंकीर्णं, तद्वनं वीक्ष्य सोऽग्र(ग्र्य)धीः । जज्ञेऽवधूतवेषेण, नैमित्तिकनरस्तदा ॥ ९४ ॥ स नृपो गोत्रदेव्यग्रे, चितापार्श्वे समेत्य च । आत्मानं पातयेद्याव-त्तावता स निमित्तवित् ॥ ९५ ॥ प्रतीक्षध्वं प्रतीक्षध्वमिति तत्राययौ वदन् । राजापि तं पुरस्कृत्य, पप्रच्छ विधिनामुना (दा) ॥९६॥ युग्मं ॥ किं जल्पस्युत किं वेत्सि ?, स जगौ तिथिपत्रयुक् । यद्वेत्तोस्तव भूपाल ! दुःखं तत्त्वं हि मा कृथाः ॥ ९७ ॥ यत्ते सूर्यवती राज्ञी, जीवंत्यद्यापि वर्तते । सुस्थाने पुत्रयुक्ता च, स्तोकैर्घस्रैर्मिलिष्यति ॥ ९८ ॥ तत्क्षेमादिसमाचारा, एष्यंत्यत्र दिनाष्टके । श्रुत्वैतन्मंत्रिणो हृष्टाः, प्रोचुर्देवैष सत्यवाक् ॥ ९९ ॥ तेन घस्राष्टकं याव-त्प्रतीक्ष्यतां यतोऽत्र हि । गोत्रदेव्यायमानीतः, सत्यं भाव्यस्य सद्वचः ॥ २००[1]॥ चिं(चि)तां प्रध्वस्य संस्तुत्य, तं च (सुरीं) भूपः प्रमोदभाक् । निमित्तज्ञयुतः पुर्यां, प्रवेशं सोत्सवं व्यधात् ॥ १ ॥ ततः स कुमरश्छन्न-स्तौ वृक्षौ वीक्षितुं वने । गतस्तत्र परं त्वेष, द्वयोरेकं ददर्श न ॥ २ ॥ मध्याह्ने क्षुधितो योगी, नृपोऽपि भुक्तवान् विधेः । राज्ञापृच्छि वयस्यात्र ( स्यस्मिन् ), किं योग्यभूः स आह तं ॥ ३ ॥

देहस्नेहः स्वरमधुरता बुद्धिलावण्यलज्जाः, प्राणानंगः पवनसमता क्रोधहानिर्विलासाः । धर्मः शास्त्रं सुरगुरुनतिः शौचमाचारचिंता, भक्तापूर्णे जठरपिठरे प्राणिनां संभवंति ॥ ४ ॥ आधारे लिंगनाभौ हृदयकमले कंठदेशे ललाटे, द्वे पत्रे १ षोडशारे २ द्विदश ३ दश ४ दले द्वादशार्धे ५ चतुष्के ६ । वामांते ६ वालमध्ये ५ डफ ४ कठ ३ सहिते कंठदेशे

१ " स्वकागान् सारयामास, तावता " इति प्रतौ पाठः ॥

स्वराणा २-मित्येवं अक्षबीजे (जं) मकलजनहितं वर्णरूपं नमामि ॥ ५ ॥ गुदमूले आधारचक्रं चतुर्दलं, तत्र वशषसां मध्ये हकार(रः)लिंगमूले स्वाधिष्ठानचक्रं षट्कोणकं ( वभमयरल । ) नाभौ मणिपूरकचक्रं दशदलं-डफ(डढणतथदधनपफ) हृदयेऽनाहतचक्रं द्वादशदलं(क-ठ)-ग्रीवायां विशुद्धिचक्रं षोडशदलं, अआप्रमुखषोडशस्वरस्थापना ललाटे आज्ञाचक्रं दश(हक्ष)-द्व्यक्षरं, इत्यादि । दिनारात्रौ निमित्तज्ञ-सार्धं गोष्ठीमनेकधा । कुर्वन्नृपः सुखादस्था-रस्वात्मजं न विवेद तं ॥ ६ । अवधूतोऽपि तद्राज्ये, सर्वं मर्म विलोकयन् । पुरांतस्तु कदा गच्छेत्, स्वगृहे श्रीपुरेऽपि च ॥ ७ ॥

इतो जयादिभिर्मंत्र-श्चक्रे यदस्य भूपतेः । स्वयमेव प्रियादुःखा-त्पंचत्वमागतं ह्यभूत् ॥ ८ ॥ परं नैमित्तिकादस्मा-दास्थितं राज्य नः कथं । एतद्राज्यं भवत्येषा-मेकत्वत्र जगावहो ॥ ९ ॥ युग्मं ॥ चतुर्भिर्दिवसैर्लाक्षा-गृहमेकं विधाप्यते । पंचमे दिवसे तत्र, मुहूर्तं वासपूरणे ॥ १० ॥'मध्यापवरकस्यांत-स्तन्मुहूर्ते म(ऽस्म)दाग्रहात् । भूपः स्थास्यति तद्द्वारं, दत्त्वा तत्रानलश्च तुं ॥ ११ ॥ युग्मं,॥ तेषां मंत्रमदृष्टः स-न्निशम्य कुमरस्तदा । छन्नं लाक्षागृहं तत्र, जायमानं विबुद्ध्य च ॥१२॥ स्वस्यो(पुष्पया स्वो)पारकस्याना-त्सुरंगां द्रागकारयत् । सा तु लाक्षागृहं यावन्-निष्पन्नैव चतुर्दिनैः ॥ १३ ॥ युग्मं ॥ पंचमेऽह्नि जयादीना-माग्रहात्समहोत्सवं । सावधूतो गृहे तस्मिन्, प्रविवेश नृपस्तदा ॥ १४ ॥ द्वारं दत्त्वा च तैस्तत्र, मुक्तोऽग्निस्तावता नृपः । तद् ज्ञात्वा ज्ञानिनं प्राह, किमत्रैतदनीदृशं ॥ १५ ॥ ज्ञान्याह त्वत्सुता राज्य-लुब्धाः कूटमिदं व्यधुः । लाक्षागृहमिदं राजं-स्त्वां मां च हंतुमुद्यताः ॥ १६ ॥ धिगेषामिह लोभा(का)र्थे, तातहत्याविधायिनां । राजाचस्मृतिरत्रैता, मद्राध किं करिष्यते ? ॥१७॥ ज्ञानिना च सुरंगा सा-विश्चक्रेऽह्रिप्रहारतः । तस्यां ज्ञानियुतो भूपः, प्रविष्टो यावता तदा ॥१८॥

पपात सहसा गेहं, भस्मीभूय तदैव तत् । तन्निशम्य नृपो दध्यौ, विघ्नं मे कीदृशं गतं ॥ १९ ॥ युग्मं ॥ ततो ज्ञानिप्रशंसां तां, कुर्वन् क्ष्माभृत्पुनः पुनः । निःसृत्य तत्सुरंगातः, स्वसौधोर्ध्वे ततो ययौ ॥ २० ॥

इतः सज्ञानिनि क्ष्मापे, मृते ज्ञाते जयस्तदा । छत्रमुत्थापयामास, सभायां बंधुयुक्स्वयं ॥ २१ ॥ तदा क्षुब्धे पुरीलोके-ऽमात्येषु गतबुद्धिषु । सर्वोऽपि राजवर्गीय-जनः शोकाकुलोऽभवत् ॥ २२ ॥ कचिद्गुंबा कचिद्धाहा-रावं च रुदितं कचित् । श्रुत्वा नैमित्तिकोऽवोच-देव ! सर्वं पुरं हतं ॥ २३ ॥ लुंटयिष्यंति लुंटाकाः, पुरं कोशादिकं तथा । ततस्तत्र नृपाहूता, आयाता अंगरक्षकाः ॥ २४ ॥ जीवंतं स्वप्रभुं ज्ञात्वा, हृष्टा भूपाज्ञया भटाः । जयादींश्चतुरः पुत्रां-श्चिक्षिपुः काष्ठपंजरे ॥२५॥ ततः प्रतापसिंहेश-श्छत्रचामरशोभितः । नैमित्तिकयुतः साभा-मलंचक्रे सभां तदा ॥२६॥ ज्ञानिनः स्वर्णरत्नादि, दातुं लग्नः स बह्वपि । स तु नो लाति लास्यामि, कार्यसिद्धेरनु स्वयं ॥२७॥ द्वौ वारौ जीवदोऽसि त्वं, कार्यं मे किमतः परं । तत्त्वं गृहाण राज्यार्धं, भद्र ! मामनृणीकुरु ॥ २८ ॥ इति राजानिशं तस्य, दत्ते किं तु न लाति सः । परोपकारिणां पुंसां, यदभ्यायाति संपदः ॥ २९ ॥ युग्मं ॥

इतश्च सप्तमे पक्षे, करभीसैन्यसंयुतः । राजद्वारोचितस्थाने, मंत्र्यागाद्बुद्धिसागरः ॥ ३० ॥ वेत्रिविज्ञप्तभूपस्या-देशात्याप सभां स तां । तं वीक्ष्य कुमरो हृष्टो, गुप्तवेषः सभास्थितः ॥ ३१ ॥ राज्ञा पृष्टः स मंत्र्याह, मुक्त्वाग्रे पत्रिकाश्च ताः । देव ! वीणापुरादागां, त्वन्नंदनस्य मंत्र्यहं ॥ ३२ ॥ तत्र सूर्यवती देवी, क्षेमेणास्ति स्वपुत्रयुक् । श्रीचंद्रनृपतिस्तत्र, गुणचंद्रयुतो जयी ॥ ३३ ॥ तदीये कनकाभिख्ये, पुरे लक्ष्मणमंत्रिणः । मिलित्वा पथि तच्छुद्धिं, प्रोच्य तस्मादिहागमं ॥ ३४ ॥

देशं मुक्त्वा वनं ययौ ॥ ५१ ॥ त्रिदिन्या निर्मदो भूतो, गजस्तत्राद्रिसन्निधौ । सरस्यस्थाज्जलं पातु-मुत्तीर्णस्तत्करेण सः ॥ ५२ ॥ तत्र स्नात्वा जलं पीत्वा, तत्स्वाभाविकवेषभृत् । नाम्ना तं गजमामंत्र्या-रुरोह तत्पदेन सः ॥ ५३ ॥ इतश्च कटकं लात्वा, तत्पृष्ठौ भूपं आगमत् । रात्रौ सर्वत्र संशोध्य, पश्चादेतः पुनः प्रगे ॥ ५४ ॥ गजरत्नं गतं तादृ-ग्मम चित्तं न दुष्यति । स ज्ञानी जीवदायी मे, यादृग्दुनोति सत्यवाक् ॥ ५५ ॥ मया नोपकृतं किंचिद्, ज्ञानिनस्तेन मे पुनः । बह्वप्युपकृतं सांद्र-मिति राजा शशंस तं ॥ ५६ ॥

इतः स गजमौलिस्थ-स्तद्वने याति लीलया । तस्यां पल्ल्यां गिरौ कोऽपि, भिल्लपः शबरैः समं ॥ ५७ ॥ तथाविधं च तं वीक्ष्य, तद्भूपेभजिघृक्षया । तत्रेत्य हक्कयामास, कुमारं रे क यास्यथ ? ॥५८॥ युग्मं ॥ परितः किरतो बाणान्, भिल्लान् समीक्ष्य भूपजः । स्थितस्तत्सन्मुखीभूय, तच्छरान् वंचयंस्ततः ॥ ५९ ॥ संज्ञया हस्तिनोन्मूल्य, धृतया तरुशाखया । द्दपत्खंडैश्च भिल्लांस्तान्, विजिग्ये सोऽखिलान् बली ॥६०॥ भिल्लान् निर्धाट्य वृक्षाधः, स्थितः सोऽभान्म(सोऽयं म)हाद्युतिः । केन भिल्ला जितास्तत्तं, तद्भिल्ल्यो द्रष्टुमाययुः ॥६१॥ तत्र तं तादृशं वीक्ष्य, मोहिनी भिल्लपांगजा । मोहं प्राप्याह भिल्लेशं, तातैषोऽस्तु पतिर्मम ॥ ६२ ॥ नापरं वरमिच्छामि, तन्निशम्य स वेगतः । आगत्य कुमरं प्राह, हस्तौ नियोज्य सादरं ॥६३॥ क्षम्यतामपराधो मे, त्वं महानसि कोऽपि ना । त्वां वृणोति सुतेयं मे, तत्स्वीकुरु कनीमिमां ॥ ६४ ॥ भूपोऽथ भिल्लराजेयं, किराती क्षत्रियस्त्वहं । कथमेवं विवाहः स्या-न्मा कलंकोऽस्तु मत्कुले ॥ ६५ ॥ मया राजकनी मुक्त्वै-नां किं परिणयाम्यहं । मोहिन्याह प्रभो चत्तं, वृणोमि ते तदर्पय ॥ ६६ ॥ तेन तत्रार्पितं पश्चा-त्तया तत्पादुकार्थिता । हृदि त्वत्पादुकां लात्वा,

विधास्ये सफलं जनुः ॥६७॥ नाथाहं त्वद्गृहे बाह्य-प्रदेशस्था ह्यहर्निशं। करिष्ये बाह्यकर्माणि, भाविनी किंकरी तव ॥६८॥ नैवं चेदधुनैवात्र, करिष्येऽग्निप्रवेशनं । श्रुत्वेति मोहिनीवाचं, तेन स्वपादुकार्पिता ॥ ६९ ॥ उत्सवोऽभूत्तया [१]सार्धं, भिल्लेशः प्राह भूपतिं । मेलितं पद्विवाहार्थ-मस्यास्तच्चं गृहाण भोः (नः) ॥ ७० ॥ अश्वान् गजान् रथान् भृत्यान्, रैरत्नमौक्तिकादि च । मुमोच कुमरस्याग्रे, पङ्क्वागांसि भूरिशः ॥७१॥ तेषु तौ स्वौ हयौ वीक्ष्य, सुवेगं च रथं नृपः । हृष्टस्तौ स्वप्रभुं चाप्य, सहर्षैत्य प्रणेमतुः ॥ ७२ ॥ कृतहेषौ (सोचध्वानं) सहर्षौ तौ, नृत्यंतौ स्वकरेण सः । स्पृष्ट्वाभितस्थिरं स्नेहा-त्स्वीकृत्य भिल्लपं जगौ ॥ ७३ ॥ अहो कुतः कथं चैता-वत्रैतावदद्भुतं महत् । भिल्लोऽवक् श्रूयतां देव ! पल्लीयं कुंडलेशितुः ॥ ७४ ॥ अस्यां स्मश्च वयं भिल्ला-स्तत्सेवावशवर्तिनः । चौर्याजीविन एते त-द्भिल्लधाट्यां पुरा ययुः ॥ ७५ ॥ ते क्वापि कस्यचिन्मार्गे, गायनस्य रथं ललुः । नष्टे तस्मिन्नरे लात्वा, रथोऽयं तैर्ममार्पितः ॥७६॥ तद्दिनादद्य यावच्च, हयावत्रातिदुःखितौ । अहोरात्रं क्षरन्नीर-नेत्रौ तथै(त्रै)तयोः कृते ॥ ७७ ॥ मोहिन्येते भटाः सर्वे, नित्यं तिष्ठंति तत्पराः । मयास्याः करमुक्त्यर्थं; चक्रे सर्वमिदं परं ॥७८॥ युग्मं ॥ संप्रत्येतौ विहस्तास्यौ, तत्किं वद विशारद ! । कुमारः प्राह भिल्लेश ! मम हृज्जीवनाविमौ ॥७९॥ वायुवेगमहावेगौ, सुवेगश्चैष मामकः । अधुनैनं ग्रहीष्यामि, शेषं तु ज्ञास्यते पुनः ॥ ८० ॥ युग्मं ॥ मध्येऽमीषां भटानां च, क्षत्रियं कुंजराभिधं । स तदा सारथीचक्रे, जगाद च ह्ययं गजः ॥ ८१ ॥ देशे कौशस्थले प्रेष्यः, कुंडले वा पुरेऽत्र वा । अहं तु कनकाभिख्ये, पुरे यास्यामि सांप्रतं ॥ ८२ ॥ युग्मं ॥ मुद्रास्थितमिदं नाम, ज्ञेयं मे श्रूयतामथ । हिंसा त्याज्या चतुः-

१ ' चौर्यादिजीविनश्चैत-द्भिल्ला धाट्यां ' इति प्रतौ पाठः

पर्व्या-मारंभश्च विशेषतः ॥ ८३ ॥ तथाहि—

छन्हं तिहीण मज्झे, का तिही अज्ज वासरे । किं वा कल्लाणमं (गं) अज्ज, लोगनाहाणसंतियं ॥ ८४ ॥ यदुक्तं-पंचमांगे-अट्ठमीचउद्दसीपु-न्निमा य तह मावसा हवइ पव्वं । मासम्मि पव्वछक्कं, तिन्नि य पव्वाइ पक्खम्मि ॥ ८५ ॥ तथा यदुक्तं विष्णुपुराणे-चतुर्दश्यष्टमी चैव-मावास्या चैव पूर्णिमा । पर्वाण्येतानि, राजेंद्र ! रविसंक्रांतिरेव च ॥ ८६ ॥ तैलस्त्रीमाससंभोगी, पर्वस्वेतेषु यः पुमान् । विण्मूत्र (त्र) भोजनं नाम, प्रयाति नरकं मृतः ॥८७॥ मनुस्मृतावपि-अमावास्यामष्टमी च, पूर्णमासीं चतुर्दशीं । ब्रह्मचारी भवेन्नित्य-मत्र च स्नातको द्विजः ॥ ८८ ॥ हिंसा कदापि न कर्तव्या, यदुक्तं महाभारते-घातकश्चानुमंता च, भक्षकः क्रयविक्रयी । लिप्यंते प्राणिघातेन, पंचाप्येते युधिष्ठिर ! ॥८९॥ यावंति रोमकूपानि, पशुगात्रेषु भारत ! । तावद्वर्षसहस्राणि, पच्यंते पशुघातकाः ॥९०॥ तथा भारते शांतिपर्वणि प्रथमे पादेऽप्युक्तं-यदि प्राणिवधे धर्मः, स्वर्गश्च खलु जायते । संसारमोचका नोऽस्तु ( कानां तु ), कुतः स्वर्गोऽभिधास्यते ? ॥९१॥ यूपं कृत्वा पशून् हत्वा, कृत्वा रुधिरकर्दमं । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥९२॥ मार्कंडपुराणेऽप्युक्तं-जीवानां रक्षणं श्रेष्ठं, जीवा जीवितकांक्षिणः । तस्मात्समस्तदानेभ्यो-ऽभयदानं प्रशस्यते ॥ ९३ ॥ अहिंसा प्रथमं पुष्पं, पुष्पमिंद्रियनिग्रहः । सर्वभूतदया पुष्पं, क्षमा पुष्पं विशेषतः ॥ ९४ ॥ ध्यानं पुष्पं तपः पुष्पं, ज्ञानपुष्प तु सप्तमं । सत्यं चैवाष्टमं पुष्पं, तेन तुष्यंति देवताः ॥ ९५ ॥ सर्वत्रापि जीवयतना कार्या, उक्तं च महाभारते-यूकामत्कुणदंशादीन्, ये जंतून् तुदंति च । पुत्रवत्परिरक्षंति, ते नराः स्वर्गगामिनः ॥ ९६ ॥ तथा-विंशत्यंगुलमानं तु, त्रिंशदंगुलमायतं । तद्वस्त्रं द्विगुणीकृत्य, गालयित्वोदकं पिबेत् ॥ ९७ ॥

तस्मिन् वगे स्थितान् जीवान्, स्थापयेज्जलमध्यतः । एवं कृत्वा पिवेत्तोयं, स याति परमां गतिं ॥९८॥ ग्रामाणां सप्तके दग्धे, यत्पापं जायते किल । तत्पापं जायते पार्थ !, जलस्यागलिते घटे ॥ ९९ ॥ संवत्सरेण यत्पापं, कैवर्तस्येह जायते । एकाहेन तदाप्नोति, त्व(अ)पूतजलसंग्रही ॥ ३०० ॥ यः कुर्यात्सर्वकर्माणि, वस्त्रपूतेन वारिणा । स मुनिः स महासाधुः, स योगी स महाव्रती ॥१॥ इतिहासपुराणेऽप्युक्तं-अहिंसा परमो धर्मो, ह्य(र्मः, अ)हिंसा परमं तपः । अहिंसा परमं ज्ञान-महिंसा परमं पदं ॥ २ ॥ अहिंसा परमं दान-महिंसा परमो दमः । अहिंसा परमो यज्ञ-श्चा(ज्ञः, अ)हिंसा परमं श्रुतं ॥३॥ तमेवमुक्तमं धर्म-महिंसालक्षणं शुभं । ये चरंति महात्मानो, विष्णुलोकं व्रजंति ते ॥ ४ ॥

तथाभक्ष्याणि न भक्षणीयानि, उक्तं च नागपडलग्रंथे-मद्यपाने रता लोका, अकार्येषु रताः सदा । न शौचं न तपो ज्ञानं, न बुद्धिर्न च पौरुषं ॥ ५ ॥ मद्यपाने मतिभ्रंशो, नराणां जायते खलु । न धर्मो न दया तेषां, न ध्यानं न च सत्क्रिया ॥ ६ ॥ मद्यपाने कृते क्रोधो, मानो लोभश्च जायते । मोहश्च मत्सरश्चैव, दुष्टभाषणमेव च ॥ ७ ॥ मद्यं पीत्वा ततः कश्चि-न्मांसं न स्पृक्षयेन्नरः । कश्चिद्वधं करोत्युत्को (त्युग्रं), जंतुसंघातघातकः ॥ ८ ॥ मद्ये मांसे मधुनि च, नवनीते तक्रतो बहिर्नीते । उत्पद्यंते विपद्यंते, सुसूक्ष्मा जंतुराशयः ॥ ९ ॥ आगमेऽप्येवमेव-मज्जे महुम्मि मंसंमि, नवणीयम्मि चउत्थए । उप्पज्जंति असंखा य, तव्वण्णा तत्थ जंतुणो ॥ १० ॥ महाभारते मांसाधिकारे-हिंसाप्रवर्धकं मांस-मधर्मस्य च वर्धकं । दुःखस्योत्पादकं मांसं, तस्मान्मांसं न भक्षयेत् ॥ ११ ॥ तिलसर्षपमात्रं तु, यो मांसं भक्षयेन्नरः । स याति नरकं घोरं, यावच्चंद्रदिवाकरौ ॥१२॥ स्मृतावपि मधुनिषेधः-सप्तग्रामेषु (तु) यत्पाप-मग्निना भस्मसात्कृते । तत्पापं जायते जंतो-र्मधुबिंदुकभक्षणात् ॥ १३ ।

तथा इतिहासपुराणे-यो ददाति मधु श्राद्धे, मोहितो धर्मलिप्सया । स याति नरकं घोरं, खादकैः सह लंपटैः ॥ १४ ॥ तथा तत्रैव-यस्तु धृंताककालिंग-मूलकानां च भक्षकः । अंतकाले स मूढात्मा, न स्मरिष्यति मां प्रिये ! ॥ १५ ॥ यस्मिन् गृहे सदान्ना(ना)र्थं, मूलकः पच्यते जनैः । श्मशानतुल्यं तद्वेश्म, पितृभिः परिवर्जितं ॥ १६ ॥ पद्मपुराणे-गोरसं माषमध्ये तु, मुद्गादिकं तथैव च । भक्ष्यमाणं भवेन्नूनं, मांसतुल्यं युधिष्ठिर ! ॥१७॥ तथा रात्रौ भोजनं न कर्तव्यं, यदुक्तं मार्कंडपुराणे-अस्तंगते दिवानाथे, आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं, मार्कंडेन(य) महर्षिणा ॥ १८ ॥ स्मृतावप्युक्तं-सायं प्रातर्द्विजातीना-मशनं स्मृतिनोदितं । नांतरा भोजनं कुर्या-दग्निहोत्रसमाव(मो वि)धिः ॥ १९ ॥ इत्यादि ॥

यदा कुशस्थले स्थाने, स्वस्थीभूय स्थिरोऽभवं । तदैनां सुभटांश्च स्वी-कारयिष्याम्यहं स्वयं ॥ २० ॥ इति शिक्षां प्रदायैषां, सुवेगस्यंदनस्थितः । सह कुंजरसुतेन, स्वं पुरं प्रति सोऽचलत् ॥ २१ ॥ गच्छन् स पथि वेगेन, संध्यायां कुंडिने पुरे । बाह्योद्याने रथं मुक्त्वा, श्रीचंद्रस्तां पुरीं ययौ ॥ २२ ॥ तां विलोक्य स यामिन्यां, बहिःस्थे यक्षसद्मनि । सुप्तः क्षणं च तत्रैता, नृपपुत्री सरस्वती ॥ २३ ॥ लात्वा विवाहसामग्रीं, सुनामिका सुरूपिणी । सख्यावेते तदा मध्ये, सुप्तं वीक्ष्य तमूचतुः ॥ २४ ॥ श्रीदत्त ! मंत्रिघ्नो ! त्व-मुत्तिष्ठेमां कनीं वृणु । उत्थितः कुमरस्तत्र, परिणीतस्तया बलात् ॥ २५ ॥ यतः-यद्यपि कृतसुकृतलवतः ( सुकृतशतः ), प्रयाति गिरिकंदरांतरेषु नरः । करकलितदीपकलिका, विलोक्य लक्ष्मीस्तमनुयाति ॥ २६ ॥ ततः पुनः सुखात्सुप्तं, निश्चिंतं ताः पतिं जगुः । प्रभो ! बहिः करभ्यस्ति, चल्यतां गम्यते क्वचित् ॥ २७ ॥ स जगावधुना रात्रिः, पद्भ्यां यामि कथं भुवि । खेटनादि करभ्या मे, नैति तद् ज्ञास्यतेऽत्र ते (प्रगे) ॥ २८ ॥ तादृक्तास्तद्वचः

श्रुत्वा, न सोऽयं किं स्वयं परः। इति रत्नप्रदीपेन, सम्यग्विलोक्य तं जगुः ॥ २९॥ नाथ! कथंदना(कथंचना)लिप्त-भालस्त्वं कुत आगतः?। सोऽवक्पांथोऽहमेतोऽत्र, कुशस्थलात्कुतो वृतः ॥३०॥ का यूयं कथमत्रैताः, का भीरिति च कथ्यतां। सख्येकाह पुरस्यास्य, स्वामिन्! स्वाम्यरिमर्दनः ॥ ३१ ॥ तत्सुतेयं सदैवास्य, यक्षस्यार्चाविधायिनी। भूपः स्वांकस्थितां पुत्रीं, वीक्ष्य पप्रच्छ मंत्रिणः ॥ ३२ ॥ अस्या योग्यो वरः कोऽस्ति, तत्रैको याचको जगौ। कुशस्थले प्रतापेश-पुत्रोऽस्ति श्रेष्ठिवर्धितः ॥ ३३ ॥ श्रीचंद्रः स महात्यागी, रुष्टः सोऽगात्परं क्वचित्। तन्निशम्य नृपस्तूष्णी-मस्थादथैकदा निशि ॥ ३४ ॥ स्वप्ने जगाद यक्षोऽस्या, इतोऽहं पंचमे दिने। मद्धाम्नि लग्नवेलायां, निश्यानेष्यामि ते वरं ॥ ३५ ॥ युग्मं ॥ प्रगेऽभाषिष्ट तत्स्वप्न-मसदग्रेऽनया मुदा। स्वप्नं ज्ञात्वा तदावाभ्यां, यच्चक्रे तदथो शृणु ॥ ३६ ॥

इतथास्मिन् पुरे मंत्रि-सूनुः श्रीदत्तनामकः। कुमार्यां सोऽभवद्रागी, परं नास्या हि तद्रुचिः ॥ ३७ ॥ तेन प्रदर्श्य मे लोभं, बुद्ध्या चाहं वशीकृता। मयोक्तं तस्य तत्स्वप्नं, प्रच्छन्नमथ तद्धिया ॥ ३८ ॥ स्वामिन्यग्रे मया कूट-मुक्तं देवि! निशम्यतां। श्रीदत्तेनापि निश्यस्यां, ददृशे स्वप्नमीदृशं ॥ ३९ ॥ युग्मं ॥ श्रुत्वैतत्साह यद्येवं, यक्षोक्तिस्तत्तथास्तु मे। तेन निश्यद्य सात्रैता, सामग्री तद्धिया कृता ॥ ४० ॥ जानेऽहं सोऽद्य तत्पित्रा, किंचिद् ज्ञात्वा गृहांतरा। न्यस्तो भाव्यत्र यन्नागा-त्सुरोक्तिः स्यात्किमन्यथा ॥ ४१ ॥ भूपजाह पतिं देव-त्वयाहमपि वंचिता। मद्भाग्यं वर्ततेऽद्यापि, सोऽनिष्टोऽभून्न मे वरः ॥ ४२ ॥ यक्षदत्तस्त्वमेवाभू-र्वरो मे भाग्यवान् परं। आत्मनां तिष्ठतामत्र, तातोऽनर्थं करिष्यति ॥ ४३ ॥ सोऽवक्कांते! मनुष्योऽहं, मनुष्य एव सोऽपि हि। भयं किं क्रियते तस्मा-त्पश्यामि कीदृशोऽस्ति सः ॥ ४४ ॥

प्रभाते स जलैर्यावन्मुखप्रक्षालनं व्यधात् । भानुवद्बालमालोक्य, तं तत्र मुमुदे कनी ॥४५॥ यक्षपूजाकरस्ताव-त्तं दृष्ट्वा ताश्च तादृशीः । शीघ्रमागत्य भूपस्य, ज्ञापितं (स्या-ज्ञापयत्) तद्यथास्थितं ॥४६॥ नृपादेशेन सामात्य-स्तत्रागात्सैन्यपो बली । तं वीक्ष्य कंपमानांगीं, तां प्रियां प्राह भूपजः ॥४७॥ भद्रे ! मा भैर्वराकाना-मेषामुपरि यामि किं । भटाश्चैत्यबहिःस्थास्तं, जल्पंति नांतरेति कः ॥४८॥ ततस्तन्मंत्रिपृष्टोऽपि, स्वनामादि जगौ न सः । तद्भक्त्या भटात्रष्टान्, ज्ञात्वा तत्राययौ नृपः ॥४९॥ साह स्वामिन् ! पितान्याया-न्समाथ किं करिष्यते । कुमारेण मुदे तासां, स्वनामादर्शि मुद्रया ॥ ५० ॥ गृहीत्वा साररत्नानि, किंचित्प्रोच्य प्रियाश्रुतौ । सोंऽजनात्स्ववशीकृत्य, तां ततो नृपमभ्यगात् ॥ ५१ ॥ अग्रस्थान् वामतश्चैकान्, भटान् दक्षिणतोऽपरान् । हस्तेनाच्छोट्य भूपं तं, करिणं चारुरोह सः ॥ ५२ ॥ खड्गं लात्वा नृपं बध्ध्वा, निस्ससार तथैव सः । श्रीचंद्रं तत्र बंद्येक, उपलक्ष्य तदापठत् ॥ ५३ ॥ चोरगुहाओ जेणं, बंभपिया बालपुत्तविरहहया । विहिया नियपियसहिया, सो धीरो जयउ सिरिचंदो ॥ ५४ ॥ कुंडलपुरस्स रज्जं, चंदमुहीरायकन्नपरिणयणं । जक्खविहिणा ( वयणा ) उ विहियं, चंदउरं वासियं जेण ॥ ५५ ॥ सो कुंडलपुराहिवइ, सिरिचंदो जयउ पयावसिंहसुओ । संफुसइ जस्स तईया, जक्खो भत्तीइ पायतले ॥ ५६ ॥ ॥-युग्मं-॥-इत्यादि- ॥ तन्निशम्य कुमारस्तं, पूर्णीकृत्य धनार्पणात् । वने गत्वा रथस्थः सन्, वेगेन निर्ययौ ततः ॥ ५७ ॥ अथारिमर्दनो राजा, मंत्रिभिश्छिन्नबंधनः । श्रीचंद्रं भट्टतो ज्ञात्वा, हृष्टस्तद्दानशौर्यतः ॥ ५८ ॥ अहो गच्छति धीरोऽय-मानीयतां कनीवरः । भटास्ते धाविता नैके, पर नापुस्तमुत्तमं ॥ ५९ ॥ ततो वीक्ष्य नृपः पुत्रीं, व्याजरीं साश्रुलोचनां । मल्ल्यास्यादखिलं ज्ञात्वा, तत्कलां तं शशंस च ॥ ६० ॥ वत्से ! प्रतापसिंहस्य, सुतोऽयं ते वरोऽभवत् । गजाश्वादियुतां तत्त्वां, नेष्याम्यथ

कुशस्थले ॥ ६१ ॥ इत्युक्त्वा तस्य भक्तस्यो–चितं दत्त्वा च भूधनः । पुरेऽस्मिंस्तद्दिनाहस्यो–त्सवांश्चक्रे सविस्तरं ॥ ६२ ॥

इतस्तस्मिन् दिने गच्छन्, श्रीचंद्रः शकुनेरितः । कांचिन्महाटवीं प्राप, तस्यां निशि वटे स्थितः ॥ ६३ ॥ स तत्र स्रस्तरे पूर्वं, सुप्तो जाग्रति कुंजरे । पश्चाच्च सारथौ सुप्ते, जाग्रन्नस्थात्प्रतापजः ॥ ६४ ॥ दूरतो मुरजध्वानं, श्रुत्वा सुमधुरं तदा । श्रापयित्वा स तं सूतं, चचालोद्दिश्य तां दिशं ॥ ६५ ॥ कस्मिन् गिरौ वनांतःस्थे, यक्षचैत्ये च मंडपे । द्वारं पिधाय गायंति, श्रीचंद्रध्रुवकं स्त्रियः ॥ ६६ ॥ तन्निशम्य कुमारोऽपि, किमेतदिति साद्भुतः । द्रष्टुं संगीतकं तासां, गत्वा तद्द्वारि संस्थितः ॥ ६७ ॥ सोऽररिच्छिद्रमार्गेण, यावत्पश्यति तावता । कन्याष्टकयुता तत्र, दृष्टा मदनसुंदरी ॥ ६८ ॥ सान्यासां गीतनृत्यादि, शिक्षयित्वा कलाश्च ताः । प्रभाते निःसृता तस्मा–दन्यास्तदनु बालिकाः ॥ ६९ ॥ हृष्टहृत्कुमरो दध्यौ, भव्यं यन्मिलिता प्रिया । अदृष्टो गुटिकायोगा–त्तदा तत्पृष्ठितो ययौ ॥ ७० ॥ तास्तद्गिरिदरीमध्ये, प्रविश्य विवरांतरा । पातालनगरं प्रापु–र्मणिदीपप्रभासितं ॥ ७१ ॥ तत्र सौधोपरि स्थित्वा, मदना स्वसखीर्जगौ । वामं मे स्पंदते नेत्र–मद्य मख्योऽसकृत्खलु ॥ ७२ ॥ तन्मन्ये प्राणनाथोऽद्य, तत्संदेशोऽपि चै(वै)ष्यति । तन्मुख्या रत्नचूलाह, चेष्टा मेऽपि सखीदृशी ॥ ७३ ॥ त्वं च यस्मिन् दिनेऽत्रैता, तद्दिनाद्यत्तपस्यलं । आचामाम्लोपवासैः स, एतैव तत्प्रभावतः ॥ ७४ ॥

तदैत्य कापि तत्रान–ग्रत्नवेगा हि नः प्रसूः । आकारयति भुक्त्यर्थं, ततस्तां मदना जगौ ॥७५॥ भगिन्यो यात भुंजीध्वं, न मे क्षुन्नाधुनाद्म्यहं । तां विना ता न गच्छंति, माता तत्राययौ तदा ॥७६॥ अद्य पुत्रि ! कथं नात्सि, माशुद्दग्मदनाह तां ।

१ 'भग्नासोऽप्यसक्षन् स च' इति प्रतौ पाठ ॥

मातर्जज्ञे(ज्ञे) न किं मेऽद्य, रतिः कापि न कुत्रचित् ॥७७॥ खगी प्राह स ते भर्ता, पुत्रीभिरप्ययं वृतः। नैमित्तिकस्य तद्वाक्या-द्राज्यं स्वं भाव्यनेन नः ॥ ७८ ॥ किं च नंदिन्यभाग्याद्वं, यद्दुःखिन्यभवंतरां। स्थानाद्विभ्रष्टता जज्ञे, भर्ताटव्यां तथा मृतः ॥ ७९ ॥ देवरः स्वसुतश्चापि, गतो सुरगिरौ चिरं। शुद्धिः कौशस्थली कापि, नाद्य यावदिहाययौ ॥ ८० ॥ जानंत्यैवं त्वया प्राज्ञे !, कथं नु क्रियते ग्रहः। भोजनार्थं त्वमुत्तिष्ठो-त्तरायं कुरु मात्र नः ॥८१॥ तथापि सा यदा नात्ति, तदा विद्याधरी भृशं। हृदि तां मदनां लात्वा-रुदत्तद्दुःखदुःखिता ॥ ८२ ॥ तद् ज्ञात्वा कुमरो दध्यौ, यो मया प्राग्हतः खगः। तत्पत्नीयं मयि स्निग्धा, नास्या वैरं मनागपि ॥८३॥ ततस्तन्नगरद्वारे, प्रकटीभूय संस्थितः। स भूपो वेत्रिणं प्राह, गच्छांतर्लाहि मुद्रिकां ॥८४॥ वेत्रिणा ज्ञापितं मध्ये, मणिवेगा तदाययौ। तं सुरूपं सदाकारं, दृष्ट्वा पप्रच्छ को भवान् ॥ ८५ ॥ श्रीचंद्रो यावता वक्ति, तावत्तत्र सखीयुता। मदना स्वं पतिं वीक्ष्या-तिहृष्टा प्राह मातरं ॥८६॥ मातस्तेऽयं स जामाता, यदीहा क्रियतेऽनिशं। ततो हर्षात्खगी सापि, मध्ये लात्वा शशंस तं ॥ ८७ ॥ अस्मद्भाग्यादिहैतस्त्वं, प्रतापसिंहनंदन !। त्वत्प्रिया मदना ह्येषा, स्मरति त्वामहर्निशं ॥ ८८ ॥ खग्यादेशात्तदा पुत्र्य-स्ता अष्टौ वरमालिकां। पाणौ लात्वा कुमारस्य, कंठे प्रक्षेप्तुमागताः ॥ ८९ ॥ क्ष्मापोऽयवखगराडीद-क्षा स्थितिर्वं इमाश्च काः। ततो विद्याधरी प्राह, शृणु वीरशिरोमणे ! ॥ ९० ॥

वैताढ्याख्ये गिरावस्मि-न्नगरं मणिभूषणं। रत्नचूडखगस्तत्र, राजा राज्यं पुराकरोत् ॥९१॥ युवराजो मणिचूड-स्तस्यास्ति बांधवोऽनुजः। रत्नवेगामहावेगे, तयोराज्ञ्यौ प्रिये इमे ॥ ९२ ॥ रत्नचूलामणिचूला-मुख्याः पुत्र्यस्तथा तयोः। चतस्रो रत्नकांताद्या, भागिनेय्यश्च ता इमाः ॥९३॥ एकदा गोत्रिभिर्विद्या-धरैर्युक्तेन खेऽटता (कूटतः)। उत्तरश्रेणिनाथेन, सुग्रीवेण

जितौ च तौ ॥ ९४ ॥ सकुटुंबौ पुरं मुक्त्वा, लात्वा सर्वं धनादिकं । पातालनगरं चैत-त्कृत्वा स्थानेऽत्र संस्थितौ ॥ ९५ ॥ स्वदेशपालनार्थं, रत्नचूडोऽन्यदाटवीं । संप्राप्य चंद्रहासासिं, पुरो विधेरधोमुखः ॥ ९६ ॥ तां विद्यां साधितुं लग्न-स्तावता केनचिद्धतः । पूजोपहारमादाय, यावत्तत्र वयं भगे ॥ ९७ ॥ गच्छामस्तावता दृष्टो, रत्नचूडोऽसिना मृतः । तस्य प्रेतक्रियां कृत्वा, स्वस्थानमागता वयं ॥ ९८ ॥ त्रिभिर्विशेषकं ॥ रत्नचूडसुतोऽटव्यां, पितृदुःखातुरोऽन्यदा । प्राप्तो रत्नध्वजः क्वापि, रत्नचूडाग्रजश्च सः ॥९९॥ कस्माचिदटवीमध्या-दुद्योतभ्रमतो निशि । इमां पत्युः पृथक्कृत्वा-दायागान्मदनासौ ॥१००॥ ततो मया सुतात्वेन, स्थापितेयं सुशीलिनी । एतासां ज्ञापयत्येव, स्वभर्तुश्चरितं गुणान् ॥ १ ॥ तच्छ्रुतेरनुरक्ताभि-रेताभिर्मद्नोदिता । भर्तेदृग्गुणवान् यस्ते, स एव वल्लभोऽस्तु नः ॥२॥ एकदा मणिचूडेन, कोऽपि पृष्टो निमित्तवित् । जगौ राज्यं गतं यद्वो, युष्मदष्टकनीधवः ॥३॥ वर एव महासत्त्व-स्तद्राज्यं वालयिष्यति । तद्योगोऽप्रतिचक्रायाः, विद्यायाः साधनाद्भवेत् ॥४॥ युग्मं ॥ तेनाधुना मणिचूड-रत्नध्वजावुभावपि । विद्यां षाण्मासिकीं तां च, युक्त्या साधयितुं गतौ ॥ ५ ॥ विजनत्वपवित्रता-त्तौ स्थितौ मेरुनंदने । तयोस्तत्र चतुर्मासी, जज्ञे शेषा द्विमास्यथ ॥ ६ ॥ ततोऽस्मद्भाग्यतः स त्व-मिहागा भूगिमाः सुताः । ततस्ताभिर्वृतः स्नेहात्, श्रीचंद्रश्चंद्ररुग्यशाः ॥ ७ ॥ तदाग्रहात्समं ताभिः, स चक्रे तत्र भोजनं । भुक्तेरनु महावेगा-दिभिर्धापितः स च ॥८॥ श्वश्रूभिः पृष्टसत्रागाः, कुमार कथमेककः । तेन स्वचरितं किंचि-त्तासामुक्तं यथोचितं ॥९॥ रत्नवेगा ततः प्राह, वत्सेह स्थीयतां सुखं । मणिचूडागमं याव-त्पश्चाद्भावि हितं च नः ॥१०॥ श्रीचंद्रः प्राह मातर्मे, बहुकार्यावलंबिनः । इयद्दिनं (न) विलंबोऽत्र, भूतो (नूनं) न क्षम्य(म)तेऽधुना ॥११॥ कनकारण्यपुरे याता, शीघ्रं तदह-

मुत्सुकः । द्विमास्यनु खगेंद्रस्य, विद्यासिद्धाविहागमे ॥ १२ ॥ प्राप्यं कुशस्थलादौ मे, भव्यं भाव्यखिलं ततः । चारु मेऽभूदिदं ताव-द्यद्युष्मत्संगमोऽजनि ॥ १३ ॥ त्रिभिर्विशेषकं ॥ खग्याह कुंडलाधीश, स्वीक्रियंतामिमा हि तत् । मदनाविरहो मा भू--त्स्नेहोऽस्ति यतो मिथः ॥१४॥ सोऽवग्मातर्विवाहादि, सर्वं स्वाधीनमेव तत् । युष्मद्राज्यस्थितौ मत्वा-मेव भाव्य-धुना न हि ॥ १५॥ कष्टात्सोऽनुमतिं लात्वा (तस्या), लात्वा च मदनां सह। चलेद्यावत्तदा रत्न-चूला रुदत्यवग्प्रियं ॥१६॥ नाथ! त्वद्विरहो यो(ऽग्रे)ऽस्मद्-दुःसहो मदनाथ चेत् । नात्र स्थात्री कथं तर्हि, भाविन्यत्र च ( न्यहह ) नः स्थितिः ॥१७॥ श्रीचंद्रेण ततः स्नेहा-न्मदना स्थापिताप्यलं । न तत्रास्थात्सती ताद-क्प्रियं किं वियुनक्ति यत् ॥ १८ ॥ सोऽन्वयेनिश्चयं कृत्वा, तत्र संस्थाप्य तां बलात् । किंचिद्दत्वा च लात्वा तां (च), प्रतस्थे कुमरस्ततः ॥ १९ ॥ आयात्त(एत्य त)स्मिन् वटे खत-गर्जिते तद्रथे च तां । उपवेश्य चचालाग्रे, कनकाख्यपुरं प्रति ॥ २० ॥ मिथः प्रकटयंतस्ते, स्वां स्वां वार्तां पथि क्रमात् । गच्छंतः कामपि प्रापा, रुद्रपल्लीं पुरीं वरां ॥ २१ ॥ तस्या उपवनं यावत्-चैरासु तत्र तावता । तत्पुरीशः स्थितो दृष्टो, गजाश्वबहुलोकयुक् ॥ २२ ॥ एकतश्च चिता दृष्टा, निरग्निस्तत्समीपगा । तन्व्यंग्येकातिदुःस्वार्ता, वार्य-माणा नृपादिभिः ॥ २३ ॥ अन्यतश्च तलारक्ष-बद्धः कोऽप्यद्भुतो नरः । तादृग्वीक्ष्य रथोत्तीर्णः, श्रीचंद्रोऽस्थात्तरोस्तले ॥ २४ ॥ पृष्टवांश्च किमत्रेति, तत्रस्थं वनपालकं । स जगौ सज्जनोत्तंस!, रुद्रपल्ली नगर्यसौ ॥ २५ ॥ तदीशो वज्रसिंहोऽयं, तस्य क्षेमवती प्रिया । पुत्री हंसावलीयं च, तच्छेषं वक्ति तावता ॥ २६ ॥ तं रथं तं कुमारं च, तादृशं वीक्ष्य विस्मयात् ।

१ ' तासां स्नेहोऽस्ति यन्मिथः ' इति प्रतौ पाठः ॥ २ ' लात्वा मदनया सह ' इति प्रतौ पाठः ॥

नृपेण प्रेपितास्तत्रा-ययुर्मंत्रिमुखा जनाः ॥ २७ ॥ युग्मं ॥ हरिभ्रातांगदो भट्ट-स्तत्रायातोऽस्ति तेन च। श्रीचंद्रमुपलक्ष्यैवं, तद्यशोऽभाणि विस्तरात् ॥ २८ ॥ तद्यथा-कणगज्झयस्स रज्जं, पुत्तिं कणगाउलिं च कणगउरे। विलसइ सुरदिन्नं जो, नव-लक्खई स सिरिचंदो ॥ २९ ॥ वीणाउरम्मि वरिओ, सुहजियपउमस्सिरीइ निवसुहिं(निवसुयहिं) । जाईसरि उथलरिकअ, सिरिचंदो जयउ जणणिजुओ ॥ ३० ॥ तथा च-जस्सुवरिकूडपणगं, तत्थ साणिज्ज सिहरिगिरिदेवी । निच्चफलं अंबवणं, अग्गियकुंडं कणयखाणी ॥ ३१ ॥ मज्झिल्लं जिणकूडं, कूडदुगं केलिठाणमेवं जो । भिल्लाउ सिरिणगंतं, पिच्छइ सो जयउ रिचंदो ॥ ३२ ॥ जुयलं ॥ सिरिपव्वयस्स उवरिं, विजयाएसेण जेण सुहठाणं । चंदउरपट्टणवरं, ठावियं सो जयउ रिचंदो ॥ ३३ ॥ चंदउरमज्झसिहरे, सिरिपढमजिणस्स चेइयं जेण । कारविअं चउबारं, रम्मं सो जयउ सिरिचंदो । ३४ ॥ इत्यादि ॥

तदा तन्मंत्रिणा गत्वा, श्रीचंद्रोऽयमिहागमत् । इत्युक्तः स नृपोऽत्रागा-त्पुत्रीहंसावलीयुतः ॥ ३५ ॥ आयांतं तं नृपं वीक्ष्य, श्रीचंद्रः सन्मुखं ययौ । मिथो नतिं स्तुतिं कृत्वो-पविष्टौ तत्र तौ ततः(दा) ॥ ३६ ॥ श्रीचंद्रेणोचितस्थाने, संस्थाप्य गं ततः । यन्नसिंहनृपोऽपृच्छि, तत्कनीदुःखकारणं ॥३७॥ स जगौ नवलक्षेश !, मम हंसावली सुता । एषा च कनक-र-पुत्री च कनकावली ॥ ३८ ॥ मिथः सख्यौ पुराकस्मा-त्तया वव्रे भवान् वरः । तस्यास्तत्पितृराज्यस्य, भोक्ता भूरि(र)-त्त भाग्यवान् ॥३९॥ युग्मं ॥ तद् ज्ञात्वा त्वद्गुणान् श्रुत्वा, त(ऽन)योक्तं सर्वसाक्षिकं । यः कांतः कनकावल्याः, श्रीचंद्रः सोऽस्तु मे वरः ॥ ४० ॥ ततश्च विश्रुतो मंत्री, प्रेषितः कनके पुरे । श्रीमद्देशांतरप्राप्तिं, ज्ञात्वा लक्ष्मणमंत्रिणः(तः) ॥ ४१ ॥

सोऽत्रागत्य च तत्रत्यं, स्वरूपमवदच्च नः । ततोऽतर्दुःखिनी ह्येषा, नित्यं त्वामेव संस्मरेत् ॥ ४२ ॥ युग्मं ॥

इतश्च कुंडिनक्ष्माभृ–दरिमर्दनसूनुना । हंसावल्यनुरक्तेन, चंद्रसेनेन कस्यचित् ॥४३॥ मुखाद् ज्ञाता प्रतिज्ञास्यां, श्रीमद्वि-(द्वे)देशितापि च । तदा तस्य मतिर्दुष्टो–त्पेदे दुष्कर्मतस्ततः(योगतः) ॥ ४४ ॥ स मित्रादीननापृच्छय, निर्ययौ निशि तत्पुरात् । गत्वा कनकपूर्मध्ये, ज्ञात्वा सर्वां भवत्स्थितिं ॥ ४५ ॥ कूटबुद्धिप्रपंचेन, सोऽत्रागादेकमर्त्ययुक् । श्रीचंद्रनामवेपादि, धृत्वा तस्थौ च कैतवात् ॥ ४६ ॥ तत्कृतच्छद्मयोगो यः, सोऽस्माभिर्बुबुधे न हि । किं तु श्रीचंद्र एवाय–मिति हृष्टा वयं कनी ॥ ४७ ॥ पंचभिः कुलकं ॥ ततश्चक्रे विवाहोऽस्या–स्तेन त्वच्छलतस्तदा । तत्रत्यवणिजैकेन, स दुष्टात्मोपलक्षितः ॥ ४८ ॥ स तदा कुट्टितो बद्धो, जगौ सर्वं यथास्थितं । श्रीचंद्रकुमरो नाहं, किं त्वहं कुंडिनेशभूः ॥ ४९ ॥ ततोऽत्र दुःखिनो जाता, वयं पुत्री विशेषतः । विवाहोऽपि विषं जज्ञे, सचिंता मंत्रिणोऽभवन् ॥५०॥ एवं सत्यंगदोऽत्रागा–त्तन्मुखात्त्वद्गुणाः श्रुताः । तद्दुःख-विधुरा बाले–दं कर्तुमुत्सुकाभवत् ॥ ५१ ॥ निषिद्धा बहुपीयं द्रा–क्त्वर्यस्ति काष्ठभक्षणं । स चाप्रेक्ष्यमुखोऽत्रायं, नीतोऽस्ति चौरवद् धृतः ॥ ५२ ॥ अहो विश्वासघातित्व–महो क्रौर्यमहो छलं । अहो चौर्यं नृशंसत्व–महो अदीर्घदर्शिता ॥ ५३ ॥ अहो अस्य कुकर्तव्यं, यदत्र कृतमीदृशं । अहो अस्माकमज्ञानं, यद्विलंबोऽप्यकारि न ॥ ५४ ॥ ततः श्रीचंद्रभूपालो, वज्रसिंहनृपं जगौ ॥ न दोषो भवतां नास्याः(स्य), किं त्वियं कर्मयोजना ॥५५॥ यतः–कत्थ वि जीवो बलिओ, कत्थ वि कम्माइ हुंति बलियाइं । जीवस्स य कम्मस्स य, पुव्वनिबद्धाइं वइराइं ॥ ५६ ॥ अन्यच्च–सा सा संपद्यते बुद्धिः, सा मतिः सा च भावना ।

१ ' सोऽत्रागात्तेन तत्रत्यं, स्वरूपं ज्ञापितं च नः ' इति प्रतौ पाठः ॥ २ ' बाला–ऽभवत् किंकार्यताजडा ' इति प्रतौ पाठः ॥

महायास्तादृशा ज्ञेया, यादृशी भवितव्यता ॥ ५७ ॥ परदुःखासहत्वेना–नेनानायि स भूपभूः । बंधनान्मोचयित्वा च, स्थापितो नातिदूरतः ॥ ५८ ॥ किमिदं स्त्रीकृते छद्म, चक्रे सत्कुलजन्मना । श्रीचंद्रश्चंद्रसेनस्ये–त्युक्त्वा तां भूपजां जगौ ॥५९॥ भद्रे ! दुःखं किमेताव–द्व(द्ध)त्से मा कुर्नकार्यतां । ईदृशं मर्त्यजन्मात्म–हत्यया किं कलंक्यते ॥६०॥ मनसा चिंतितो न स्या–द्वाचा मत्यीकृतोऽपि न । किं तु भर्ता भवेत्पाणि–ग्रहणे विहिते स्त्रियाः ॥ ६१ ॥ दृश्यतेऽपीति रूढिश्चा–न्यदत्तापि हि पत्कनी । अन्यं परिणयेत्किं तु, परिणीता भवेत्क(न चै क)चित् ॥ ६२ ॥ काष्ठस्थाली सकृद्वह्नौ, कणिकायां जलं सकृत् । मज्जनानां मकृद्वाक्यं, स्त्रीणामुपयमः सकृत् ॥ ६३ ॥ हंसावल्याह तत्सत्यं, परं धर्मः कुलस्त्रियः । अयं यो मनसा वव्रे, वरः स एव नापरः ॥ ६४ ॥ तन्मया यो मनोवाग्भ्यां, धृतः कायेन सोऽपि हि। गीते नृत्ये च तन्नामा–द्य यावत्प्रोक्तमत्र च ॥ ६५ ॥ ध्यानं तस्यैव मे तस्मा–त्तं मुक्त्वान्यं कथं भजे । विपर्यासगृहीतं किं, वसु न त्यज्यते बुधैः ॥ ६६ ॥ मणिभ्रांत्या करप्राप्तं, काचं तन्मणिसंगमे । त्यक्त्वा तं च मणिं गृह्णन्, स सुधीरथवा कुधीः ॥ ६७ ॥ तव भ्रांत्या करस्पृष्टो–ऽयं तद्वच्च मयोज्झ्यते । मनोवृतवरादन्यं, वृण्वती स्यां कथं सती ॥६८॥ किं चात्र श्रीमता प्रोचे, रूढिर्या तुर्यमंगले। सान्य-लोकस्त्रियां चित्ते, धृत एव कुलस्त्रियः (यां) ॥ ६९ ॥ मनसैव कृतं प्रोक्तं, ध्यातं च फलबंधतः। देवाग्रे ढौकितं दैव्यं, वस्त्वेव स्यान्न भाजनं ॥ ७० ॥ अन्यत्राप्युक्तं–मन एव मनुष्याणां, कारणं बंधमोक्षयोः । त(य)थैवालिंग्यते भार्या, तथैवालिंग्यते स्वसा ॥७१॥ आगमे–च–मणवावारो (वावाराणं) गुरुओ, मणवावारो जिणेहि पन्नत्तो । अह णेइ सत्तमीए, अहवा सिद्धिं परां णेइ ॥ ७२ ॥ श्रीचंद्रस्तां सतीं प्राह, सदाचारिणि वस्तुतः (नः) । परावर्तो भवेन्नूनं, मणिस्वर्णादिकस्य च ॥ ७३ ॥

न पुनः स्याद्विपर्यासो, नार्या व्यच(विवा)हितस्य तु । मति(सिता)भ्रांत्या पयःक्षिप्तं, लवणं नान्यथा यथा ॥ ७४ ॥युग्मं॥ मिष्टपानीयमनसा, लोलिता क्षारपाथसा । कणिका लभते किंतु, यथा तथ्यं तथात्र हि ॥ ७५ ॥ करमेलापको यस्या, अभूद्भ्रांत्यापि यत्समं । तस्याः स एव भर्ता स्या-त्परस्त्री त्वपरस्य सा ॥ ७६ ॥ श्रुत्वेति सा कनी प्राह, वरश्चित्ते त्वमेव मे । अनेन परिणीतापि, न वेची(वच्मी)त्येष मे पतिः ॥ ७७ ॥ इत्यहं स्यां सती वाप्य-सती तद्वेत्ति केवली । इत्यप्यन्य-स्त्रियं मां चे-त्त्वं मन्येथास्तदत्र मे ॥ ७८ ॥ चिताग्निर्वा तपस्या वा, शरणं नापरा गतिः । छुट्यते प्राकृतं कर्मा-न्तरायं कथ-मप्यदः ॥ ७९ ॥ युग्मं ॥ ततस्तच्छीलदार्ढ्याच्च(र्ढ्येन), हृष्टः श्रीचंद्रभूपभूः । तत्प्रशंसां विधायोर्वी-निग्रहार्हमपीह तं ॥८०॥ मोचयित्वा नृपं प्राह, राजन्नियं भवस्थि(स्थि)तिः । विषयैः प्राणिनः सर्वे, पीडयंते हि कथं कथं ॥ ८१ ॥ युग्मं ॥ यतः- धनेषु जीवितव्येषु, भोगेष्वाहारकर्मसु । अतृप्ताः प्राणिनः सर्वे, याता यास्यंति यांति च ॥८२॥ तथा-मध्यत्रिवलीत्रिपथे, पीवरकुचचत्वरे चपलदृशां । छलयति मदनपिशाचः, पुरुषं हि मनागपि स्खलितं ॥८३॥ पैष्टी माध्वी च गौडी च, विज्ञेया त्रिविधा सुरा । चतुर्थी च (स्त्री) सुरा नारी (ज्ञेया), ययेदं मोहितं जगत् ॥ ८४ ॥ माद्यत्यत्र सुरां पीत्वा, स्त्रियं दृष्ट्वैव माद्यति । यस्माद् दृष्टिमदा नारी, तस्मात्तां न विलोकयेत् ॥ ८५ ॥ तथा-च-सुसंकटे न गंतव्यं, गंतव्यं विषमे न हि । महापथे न गंतव्यं, गंतव्यं हि समे पथे (थि) ॥ ८६ ॥ परस्त्री संकटः पंथा, विधवा विषमस्तथा । वेश्या महापथः प्रोक्तो, निजनारी समस्तथा ॥ ८७ ॥ परस्त्री मंदरूपापि, विकरोत्येव मानसं । यदपथ्यं शरीरस्य, तद्धि मंदाय रोचते ॥ ८८ ॥ अपि-च-अक्खाण रसणी कम्माण, मोहणी तह वयाण बंभवयं । गुत्तीण य मणगुत्ती, चउरो दुक्खेण जिप्पंइ (प्पंति) ॥८९॥

पुप्फफलाणं च रसं, सुराइमंसाण महिलियाणं च । जाणंता जे विरया, ते दुक्करकारए वंदे ॥ ९० ॥ सुलहो विमाणवासो, एगच्छत्ताइ मेइणी सुलहा । दुलहा पुण जीवाणं, जिणंदवरसासणे बोही ॥ ९१ ॥

इति धर्ममयं वाक्यं, श्रुत्वा तस्यायतिप्रियं । नृपाद्या मंत्रिमुख्याश्च, सा कनी च चमत्कृताः ॥९२॥ श्रीचंद्रपादयोर्लग्न-श्चंद्रसेनो जगाविति । स्वामिन् ! प्राणप्रदोऽसि त्व-मथाहं तेऽस्मि किंकरः ॥९३॥ हंसावली प्रबुद्धाह, कुमारवर ! मन्मथः (नः) । त्वयाग्रेऽप्यपजह्रेऽथा-धुनापि धर्मदेशनात् ॥९४॥ जीवदो धर्मदोऽसि त्वं, तेन त्वद्वाक्प्रमादतः । देवोऽर्हन्मे दयामूलो, धर्मो धर्म-गुरुर्भवान् ॥९५॥ युग्मं ॥ सर्वरत्नप्रधानं च, शीलं निर्मलमस्तु मे । शरीराभरणं शीलं, शीलं निर्वृतिकृद्यतः ॥९६॥ वज्रसिंहस्ततो वीक्ष्य, रूपलावण्यनिःसमं । श्रीचंद्रमब्रवीद्वीर-कोटीर शृणु मद्वचः ॥९७॥ हंसावलीविवाहस्य, स्थितोऽत्रायं मनोरथः । अथास्या भगिनीं लघ्वीं, शृणु चंद्रावलीं कनीं ॥९८॥ तदाग्रहाच्च तां कन्यां, हंसालिमदनागिरा । सोत्सवं विस्तरेणोच्चैः, श्रीचंद्रः परिणीतवान् ॥९९॥ ततोऽसौ तत्पुराद् भूपो(प) भूपभूत्या(भ्यां) सहाचलत् । द्विवधूभ्यामभात्प्रीति-रतिभ्यामिव च स्मरः ॥५००॥ सोऽशुभन्नै-कनिःस्वान-ध्वानपूरितदिङ्मुखः । गजाश्वरथपत्त्यादि-चमूयुग्द्रवत्पथि ॥१॥ स प्राप(प्य) नवलक्षाख्य-देशसीम्नि स्थितं बलं । प्रापितं ( निजं । सैन्यं तान् ) पद्मनाभादीन्, गुणचंद्रं च लक्ष्मणं ॥२॥ तत्र तैर्निजनाथोऽसा-वभ्येत्य समहोत्सवं । हर्षवद्भि-र्नतोऽत्यंतं, संस्तुतश्च तदोचितं ॥३॥ अन्योन्यं स्वस्ववृत्तांतं, वदद्भिस्तैर्नृपादिभिः । श्रीचंद्रराजराजस्य, चरित्रं बुबुधेऽखिलं ॥४॥

ततश्च गुणचंद्रेण, विज्ञप्तं देव ! दुर्जयः । गुणविभ्रमभूपोऽय-मद्याप्यत्रास्ति याति न ॥ ५ ॥ असौ वक्ति च या प्राज्या,

१ ' वक्तीति नः स या प्राज्या ' इति प्रतौ पाठः ॥

रीतिर्दंडस्य सांप्रतं । ततो दशगुणं द्रव्यं, कोषा(ष्ठा)र्घं मम दीयतां ॥ ६ ॥ अतो बलादमुं देशं, जिघृक्षुं षड्नृपैर्युतं । ज्ञात्वास्माभिस्तदभ्यंगी-क्रियतेऽत्र हि तावता ॥ ७ ॥ श्रीमदागमनं माग्या-अज्ञेऽज्ञानभ्रवृष्टिवत् । तेन सैन्यमिदं सर्व-मभूद्दृष्टं सनायकं ॥ ८ ॥ युग्मं ॥ श्रीचंद्र(द्रः)सवितासौ च, चंद्रहासासिभानुमान् । सैन्योदयाचले दीप्तो-ऽभ्युदितोऽभात्प्रतापयुक् ॥ ९ ॥ प्रतापसिंहभूसिंहं, ज्ञात्वा तत्रागतं तदा । शत्रुसैन्यभटाः सर्वे, श्वापदा इव कंपिताः ॥ १० ॥ तत्र द्विपायितं कैश्चि-त्कैश्चिच्छशमृगायितं । शूकरायितमन्यैश्च, त्रासः कोऽप्यभवन्महान् ॥ ११ ॥ ततः श्रीचंद्रभूपेन, दूतास्याद्गुणविभ्रमः । जगदे यत्त्वया पूर्वं, कनकाढ्यपुरेशितुः ॥ १२ ॥ दंडो यावंति वर्षाणि, जगृहे सोऽखिलोऽधुना । शीघ्रं शतगुणीकृत्य, प्रदेयमद्यमेव हि ॥१३॥ युग्मं ॥ अन्यथा संगरे सज्जी-भवायमहमागमं । तन्निशम्य स भूपोऽत-राद्रोऽप्यभूद्बहिर्द्दः ॥ १४॥ सज्जीभूय रणक्षेत्रे, प्राप्तं वीक्ष्य रिपुं तदा । श्रीचंद्रोऽप्यागमत्तत्र, तैर्भूपैर्मंत्रिभिर्युतः ॥ १५ ॥ जाते तयोर्द्वयोस्तत्र, दलयोर्दारुणे रणे । घंटालोलेव सा जज्ञे, जयश्रीर्न स्थि(स्थि)तस्ततः ॥ १६ ॥ ततः कोदंडचंडेन, गुणविभ्रमभूभुजा । गजस्थेन शनैः (रैः) सैन्य-मभंजि श्रीनगेशितुः ॥ १७ ॥ पद्मनाभनृपं वज्र-सिंहं लक्ष्मणमंत्रिणं । हरिषेणं भटानन्या-न्निरीक्ष्य बाणबाधितान् ॥ १८ ॥ श्रीचंद्रः कुंजरारूढ-श्चंद्रहासासिभृत्करः । रिपुद्विपमभि प्राप्य, त्रासयंस्तद्भटान् जगौ ॥ १९ ॥ युग्मं ॥ प्रौढोऽसि वपुषा तत्त्वं, नत्वा मां याहि नो हि चेत् । कुरु रे शोफिलस्थूल, शस्त्रं प्राग्मयि दुर्नयिन् ॥ २० ॥ तत् श्रुत्वाह गुणो गच्छ, बालोऽसि सरसीह किं । न यासि तन्निरीक्षस्वे-त्युक्त्वा खड्गं मुमोच सः ॥ २१ ॥ स्वमूर्धन्यागमत्तस्य, शस्त्रं

१ 'सैन्यारण्येऽरयः सर्वे' इति प्रतौ पाठः । २. 'प्रहेयस्त्वं नमेह च.' इति प्रतौ पाठः ।

वीक्ष्य क्ष्मााग्रणीः । श्रीचंद्रश्चंद्रहासेन, जघान तस्करं ततः ॥२२॥ तत्पतच्छतधा जातं, शस्त्रे लग्नेऽपि तस्करे नाभून्मनागपि च्छेदो, धारावंधानुभावतः ॥ २३ ॥ तद्विज्ञाय नृपाधीशो, रिपोः कंठं धनुर्ज्यया । आकृष्यापातयत्स च, गजारूढः स तत्कटः ॥ २४ ॥ अभूज्जयजयाराव–स्तत्र श्रीचंद्रभूपतिः । निक्षिप्य च तदा काष्ठ–पंजरे गुणविभ्रमं ॥ २५ ॥ ललौ तस्याखिलं सैन्यं, तैः षड्भिर्नृपपुंगवैः । प्रणतः संस्तुतश्चापि, सेवितः शुशुभे च सः ॥ २६ ॥ युग्मं ॥ स कल्याणपुरे स्वाज्ञां, तद्देशेषु च सस्तु । स्वमंत्रिभिः प्रवर्त्याप्य, तत्स्थानाच्चचले ( द्रुचले ) स्वयं ॥२७॥ क्रमात्कनकपुर्यां स, प्राप्तो नवनृपान्वितः । जयश्रीकंठशृंगारः, पुःप्रवेशोत्सवे बभौ ॥ २८ ॥ स भृशं जननीपाद–नमस्योत्कंठितस्ततः । चचाल द्वि(त्रि)श्रिया–युक्त–स्तैर्भूपैः प्रणतक्रमः ॥ २९ ॥ मार्गे च गच्छता तेन, श्रीगिरेश्चंद्रपत्तनात् । सूर्यवत्याः सुतो जात, इति वर्धापनी श्रुता ॥ ३० ॥ तत्रात्यंतं महश्चक्रे, ददे दानं यथेप्सितं । तेनाकारि च सर्वेषु, स्वदेशेषु महामहः ॥ ३१ ॥ अकारि दानमुक्तिश्च, गुप्तिषो बंदिमोचनं । मनोज्ञगीतनृत्यादि, तोरणादि पदे पदे ॥ ३२ ॥ सर्वत्र हर्षसाम्राज्यं, सर्वेषामीक्ष्यते ह्यतः । गुणविभ्रमभूपोऽपि, गुप्तितो मोचितोऽभवत् ( ऽमोचि तेन च ) ॥ ३३ ॥ स हि सन्मानितो वाढं, श्रीचंद्र ( द्रं ) क्रमयामले । लगित्वा मेऽपराधोऽयं, क्षम्यतां किंकरोऽस्मि ते ॥ ३४ ॥ जल्पंतमिति तं पार्श्वे, संस्थाप्य कुंडलेश्वरः । गत्वा चंद्रपुरे मातुः, पादाब्जे ( ब्जान् ) ननाम मुदा ॥ ३५ ॥ युग्मं ॥ वधूभिर्मंत्रिभिर्भूपैः, सर्वैः सा जननी नता । श्रीचंद्रं च व्यधान्माता, ज्ञातवृत्तांतमात्मनः ॥ ३६ ॥ भ्रातरं स निजोत्संगे, लात्वा तस्य गुणोद्भवां । एकांगवरवीरोऽय–मित्याख्यां विधिवद्व्यधात् ॥ ३७ ॥ स्वेच्छाहूता नृपा अन्ये, तस्सेवार्थमिहागताः । ददुस्तस्मै सुतां केचि–त्केचिद्रत्नगजादि च ॥ ३८ ॥ तत्रान्येद्युर्महत्सै ( हार्से )

न्य–युक्ता चंद्रकला प्रिया । वामांगवरचंद्रौ च, सुधीराजधनंजयौ ॥ ३९ ॥ आजग्मुः सकलामृद्धिं, तत्रत्यां वीक्ष्य तां स्थितिं । सर्वे मुमुदिरे ते च, श्रीचंद्रश्चश्रूय्( श्व श्रू ) रपि ॥ ४० ॥ युग्मं ॥ ततस्तत्र स्थितिश्चक्रे, सर्वेषां च पृथक्पृथक् । मातुलः सर्वचिताकृ–द्वामांगश्च नृपेंदुना ॥ ४१ ॥ धनंजयश्च सेनानी–स्ते ते सर्वेऽगरक्षकाः । राज्ञी चंद्रकला पट्ट–महादेवी कृता वरा ॥ ४२ ॥ कुंजरं मल्लभिल्लं च, शिक्षां दत्त्वा यथोचितां । मुक्त्वा श्रीपर्वते तत्र, श्रीचंद्रस्तैर्नृपैः सह ॥ ४३ ॥ विहारे श्रीजिनं नत्वा, कुशस्थलपुरं प्रति । मातृभ्रातृप्रियामित्र–युग्महृद्ध्या ततोऽचलत् ॥ ४४ ॥ युग्मं ॥ गजै रथैर्हयैरश्वै–र्न(श्वत)रैर्गोभिर्महाभटैः । करभैः शिबिकाभिश्च, तत्सैन्यमशुभन्महत् ॥४५॥ शेषः सीदति कूर्मराड् विपिद(लिख)ति क्षोणीतलं मज्जति, क्षुभ्यंत्यंबुधयः पतंति गिरयः क्रंदंति दिग्दंतिनः । लुप्तं व्योमतलं दिशः कवलिता रुद्धो रविः पांशुना, चक्रे तस्य बलैश्चलद्भिरभितस्त्रैलोक्यमप्याकुलं ॥ ४६ ॥

क्वचिच्चैत्यं क्वचिच्छाला, क्वचिन्मठः क्वचित्प्रपा । तेनाकारि पथि प्राच्या–भिज्ञातीर्थे(नार्थे) पदे पदे ॥ ४७ ॥ कनकाख्यपुरे गत्वा, कियत्स्थित्वा ततः क्रमात् । चलन् स्मरन् स्थितिं प्राच्यां, स कल्याणपुरे ययौ ॥ ४८ ॥ गुणविभ्रमभूपस्य, प्रादासद्य(स्यामहात्तत्र) सविस्तरं । तत्सुतां गुणवत्याख्यां, श्रीचंद्रः परिणीतवान् ॥ ४९ ॥ मदनास्याश्च तत्रत्यं, सर्वं स्वर्णनरादिकं । ज्ञात्वा वृत्तांतमाश्चर्यं, प्रापुर्मातृनृपादयः ॥ ५० ॥ ततोऽपि तं नृपं तां च, लात्वा स्वर्णनरं च सः । प्राप तस्यामटव्यां तं, यटमंतर्मणीगृहं ॥ ५१ ॥ तस्मात्साराणि रत्नानि, गृहीत्वा चलितः क्रमात् । रत्नचूडमृतिस्थाने, सोऽर्हच्चैत्यमचीकरत् ॥ ५२ ॥ ततः कांत्यां गतस्यास्य, नरसिंहः स(हिन)हर्षतः । चक्रे पुरीप्रवेशादि–महं श्रीचंद्रभूपतेः ॥ ५३ ॥ कांत्यासन्ने

वटग्रामे, वसंतं तं गुणंधरं। पंडितं तत्र गत्वा च, श्रीचंद्रः सप्रियो विधेः ॥ ५४ ॥ ग्राणमद्गुरुपत्नीं चा–पूर्वप्राभृतपूर्वकं ।
तत्पुत्रा बांधवा मेऽमी–त्यतोऽनेन च ( मी, इति तेऽनेन ) सत्कृताः ॥ ५५ ॥ युग्मं ॥ प्रियंगुमंजरीराज्या, नरसिंहनृपेण च ।
सार्धं स राजराजेंद्र–स्ततो हेमपुरेऽगमत् ॥ ५६ ॥ तस्मिन् मदनपालस्य, पितास्ति मकरध्वजः । वृत्तं मदनसुंदर्या, ज्ञात्वा
हृष्टौ च तौ भृशं ॥ ५७ ॥ ताभ्यां सह ततः क्ष्मापः, कांपिल्यपुरमासवान् । जितशत्रुर्नृपश्चक्रे, तत्प्रवेशमहान् बहून्॥ ५८ ॥
तत्र मात्राग्रहात्तेन, परिणीताः सुविस्तरात् । कन्याः कनकवत्याद्या–श्चतस्रोऽपि पृथक्पृथक् ॥ ५९ ॥

इतस्तत्र पुरास्व(त्त)सा–त्स वीणारवगायनः ।.हर्षादित्य नरेंद्रस्य, कवित्वान्यद्भुतान्यवक् ॥ ६० ॥ तद्यथा–वलगत्तुंग-
तुरंगनिष्ठुरखरक्षुण्णे रणक्ष्मातले, निर्भिन्नद्विपकुंभमौक्तिककणव्याजेन बीजावलिं । खड्गस्ते वपति स्म कुंडलपते लोकत्रयीमंडप–
प्रास(सि)प्रौढतमस्य कीर्तिलतिकागुल्मस्य निष्पत्तये ॥ ६१ ॥ इत्यादि ॥ श्रीचंद्रोऽदात्तदा(तुष्टि) दानं, तस्मै रैलक्षपंचकं ।
अन्येऽपि च यथाशक्त्या, सद्वस्त्राभरणादि च ॥ ६२ ॥ पृष्ट्वा प्राग्रथवृत्तांतं, विससर्ज च तं ततः । सर्वं स्वर्णादि हृष्टः स, लात्वा
स्वोत्तारकेऽगमत् ॥ ६३ ॥ तावता तस्य तत्सर्वं, चौरैः कैश्चिद् हृतं निशि । प्रातस्तेन सदस्येत्य, राज्ञः प्रोक्तं यथास्थितं ॥६४॥
युग्मं ॥ तन्निशम्य नृपश्चक्रे, जितशत्रुसुपे(से)क्षणं । स तं विज्ञप्तवान् देव, संति चौरास्त्रयोऽत्र हि ॥ ६५ ॥ ग्रा(ग्र)हे नायांति
ते क्वापि, तैरिदं मुषितं पुरं । ततोऽदान्नृपतिस्तस्य, प्राग्दत्ताद् द्विगुणं धनं ॥ ६६ ॥ तथैवोत्तारके सोऽगात्, श्रीचंद्रस्तु निशि
स्वयं । अदृष्टो गुटिकायोगा–द्भ्रमतीत्स्ततः पुरे ॥६७॥ निशीथसमये तत्र–ददर्श त्रीन्नरान् क्वचित् । विलोकयंश्च तान् सम्य–
क्तदा द्वावुपलक्षितौ ॥ ६८ ॥ सोऽयं रत्नखुरस्तत्र–दयं(देय) लोहखुरश्च सः । तृतीयोऽत्रास्ति कोऽप्यन्यः, कायं ह्येषामथेक्ष्यते

॥ ६९ ॥ ततस्तदग्रणीर्लोह–खुरः प्राह यदत्र भोः ! । योऽत्रैतोऽस्त्यधुना राजा, तेन यद् द्विगुणं धनं ॥७०॥ गायनस्यार्पितं तच्च, गृह्यते चल्यतामिवः । वज्रजंघस्तदा प्राह, श्रूयतां यत् श्रुतं पुरे ॥ ७१ ॥ युग्मं ॥ आगंतुकनृपस्यास्ति, कोशे स्वर्णनरः परः । स एव गृह्यते किं न, किं चौर्यैरपरैर्जने ॥ ७२ ॥ तवावस्वापिनी विद्या, त्वद्भ्राता धनगंधवित् । त्वद्भ्रातृव्यस्त्वहं गंधात्सकृदृष्टं स्मरामि तं ॥ ७३ ॥ लोहोऽवग्भद्र राजासौ, धर्मिष्ठो भाग्यवान्नयी । तदस्य कोऽपि तं लातुं, नालं ततस्त वृथोद्यमः ॥ ७४ ॥ मंत्रं कृत्वेत्यसौ लोहो, धूलिं लात्वाभिमंत्र्य च । उच्छाल्य त(फू)त्कारोऽर्ध्वं(ऽसौ), गायनास्पदसंमुखं ॥ ७५ ॥ ततस्त्रयोऽपि ते चेलु–र्निद्रालुयामिकाग्रतः । तन्मर्मज्ञो नृपोऽप्येवं, निद्रालुगायनालये ॥ ७६ ॥ गत्वा गंधाद्धनं लात्वा, तस्मात्तथैव तद्धुनि । एत्य चापहृतं लात्वा, निर्ययुस्ते पुराद्बहिः ॥ ७७ ॥ युग्मं ॥ तत्कोरितमठे प्राप्य, पश्चाद्देशे बृहच्छिलां । उत्पाट्य तत्तदा(तदधो) भूमि–गृहे क्षिप्तं धनं च तैः ॥ ७८ ॥ तदूर्ध्वं तां शिलां मुक्त्वा,[1] लात्वाथो(ते लात्वा) योगिवेषतां । मठे सुप्तास्ततो भूपः, सर्वं वीक्ष्य गृहेऽगमत् ॥ ७९ ॥

प्रगे वीणारवः सर्वं, गतं वीक्ष्य तथैव तं । क्ष्मापं विज्ञपयान् स्वस्या–भाग्यत्वं च निनिंद सः ॥ ८० ॥ ततस्तत्राखिलश्रेष्ठि–मंत्रिभूपादिसाक्षिकं । सरोषं कुंडलाधीशो, जितशत्रुनृपं जगौ ॥ ८१ ॥ भो भूभृत्का प्रतिष्ठात्र, किं राज्यं किं नृणां सुखं । यत्पुरे चौरिकेति स्या–द्वारंवारं तदत्र किं ॥ ८२ ॥ तत् श्रुत्वा न्यग्मुखे तस्मिन् , सभायां पत्रवीटकं । लात्वा नरसुनासीरः, सम्यान् प्रति जगाविति ॥ ८३ ॥ उपायेनापि यः कोऽपि, चौर्यं प्रादुःकरोत्यदः । तस्य देयेयमत्रत्या, विवाहपरिधापनी ॥८४॥

१ ' एत्यापहृत्य तां विद्यां ' इति प्रतौ पाठः ।

मस्याः प्राहुरिहाग्रेऽपि, वीटका व्यर्थतां गताः (काद्वबद्धभूत् फलं) । सर्वेषां देव तत्कोऽपि, न हि लाताथ वीटकं ॥ ८५ ॥ एवं तत्र सचिंतेषु, सर्वेष्वपि नृपादिषु । मध्याह्नसमये जाते, मात्राज्ञाप्यद्य पुत्र ते ॥ ८६ ॥ देवार्चने किमुत्सूरो, भोजने चापि नो भवेत् । अत्रापि क्षुधितं सर्वं, स्थितं तच्छीघ्रमेहि भोः ॥ ८७ ॥ युग्मं ॥ यतः—या सद्रूपविनाशिनी स्मृतिहरी पंचेंद्रियाकर्षिणी, चक्षुःश्रोत्रललाटदैन्यकरणी वैराग्यमुत्पाटि(ट)नी । बंधूनां त्यजनी विदेशगमनी चारित्रविध्वंसिनी, सेयं धावति पंचभूतदमनी प्राणापहर्त्री क्षुधा ॥ ८८ ॥ तेन च ज्ञापितं संज्ञा—मंत्रोऽस्त्यद्य महानिह । भोज्यं तेनांब ! युष्माभि—र्निर्विलंबं विधीयतां ॥ ८९ ॥ वीटकं नैकदापि प्रा—ग्निष्फलं मेऽजनि ह्यतः । भोक्ष्ये तदैव संधेयं, यदा पूर्णीभविष्यति ॥ ९० ॥ गुणचंद्रोऽभरणीद्देव!, न शोच्यं महसेदृशं । न ज्ञायते कदा प्रादु—र्भवित्री चौरिका ह्यसौ ॥९१॥ तत् श्रुत्वा सहसोत्थाय, श्रीचंद्रस्तैर्नृपैः सह । गत्वोद्याने वनक्रीडां, कुर्वन् पादचरश्च सन् ॥ ९२ ॥ प्राप तस्मिन् मठे ताव—त्पंचपैर्योगिभिर्युतान् । तांबूलारक्तसद्वक्त्रा—नद्राक्षीत् श्रीनपीह तान् ॥ ९३ ॥ ततो मठमुखे वेद्या—मुपविश्य नृपेण ते । आहूता योगिनः सर्वे—ऽप्यागतास्ते (त्यास्थुः) नृपांतिके ॥ ९४ ॥ आशीर्वादं ददानास्ते, प्रोचिरे नृपसूनुना । भो भो युष्माकमेषां के, योगिनो भोगिनश्च के ॥ ९५ ॥ ते प्रोचुर्योगिनो राजन्!, वयं भोगी त्वमेव वै । राजावक्तर्हि तांबूल—भोगोऽयं किं भवन्मुखे ? ॥ ९६ ॥ श्यामास्या अभवंस्तेषु, ते त्रयो हि न चापरे । संज्ञातो गुणचंद्रेण, त्रयस्ते रक्षिता दृढं ॥९७॥ पठन्नमो जिनायेति, राजोत्तस्थौ ततः स्वयं । मठं तमप्यसौ ( मभितो ) वीक्ष्या—ग्रचीदित्थं ( न्नृपान् ) भटांश्च तान्

१ 'ततो विज्ञापितं राज्ञा' इति प्रतौ पाठः ।

॥ ९८ ॥ आयांति योगिनोऽनेके, पांथाश्च बहवोऽत्र तत् । मठपार्श्वप्रदेशेऽस्मिन्, धर्मशाला विधीयतां ॥ ९९ ॥ इत्यादिष्टैर्नरैस्तत्र, तदैव तां शिलां ततः । उत्पाट्यान्यत्र मुक्त्वा च, खन्यते तावदद्भुतं ॥ १०० ॥ तत्र भूमिगृहं दृष्टं, राज्ञा तस्मादशेषकं । हेममौक्तिकरत्नादि, निष्कास्य वीक्ष्यते यदा ॥१॥ तदा तदुपलक्ष्योक्तं, तैस्तैः सर्वैर्नृपादिभिः । एतल्लोप्त्रधनं राजन्!, प्राच्यमाधुनिकं च यत् ॥ २ ॥ त्रिभिर्विशेषकं ॥ अहो ! तवाद्भुतं भाग्यं, कक्षैपा त्वत्कृतोत्तमा । बुद्धिर्लोकोत्तरा ते चा-नन्या परोपकारिता ॥३॥ इति तैः स्तूयमानः स, श्रीचंद्रस्तद्धनं तदा । नृणां वीणारवादीना-मुपलक्ष्यार्पयत् पृथक् ॥४॥ जितशत्रुनृपायत्ती-कृत्य तानपि तस्करान् । स्वीकृत्य तद्धनं शेषं, सभन्यागात्स सोत्सवं ॥ ५ ॥ इतश्च जितशत्रुस्तां-स्ताडयामास निष्ठुरं । पाटच्चौरैस्तथापि स्व-चौर्यं नामाप्यजल्पि न ॥ ६ ॥ परं किंचिच्च तत्पार्श्वा-दभिज्ञानं निरीक्ष्य तान् । तलारक्षभटा निन्यु-र्वध्यभूशूलिकांतिकं ॥ ७ ॥ तद् ज्ञात्वा निपुणो राजा, श्रीचंद्रः शूरशेखरः । तांस्तत्रानाय्य पप्रच्छ, के यूयं काभिधा च वः ॥ ८ ॥ तथापि ते न जल्पंति, तावजगाद भूधवः । अहो लोहखुर ! त्वं मां, किं न वेत्सि तदा भयान् ॥ ९ ॥ जीवन्मुक्तः सपुत्रीको, महींद्रपुरसीमनि । वेद्म्यवस्वापिनी विद्या, तवास्त्यथ न किं वद ॥ १० ॥ युग्मं ॥ किं न रत्नखुर! त्वं प्रा-वसमरस्याम्रफलादनं । उच्यतां कस्तृतीयोऽयं, किं वः स्वरूपमित्यपि ॥ ११ ॥

ततस्तैर्भूपपादाब्जे, प्रणम्य जगदे क्रमात् । क्षम्यतामपराधोऽयं, लोहोऽथ तेष्ववक्तदा ॥ १२ ॥ नृदेव ! लोहजंघोऽभू-दस्युस्तस्य सुतास्त्रयः । चौरो वज्रखुरो लोह-खुरो रत्नखुरस्तथा ॥ १३ ॥ कुंडले टोलके चाद्रौ, महींद्रे च स्थितिः क्रमात् । तेषामग्रस्य विद्याभू-त्तालोद्घाटिनी या ( निकी ) पुरा ॥ १४ ॥ स मृतो वज्रजंघोऽयं, तत्सुतस्तादृशोऽपि हि । लघोरदा-

गम्याः प्रादुरिहाग्रेऽपि, वीटका व्यर्थतां गताः (काकुवद्बभूत् फलं) । सर्वेषां देव तत्कोऽपि, न हि लाताश्च वीटकं ॥ ८५ ॥ एवं तत्र सर्ग्नितेषु, सर्वेष्वपि नृपादिषु । मध्याह्नसमये जाते, मात्राज्ञाप्यद्य पुत्र ते ॥ ८६ ॥ देवार्चने किमुत्थरो, भोजने चापि नो भवेत् । अत्रापि क्षुधितं सर्वं, स्थितं तच्छीघ्रमेहि भोः ॥ ८७ ॥ गुम्फं ॥ यतः—या सद्रूपविनाशिनी स्मृतिहरी पंचेंद्रियाकर्षिणी, चक्षुःश्रोत्रललाटदैन्यकरणी वैराग्यमुत्पाटि(ट)नी । बंधूनां त्यजनी विदेशगमनी चारित्रविध्वंसिनी, सेयं धावति पंचभूतदमनी प्राणापहर्त्री क्षुधा ॥ ८८ ॥ तेने च ज्ञापितं संज्ञा—मंत्रोऽस्त्यद्य महानिह । भोज्यं तेनांब ! युष्माभि—र्निर्विलंबं विधीयतां ॥ ८९ ॥ वीटकं नैकदापि प्रा—प्तिष्फलं मेऽजनि हातः । भोक्ष्ये तदैव संधेयं, यदा पूर्णीभविष्यति ॥ ९० ॥ गुणचंद्रोऽब्रवीद्देव!, न प्रोच्यं महसेदृशं । न ज्ञायते कदा प्रादु—र्भविष्री चौरिका हासौ ॥९१॥ तत् श्रुत्वा सहसोत्थाय, श्रीचंद्रस्तैर्नृपैः सह । गरजोद्याने वनक्रीडां, कुर्वन् पादचरश्च सन् ॥ ९२ ॥ प्राप तस्मिन् मठे ताव—त्पंचपैर्योगिभिर्युतान् । तांबूलारक्तसद्बपत्रा—नद्राक्षीत् श्रीनपीह तान् ॥ ९३ ॥ ततो मठमुखे वेद्या—मुपविश्य नृपेण ते । आहूता योगिनः सर्वे—ऽप्यागतास्ते (त्यास्थुः) नृपांतिके ॥ ९४ ॥ आशीर्वादं ददानास्ते, प्रोचिरे नृपसूनुना । भो भो युष्माकमेषां के, योगिनो भोगिनश्च के ॥ ९५ ॥ ते प्रोचुर्योगिनो राजन्!, वयं भोगी त्वमेव वै । राजावक्तर्हि तांबूल—भोगोऽयं किं भवन्मुखे ? ॥ ९६ ॥ श्यामास्या अभवंस्तेषु, ते त्रयो हि न चापरे । संज्ञातो गुणचंद्रेण, त्रयस्ते रक्षिता दृढं ॥९७॥ पठन्नमो जिनायेति, राजोपस्थौ ततः स्वयं । मठं तमभ्यगो ( गभितो ) वीक्ष्या—नवीदित्थं ( त्रूपान् ) भटांश्च तान्

---

१ 'ततो विज्ञापितं राज्ञा' इति प्रतौ पाठः ।

इत्यादिधनरस्तत्र, तदेव तां शिलां ततः । उत्पाद्यान्यत्र मुक्त्वा च, खन्यते तावदद्भुतं ॥ १४०० ॥ तत्र भूमिगृहं दृष्टं, राज्ञा तस्मादशेषकं । हेममौक्तिकरत्नादि, निष्कास्य वीक्ष्यते यदा ॥१॥ तदा तदुपलक्ष्योक्तं, तैस्तैः सर्वैर्नृपादिभिः । एतल्लोप्त्रधनं राजन्!, प्राच्यमाधुनिकं च यत् ॥ २ ॥ त्रिभिर्विशेषकं ॥ अहो ! तवाद्भुतं भाग्यं, कक्षैषा त्वत्कृतोत्तमा । बुद्धिर्लोकोत्तरा ते चा-नन्या परोपकारिता ॥३॥ इति तैः स्तूयमानः स, श्रीचंद्रस्तद्धनं तदा । नृणां वीणारवादीना-मुपलक्ष्यार्पयत् पृथक् ॥४॥ जितशत्रुनृपायत्ती-कृत्य तानपि तस्करान् । स्वीकृत्य तद्धनं शेषं, समन्यागात्स सोत्सवं ॥ ५ ॥ इतश्च जितशत्रुस्तां-स्ताडया-मास निष्ठुरं । पाटच्चरैस्तथापि स्व-चौर्यं नामाप्यजल्पि न ॥ ६ ॥ परं किंचिच्च तत्पार्श्वा-दभिज्ञानं निरीक्ष्य तान् । तलार-क्षभटा निन्यु-र्वध्यभूशूलिकांतिकं ॥ ७ ॥ तद् ज्ञात्वा निपुणो राजा, श्रीचंद्रः शूरशेखरः । तांस्तत्रानाय्य पप्रच्छ, के यूयं काभिधा च वः ॥ ८ ॥ तथापि ते न जल्पंति, तावजगाद भूधवः ।अहो लोहखुर! त्वं मां, किं न वेत्सि तदा भवान् ॥ ९ ॥ जीवन्मुक्तः सपुत्रीको, महींद्रपुरसीमनि । वैदुष्यपस्वापिनी विद्या, तत्रास्त्यथ न किं वद ॥ १० ॥ युग्मं ॥ किं न रत्नखुर! त्वं प्रा-क्समरस्याम्रफलादनं । उच्यतां कस्तृतीयोऽयं, किं वः स्वरूपमित्यपि ॥ ११ ॥

ततस्तैर्भूपपादाब्जे, प्रणम्य जगदे क्रमात् । क्षम्यतामपराधोऽयं, लोहोऽथ तेष्ववक्तदा ॥ १२ ॥ नृदेव ! लोहजंघोऽभू-द्दस्युस्तस्य सुतास्त्रयः । चौरो वज्रखुरो लोह-खुरो रत्नखुरस्तथा ॥ १३ ॥ कुंडले टोलके चाद्रौ, महींद्रे च स्थितिः क्रमात् । तेषामग्रस्य विद्याभू-त्तालोद्घाटिनी या ( निकी ) पुरा ॥ १४ ॥ स मृतो वज्रजंघोऽयं, तत्सुतस्तादृशोऽपि हि । लघोरदा-

रिपताढ्य-गुटिकामस्य साप्यगात् ॥ १५ ॥ लोहथ सोऽहमित्याद्यं, तद्वेलं तेन भाषितं । यथास्थितं स्वरूपं स्व-मथ स्वामी त्वमेव नः ॥ १६ ॥ तदा प्रबोध्य सन्मान्य, पार्श्वे संस्थाप्य तान्नरान् । तद्विधाभूत्ततः प्राग्व-त्स महींद्रपुरेऽगमत् ॥ १७ ॥ तिष्ठन् शयान उत्तिष्ठन्, जल्पन्नुपविशंश्चलन् । पदं नमो जिनायेति, कदाप्यास्यात्स नामुचत् ॥ १८ ॥ चतुःपर्व्यां तपः कुर्वन्, कुव्यापारं निषेधयन् । देवार्चादिक्रियां तन्वन्, सोऽर्हद्धर्मास्तिकोऽभवत् ॥ १९ ॥ तत्र तेन दरीमध्या-द्धनं निष्कास्य पूर्ववत् । चक्रे सुलोचनापाणि-ग्रहणं च सुविस्तरात् ॥ २० ॥ चतुर्दशनृपैः सार्धं, गुणचंद्रं स्वमंत्रिणं । तत्रत्यसैन्यमानेतुं, प्राहिणोत्कुंडलेश्वरः ( पुरे ) ॥ २१ ॥

इतः प्रतापसिंहस्य, पितुः पूज्यस्य भक्तितः । विज्ञप्ति(प्तिः)प्राभृतीकृत्यै, प्रेषिता मंत्रिणोऽमुना ॥२२॥ सलक्ष्मणः सुधीराजः, सुंदरो बुद्धिसागरः । चत्वारोऽमी ददु(र्मिमिलु)र्वेर्धा-पर्नीं गत्वा कुशस्थले ॥२३॥ श्रीचंद्रस्त्वत्सुतो राजन्!, मातृभ्रात्रादिसंयुतः । महींद्रपुरि संप्राप्त-स्ततश्च तिलके पुरे ॥२४॥ गत्वा रत्नपुरे तत्र, ततः सिंहपुरादिषु । भूत्वा श्रीवंद्यपादाब्जं, प्रणंस्यत्यचिरेण नः ॥ २५ ॥ युग्मं ॥ इतश्च गुणचंद्रस्य, विज्ञप्तिः कुंडलात्पुरात् । तत्रागादत्र यद्विड्ढै-र्मुक्तो गंधद्विपोऽस्ति यः ॥ २६ ॥ स नागात्प्रागितोऽत्रत्यैः, प्रेरितोऽपि कुशस्थले । तत्राधुनापि नायाति, तच्छिक्षादिश्यतां प्रभो! ॥२७॥ युग्मं ॥ तद्विज्ञाय स भूपालः, ससैन्यः परिवारयुक् । चचाल कुंडले तस्मा-त्स्वयं तु जननीयुतः ॥ २८ ॥ सुवेगस्यंदनस्थः सन्, सधनंजयसारथिः । तदैव कुंडले प्राप, तत्सैन्यं च शनैः शनैः ॥ २९ ॥ सर्वैश्च सत्कृतैर्भूपैः, स नेमे तत्प्रभ्रूरपि । ततः परं ( तत्पुरं तं ) नगं वीक्ष्य, श्वश्रूवध्वावुभे च ते ॥ ३० ॥ तच्चरित्रं च विज्ञाय, हृष्टा मातापरेऽपि च । तत्रत्यसर्वकार्याणि,

यथायोग्यं विधाय सः ॥ ३१ ॥ श्रीचंद्रो गजराजेंद्र–मालाप्यारूढवांस्ततः । चंद्रमुखीचंद्रलेखे, वीरधर्मकुटुंबकं ॥३२॥ विशारदादि तत्सर्वं, लात्वा युक्तश्च तैर्नृपैः । महींद्रे प्राप तत्रैत्य, ततः श्रीतिलकेन सः ॥ ३३ ॥[1]चतुर्भिः कलापकं ॥ त्रिलोचनयुतस्तस्मा–त्पुराच्चचाल भूपतिः । तत्तद्देशमहाराज–सेव्यश्चंद्रकलायुतः ॥ ३४ ॥ स वसंतपुरे गत्वा, तद्राज्यं वीरवर्मणः । समर्प्य तत्र कृत्वा च, नरवर्मं नृपं वरं ( र्मस्थितिं वरां ) ॥ ३५ ॥ कियद्भिः स्वयमायातै–र्लेखायातैः परैरपि । सपुत्रीकैः सदंडैश्च, नृपैरनेकैर्निषेवितः ॥ ३६ ॥ ततो गंधगजारूढः, किरीटकुंडलोज्ज्वलः । ऋद्ध्या चलन्नरेंद्रोऽभा–दैरावणस्थितेंद्रवत् ॥ ३७ ॥ चतुर्भिः कलापकं ॥ क्रमाद्ध्वजैरतिस्फारे, पुरे तिलकनामनि । सं(स)प्राप्तस्तत्र सच्चक्रे, पुरीशेन बहूत्सवैः ॥३८॥ इतः पुत्रागमं ज्ञात्वा, शीघ्रं तन्मिलनोत्सुकः । मंत्र्यादिसर्वसामग्र्या, प्रतापसिंहभूपतिः ॥३९॥ कुशस्थलपुरात्सद्यो, वाद्यनिःस्वननाटकैः । पौरलोकैरनेकैश्च, सांतःपुरः स निर्ययौ ॥ ४० ॥ युग्मं ॥ [ तिलकाख्यपुरं प्रत्या—गच्छच्छेकप्रयाणकैः । स पथि प्रीणयामास, पुत्रशुद्ध्यापकान्नरान् ॥ ४१ ॥ लक्ष्मीदत्तो नृपादेशा–द्व्यवहारिकुटुंबयुक् । सामग्रीमखिलां कर्तुं, प्राक्स्वरत्नपुरेऽगमत् ॥ ४२ ॥ पितुः प्रतापसिंहस्य, निशम्यागमनं ततः । श्रीचंद्रः सर्वसमृद्ध्या, तत्सन्मुखमुपाययौ ॥ ४३ ॥ अंतरा पथि तौ पूर्वं, निःस्वानध्वनिसंश्रुतेः । प्रमोदमेदुरौ जातौ, ततः सैन्यावलोकनात् ॥ ४४ ॥ ] ततः प्रतापसिंहस्य, गजं वीक्ष्य कुमारराट् । सहसैवोत्ततारेभा–त्सैन्यश्रेण्यौ (णो) स्थिते द्विधा ॥ ४५ ॥ प्रतापसिंहभूपोऽपि, गजादुत्तीर्णवांस्तदा । श्रीचंद्रस्तु लुठन् भूमौ, ननाम श्रीपितुः क्रमान् ॥ ४६ ॥ ततः सिंहासनासीनः, पिता पुत्रं निजांगके । लात्वा-

१ ' श्रीचंद्रराट् गजेंद्रे त–' इति प्रतौ पाठः ॥

लिग्य चिरोत्पन्नं, तद्वियोगदवानलं ॥ ४७ ॥ क्षणाद्विध्यापयामास, हर्षाश्रुवारिवर्षणैः । स्रवंवत्यमिलत्तद्व-द्धर्षाश्रुक्लिन्नलोचना ॥ ४८ ॥ युग्मं ॥ वध्वश्चंद्रकलामुख्याः, स्वस्वसख्यादिभिर्युताः । श्वश्रूज्ञापितवृत्तांताः, पेतुः श्वशुरपादयोः ॥ ४९ ॥ भूभुजः पद्मनाभाद्या, नानाप्राभृतभृत्कराः । मंत्रिणो गुणचंद्राद्या, नेमुर्नृपक्रमांबुजं ॥ ५० ॥ कानकं कौंडलं राज्यं, तौ लक्ष्मणविशारदौ । प्रतापसिंहभूपाग्रे, भक्त्या मुमुचतुस्तदा ॥ ५१ ॥ वामांगवरचंद्रौ च, स सेनानीर्धनंजयः । अन्ये मदनपालाद्या, भूपं नत्वैकतः स्थिताः ॥५२॥ तानि रत्नानि तं कोश-मपूर्वं स्वर्णपूरुषं । स्पर्शोपलं च तन्मुक्ता-रत्नादि निखिलं तदा ॥५३॥ सारं वस्तु सुवेगाख्य-रथाश्वौ गंधहस्तिनं । पितुरग्रेऽमुचद्भक्त्या, श्रीचंद्रः सर्वसाक्षिकं ॥५४॥ युग्मं ॥ मतिराजप्रधानाद्यैः, प्रणतः कुमरस्तदा । वधूश्वश्रूसपत्नीनां, सैन्यादीनां मिथो नतिः ॥ ५५ ॥ तदा च तत्र सर्वेषां, कुशलप्रश्नपूर्वकं । आलापः स्वस्वभक्तिप्र (युक्तोक्ति)-सूचकः समभून्मिथः ॥ ५६ ॥ राजा च गुणचंद्रास्यात्, श्रीचंद्रचरितं समं । मूलतस्तन्निशम्याभू-द्दर्पप्रकर्षपूर्णहृत् ॥ ५७ ॥

ततः श्रीचंद्रभूचंद्रो, वरवीरं स्वबांधवं । मातुः पार्श्वात्समानीय, पितुरंकेऽमुचन्मुदा ॥ ५८ ॥ पुत्राग्रे च चरित्रं स्वं, नृपोऽप्यवक्पुनस्तदा । प्रियावियोगजं दुःख-मवधूतवचश्च तत् ॥ ५९ ॥ पैरं पुनः स प्रांशंस-त्तं च सर्वोपकारिणं । किंचित्नोपकृतं तस्ये-त्यात्मानं स निनिंद हि ॥ ६० ॥ श्रीचंद्रेण विहस्योक्तं, तात ! युष्मत्प्रसादतः । तस्य सर्वत्र चावैव, भावि तस्यावधारणं ॥ ६१ ॥ मुक्त्वैवमेव तां वार्तां, कुमारो दीर्घदर्शिहृत् । सर्वेषां सारवस्त्राणि, यथायोग्यमदापयत् ॥ ६२ ॥ ततः

१ ' परं पुनः पुनः शंसं-स्तं सर्वथोपकारिणं ' इति प्रतौ पाठः ॥

श्रीतिलकस्योच्चै-राग्रहात्तिलके पुरे । प्रतापसिंहभूपालः, सपुत्रः प्राप सोत्सवं ॥ ६३ ॥ इतो रत्नपुराच्छीघ्रं, लक्ष्मीदत्तं धनी(ने)श्वरं । तत्रायांतं तदा ज्ञात्वा, श्रीचंद्रः सन्मुखं ययौ ॥ ६४ ॥ पूर्वमद्भक्तितोऽत्रापि, स लग्नः पादयोः पितुः । मातुश्च तैर्नृपैः सार्धं, महेभ्यैस्तैर्नीतैर्ध(नतो ह्य)मौ ॥ ६५ ॥ प्रतापसिंहपार्श्वेऽस्थात्, श्रेष्ठी नत्वा कुमारयुक् । लक्ष्मीवती वधूयुक्सा, सूर्यवत्यंतिके स्थिता ॥ ६६ ॥ तदा मिथोऽनयोः पित्रो-स्तयोश्च कुमरस्य च । हर्षोत्कर्षोऽभवत्तादृ-क्तत्पारं वेत्ति केवली ॥६७॥ तदा च तत्र तौ सिंह-पुरदीपशिखेश्वरौ । आयातौ सुभगांगाह्व-दीपचंद्रमहीधवौ ॥ ६८ ॥

ततस्तिलकमंजर्या, धन्ययाऽनन्यपुण्यया । सार्धं प्रतापसिंहेन, श्रीचंद्रस्यातिविस्तरात् ॥ ६९ ॥ विवाहोऽकारि सर्वेषां, पूर्णास्तत्र मनोरथाः । संस्तुता सा कनी सर्वे-योगोऽयमद्भुतोऽमिलत् ॥ ७० ॥ युग्मं ॥ अस्याः सा वरमालाभूत्, श्रीचंद्रस्य दिने दिने । यशःसौरभकर्त्रीव, पुष्पे पुष्पे फलप्रदा ॥ ७१ ॥ ततस्तद्भूभृता साकं, श्रीचंद्रः पितृमातृयुक् । भूरिशोभाद्भुतः (तं) प्राप, क्रमाद्रत्नपुरं पुरं ॥ ७२ ॥ तत्रानेकलवंगैला-हारहूरादिमंडपैः । नानावृक्षैश्च सच्छायै-स्तत्सैवा(स्तत्सेना)स्थात्त-टेऽम्बुधेः ॥ ७३ ॥ यत्स्थाने पितृमात्रादे-र्मिथो मेलापकोऽभवत् । तत्र मेलकपुराख्यं, श्रीचंद्रोऽवासयत्पुरं ॥ ७४ ॥ तत्रांभो-धितटे तेन, प्रतापनगरं वरं । अकारि स्वर्णरूप्याणां, प्रतापाख्यं च नाणकं ॥ ७५ ॥

इतः कर्कोटकद्वीपा-द्वोहिस्थ(त्थ)शतपंचकं । जलनिधेश्च मार्गेण (महन्महत्तरत्वेन), चित्रं तत्रागमत्तदा ॥७६॥ तस्मात्क-नकसेनाख्यो, रविप्रभनृपात्मजः । ताभिः कनकसेनादि(भिः)-भगिनीभिः समन्वितः ॥७७॥ सहस्रैर्दशभिर्नागै-र्हयैस्तत्त्रिगुणै-

१ " तन्निशम्य नृपा हृष्टा-स्तमूचुर्नृपनंदनः । सोऽयं प्रतापसिंहोऽस्य, प्रतापाख्यं च नाणकं " इति प्रतौ पाठः ॥

युतः । अवातरच्च तत्तीर-पदे कोटिभटैः सह ॥७८॥ युग्मं ॥ तदा प्रतापभूभर्ता, वने क्रीडार्थमागमत् । कर्कोटादागतान् ज्ञात्वा, प्रेषान् जात्यान् गजान् हयान् ॥७९॥ तदीक्षितुं नृपाः सर्वे, भूपास्तत्राययुश्च ते । किमेतद्यास्यथ क्वेति, तैः पृष्टो भूपभूरवक् ॥८०॥ युग्मं ॥ वयं कर्कोटतो(वयमाभामतो)ऽत्रैता, यास्यामोऽथ कुशस्थले । तस्य(त्र) प्रतापसिंहस्य, सूनुः श्रीचंद्रनाम(म)कः ॥८१॥ तस्य पत्न्यो नराप्येता, नृपपुत्र्यः समातुलाः । करमोचनवेलासं, तस्येभाद्यखिलं ततः ॥८२॥ स एकाक्येव तत्रैत्य, परिणीय कनीस्तथा । नामादि ज्ञापयित्वा स्वं, स्पष्टाक्षरैरगात्क्वचित् ॥८३॥ ततोऽहं पितुरादेशा-द्भ्राता ता भर्तृवेश्मनि । प्रापणायानया स्मृद्धया-ऽऽगमवा(चाऽर्घ्या-ऽऽगामथा)त्र कः प्रभुः ॥८४॥ तन्निशम्य नृपा हृष्टा-स्तमूचुर्नृपनंदन ! । सोऽयं प्रतापसिंहस्य, सुतः श्रीचंद्रभूपतिः ॥ ८५ ॥ सोऽप्यत्रास्ति पुरस्यास्य, स्वामी स एव भूपतिः । ईदृशं भाग्यसौभाग्यं, तस्यैवास्त्यपरस्य न ॥ ८६ ॥ तत् श्रुत्वा कनको हृष्टः, प्रतापसिंहपादयोः । लगित्वा प्राह पूज्य ! त्वं ( ज्येदं ), स्वीकुरु स्वसुतार्जितं ॥ ८७ ॥ तामृद्धिं ताः कनीर्वीक्ष्य, तच्चरित्रं सुतस्य च । निशम्य स महाश्चर्यं, प्राप राजा विशेषतः ॥ ८८ ॥ स तत्रैव सभां चक्रे, संपूर्णे सिंहविष्टरे । आस्थाय सुतमात्मीयं, सपरिवारमाह्वयत् ॥ ८९ ॥ सामंतैः परितः पूर्णो, गुणचंद्रादिसंयियुक् । पित्राहूतस्तदैवागात्, श्रीचंद्रः कलहंसवत् ॥ ९० ॥ तातमभ्युत्थितं नत्वा, तदंके स उपाविशत् । ततः सूर्यवती देवी, वध्वादिभिः सहागमत् ॥ ९१ ॥ तदा कनकसेनः स, श्रीचंद्रनृपमानमत् । नराापि नृपपुत्र्यस्ता, हृष्टा वीक्ष्याद्भुतं पतिं ॥ ९२ ॥ प्रणेमुः श्वशुरं श्वश्रूं, रूपकांतिकलायुताः । तन्मातुलैश्च सर्वा स्वां, श्रियं धृत्वा नृपो नतः ॥ ९३ ॥ क्रमेण कनकेनापि, सर्वं प्रोच्य यथातथं । गजाश्वभटरत्नादि, सर्वं तस्मै ददे निधेः ॥ ९४ ॥ कदा कथं गतस्तत्र, पृष्टः

पित्रेति सोऽब्रवीत् । श्रेष्ठिवध्वादिवृत्तांतं, यथाजातं यथास्थितं ॥ ९५ ॥ खर्परोमादियोगेन, यथाजातं कुशस्थले । यथावधूतवेषादि, गंधेभवश्यतां च तां ( तकं ) ॥ ९६ ॥ सर्वं प्रोच्य कुमारेण, लोकोत्तरचरित्रिणा । तेन नृप( पितृमातृ ) कलशादि, सर्वं विस्मापितं तदा ॥ ९७ ॥ युग्मं ॥ ततस्तत्र पुरे राज्ञा, स्वर्लोर्वरप्रवेशवत् । व्यधायि वरसामग्री ( ग्र्या ), ताभिः सह महान् महः ॥ ९८ ॥ अथ तुष्टो नृपोऽवोच-त्पुत्ररत्न ! त्वयाधुना । शांतं मे प्राक्तनं दुःखं, ज्ञाता ते सोपकारिता ॥ ९९ ॥ तेनेदं सकलं राज्यं, स्वगुणैरर्जितं पुरा । गृहाण त्वं यतो मेऽभूः, प्राणदाता ह्यनेकधा ॥ ७०० ॥ करौ नियोज्य श्रीचंद्रः, प्राह भृत्योऽस्मि ते पितः ! । श्रीयुष्मत्पदपद्माश्रः, स्थितस्य राज्यमेव मे ॥१॥ कियत्स्थित्वा पुरात्तस्मा-त्स्नागमत्पपुरंदरः । चचाल पथि मार्गः स, भिल्लनाथो(कुत एत्या)ऽनमत्सुपं ॥२॥ तस्मै धातुकिका(शुंतिका)देशं, दत्त्वा स्वर्यवतीगिरा । स हि सिंहपुरे प्राप, देवीचंद्रकलामुदे ॥ ३ ॥ तत्र प्राग्जन्मभूमिं तां, गुणचंद्रस्य पश्यतः । स्वाम्युप(म्यग्र)स्थस्य मूर्छातः, सद्योऽभूत्प्राग्जनुःस्मृतिः ॥ ४ ॥ श्रीचंद्रेण किमेतत्ते, जातं मि( तम )त्रेति नोदितः । गुणचंद्रोऽखिलं सर्व-समक्षं प्राग्भवं जगौ ॥५॥ तत्प्राग्भवश्रुतेस्तत्र, तत्पत्न्याः कमलश्रियाः । जातिस्मृतिरभूत्तद्व-द्यथोक्तौ प्राग्भवौ निजौ ॥६॥ सर्वैस्बोधितदेति, धरणोऽयं निमित्तवित् । तीर्थाराधनतो हत्वा-प्र्यत्य(मु)त्राग्भवेऽभवत् ॥७॥ श्रीदेवीयं भवे प्राच्ये, जिनदत्ता द्वितीयके । नमस्कारप्रभावाद्धि, मंगेकोऽन्या च सत्प्रिया ॥८॥ सोमदेवादयो मुख्याः, खर्परोमे कचिद्गते । स्तुतः पंचनमस्कार-तीर्थयोर्महिमा जनैः ॥ ९ ॥ ततश्च सुभगांगोऽदा-जामातुः प्राग्मनीषितं । रथेभाश्वादिसैन्यं त-द्विवाहस्योत्सवान् व्यधात् ॥ १० ॥

सप्तधत्रगती नरा, तत्नृपादियुतोऽचलत् । पुरीं दीपशिखां प्राप, तां प्राक्परिचितां नृपः ॥ ११ ॥ तत्र मातामहीपादौ,

श्रीचंद्रो नतवांस्तदा । हर्षात्प्रदीपवत्यांकि, लात्वाचुंबि मुहुर्मुहुः ॥ १२ ॥ उक्तं वत्स विवाहस्ते, आग्रमेव व्यधायि यः । अजानंत्यापि मे सोऽद्य, हृदो मुदेऽभवत्तरां ॥ १३ ॥ स्मरस्यदस्तदा यच्चे, मयोक्तं त्वमिमां शृणु । वरित्र्योऽस्याः करस्पर्शा-ग्रहणोऽपि त्वां नृपात्मजाः ॥ १४ ॥ ततः कनकदत्तस्य, सुता रूपवती तदा । श्रीचंद्रेणोपयेमे च, पित्रादेशात्सुविस्तरं ॥१५॥ दिनानि कतिचित्स्थित्वा, ततः कुशस्थलं प्रति । प्रयाणं कृतवानेष, मात्रादिपरिवारयुक् ॥ १६ ॥ ततो विज्ञप्तवानेवं, श्रीचंद्र-स्तात ! गुप्तितः । मुच्यंतां बांधवा मेऽमी, जयाद्यास्तेन मोचिताः ॥ १७ ॥ मुक्ताः कुशस्थलात्तेऽपि, कुर्वंतश्चात्मनिंदनं । स्वापराधांश्च पश्यंत-स्तत्सन्मुखमिहागमन् ॥ १८ ॥

इतश्च मणिचूडाख्य-रत्नध्वजखगेश्वरौ । साधयित्वा महाविद्यां, मेरोस्तन्नंदनाद्वनात् ॥ १९ ॥ पातालनगरेऽभ्येतौ, रत्नवेगामुखात्तदा । ज्ञात्वा तत्रत्यवृत्तांतं, श्रीचंद्रागमनादिकं ॥२०॥ अतिहृष्टौ ततः सद्य-स्तौ विमानं विरच्य च । श्रीचंद्र-कटके प्राप्तौ, कुशस्थलाद्बहिःस्थिते ॥ २१ ॥ त्रिभिर्विशेषकं ॥ व्योमतोऽवतरंतौ तौ, रत्नभाद्योतितांबरौ । निरीक्ष्य सहसोत्तस्थौ, श्रीचंद्रस्तत्र पर्षदि ॥ २२ ॥ मिथो नतिविधिं कृत्वो-पविश्य प्राविस्थतिं निजां । प्रादुष्कृत्याथितस्ताभ्यां, श्रीचंद्रोऽरिजयं प्रति ॥ २३ ॥ मित्रमातृपितृश्रेष्ठि-श्रेष्ठिनीस्वप्रियादिभिः । कैश्चिद्भूपैश्च सार्धं त-द्विमानस्थः स खेऽचलत् ॥२४॥ पाताल-नगरे गत्वा, सामग्रीं तां विधाय च । ताभ्यां ( ताभिः ) सह स वैताढ्ये, ययौ प्राप्तश्च तत्पुरे ( प्रातश्चतुःपुरे ) ॥ २५ ॥ अनेकवाद्यनिर्घोष-बंधिरीकृतदिग्गणः । यावदुत्तरति क्ष्मापो, मणिभूषणपर्वने ( पर्वते ) ॥ २६ ॥ तावत्तत्र मनुष्याद्यै-र्भृतां

भूमिं ददर्श सः । तच्चरैर्ज्ञातवृत्तांते-र्विज्ञसः श्रीप्रतापजः ॥ २७ ॥ युग्मं ॥ देवात्रैव ( आम्र ) वने संति, श्रीधर्मघोषसूरयः । शृण्वंति तद्वचः सर्वे, सुग्रीवाद्या अमी खगाः ॥ २८ ॥ ततः स कुमरः सर्वे-स्तैः समं विधिपूर्वकं । गुरून्नत्वोचितस्थाने, सकुटुंब उपाविशत् ॥ २९ ॥ तत्र ते सूरयोऽग्रेऽपि, तपःकर्मोपरि प्रथां । कथां श्रीचंद्रभूपस्य, सभ्याग्रे कथयंति तां ॥ ३० ॥ तदा तमेव तत्रैतं, ज्ञात्वाचार्या विशेषतः । देशनां विदधुर्मूला-त्तपःप्रभावप्रचिकां ॥ ३१ ॥ न नीचैर्जन्म स्यात्प्रभवति न रोगव्यतिकरो, न वाप्यज्ञानत्वं विलसति न दारिद्र्यललितं । पराभूतिर्न स्यात्किमपि न दुरापं किल यत-स्तदेवेष्टप्राप्तौ कुरुत निजशक्त्यापि सुतपः ॥३२॥ जंतूनां तपसा नूनं, जायंते सर्वसंपदः । निःश्रेयसपदं चैव, श्रीचंद्रस्येव निश्चितं ॥३३॥ तद्यथा -भरहखित्तंमि णयरे, कुसत्थलनिवपयावसिंहपिया । सूरियवइकुच्छीसर-हंसो जयई सिरिचंदो ॥३४॥ जस्स य गब्भवयारे, जणणी सुमिणम्मि पासइ मयंकं । सिरिच्छत्तं करिकमलं, मणिमयजिणभवणकारवणं ॥ ३५ ॥ जो मुक्को जणणीए, सवत्ति-सुयभज्झ सा उ सो(सा)हरणो । गिहुक(व)वणिपुप्फपुंजो, नियपुण्णेहिं रक्खिओ तइया ॥ ३६ ॥ सूरिदिन्नसुमिणजोगो (गा), लच्छीदत्तेण लच्छिवइमइणा । गहिऊण तओ सगिहं, नीओ सो कुंअर सिरिचंदो ॥ ३७ ॥ सूरियवइए पभणइ, रज्जसुरी पुत्त-विरहसमयंमि । भद्दे सिरिचंदसुओ, वारसवासंमि त(तु)ह मिलिही ॥ ३८ ॥ वरपउमगब्भगोरो, वयरुज्जलदंतपंतिरमणिज्जो । भाणु व भालभाणु(णू)-वट्ट(ड्ढ)इ चंदु व सिरिचंदो ॥३९॥ इत्यादि पितृयोगांतं, चरित्रं तस्य भूभुजः । कथयंतोंऽतरा प्रोचु-स्ते ज्ञानिगुरवः स्वयं ॥ ४० ॥ राजन् ! सुग्रीव ! पश्यायं, स श्रीचंद्रनृपेश्वरः । यस्योपाख्यानमस्माभि-र्युष्मदग्रे प्रतन्यते ॥ ४१ ॥ अमी प्रतापसिंहाद्याः, सूर्यवत्यादिकास्त्विमाः । इमाश्चंद्रकलाद्याश्च, गुणचंद्रादयस्त्वमी ॥ ४२ ॥ ततः खगैः

प्रमोदार्चैः, स वंदितः प्रशंसितः । अन्यैरपि क्रमात्तत्र, वंदितः स प्रतापजः ॥ ४३ ॥ पुण्यं चक्रे जिनोक्तं किं, मया हि प्राग्भवे विभो ! । श्रीचंद्रेणेति विज्ञप्ताः, सूरयस्तेऽवदंस्तदा ॥ ४४ ॥ त्वया हि प्राग्भवे भावा–रक्षेत्रे चै(है)रवताभिधे । आचामाम्लवर्धमानं, तपश्चक्रे यथाविधि ॥ ४५ ॥ तथा च–एरवयखित्ते चंदण–भवम्मि गुह्वियतवसमाहप्पा । अच्चुयइंदो जाओ, तह रायहिरायसिरिचंदो ॥ ४६ ॥ तथाहि—

द्वीपेऽत्रैरवतक्षेत्रे, पृंहणाख्ये पुरे वरे । भूपोऽभूज्जयदेवाख्यो, जयादेवी च तत्प्रिया ॥ ४७ ॥ नरदेवस्तयोः पुत्रः, सोऽन्यदा पंडितांतिके । विद्यार्थं मुमुचे राज्ञा, शुभेऽह्नीतश्च तत्पुरे ॥ ४८ ॥ श्रेष्ठीशो नृपमित्रोऽस्ति, वर्धमानाभिधो धनी । तत्प्रिया वल्लभादेवी, चंदनस्तत्सुतोऽद्भुतः ॥ ४९ ॥ सोऽपि पित्रा तदामोचि, शिक्षार्थं तत्र विस्तरात् । अभूतां तावतिस्नेहौ, क्ष्मापश्रेष्ठिसुतावुभौ ॥ ५० ॥ जातौ क्रमेण निःशेष–कलाकुशलिनौ च तौ । तुल्यक्रियावचश्चित्तौ, प्रापतुर्यौवनं वयः ॥ ५१ ॥ इतो भूपः प्रजापालः, क्षितिप्रतिष्ठितेश्वरः । अशोकश्रीसुतापाणि–ग्रहणार्थं सुविस्तरं ॥ ५२ ॥ [ अकारयत्पुरोद्याने, स्वयंवरणमंडपं । तत्र च कुंकुमपत्र्या–हूता नैके नृपांगजाः ॥ ५३ ॥ आययुर्नरदेवोऽपि, चंदनेन सहागमत् । तयापातान् नृपान् सर्वान्, विहाय चंदनो वृतः ॥ ५४ ॥ त्रिभिर्विशेषकं ॥ ] प्राग्जन्मस्नेहयोगेना–नया मित्रं निजं वृतं । विज्ञाय नरदेवोऽलं, हृदि हृष्टस्तदा भृशं ॥५५॥ श्रीकांता भागिनेयी स्वा, प्रजापालेन भूभृता । प्रददे नरदेवाय, विवाहोऽभूत्तयोर्महान् ॥ ५६ ॥ ततस्तौ स्वपुरे प्राप्तौ, षण्मासादनु चंदनः । प्राच्यकर्मोदयात्प्राप, देशांतरं निजैः

१ " अन्येऽपि च क्रमात्तत्र, तैस्तेऽपि वंदिताः स्वगाः ॥ " इति प्रतौ पाठः ।

सह ॥ ५७ ॥ पंचपोतयुतो रत्न–द्वीपेऽगाद्बहुलाभयुक् । तस्मात्कोणपुरं प्रत्य–गच्छत् वार्धौ स चंदनः ॥ ५८ ॥ वातवर्तुल-
योगेन, संकटे पंतितस्तदा । भग्नश्चैको महापोतो, वियुक्तास्त्वपरेऽपि च ॥५९॥ युग्मं ॥ दैवाचंदनबोहिस्थं(त्थं), लग्नं शर्वरमंदिरे ।
तत्र संभृत्य मुक्ताभि–स्तस्माद् द्वादशवत्सरैः ॥ ६० ॥ भ्रामं भ्रामं समायातं, पोतं कोणपुरे तटे । ततोऽपि चंदनश्रेष्ठी,
समेतः स्वपुरांतिके ॥ ६१ ॥ युग्मं ॥ इतः प्राग्भग्नपोतस्य, जनाः फलकयोगतः । तत्रायाताश्च तैरुक्तं, वार्धौ तत्पोतम-
ज्जनं ॥ ६२ ॥ जाताः श्रेष्ठि(ष्ठी)सुहृल्लोका, अशोकश्रीश्च दुःखिताः । शोधितं तैश्च तत्तीरं, न ज्ञातश्चंदनः क्वचित् ॥ ६३ ॥
वध्व्या विधवावेषः, पद्सप्तवत्सरादनु । चक्रे लोकापवादत्वा–च्च त्वंगादिनिमित्ततः ॥६४॥ तदा द्वादशवर्षांते, सहसा चंद-
नागतिं । श्रुत्वा मुमुदिरेऽत्यंतं, श्रेष्ठ्यशोकादयोऽखिलाः ॥ ६५ ॥ श्रेष्ठिश्वशुरमित्राद्यैः, पौरैश्च सन्मुखागतैः । युक्तो हर्षाप-
यंस्तांश्च, ददद्दानं यथोचितं ॥ ६६ ॥ चंदनस्तत्पुरे प्राप, स्वगृहे च महोत्सवात् । अशोकश्रीकृतो धर्म–कल्पद्रुः फलित-
स्तदा ॥ ६७ ॥ युग्मं ॥ कालेन नरदेवोऽभू–न्नरेंद्रस्तत्पुरेऽन्यदा । चंदनः श्रेष्ठिमुख्योऽभू–दतिप्रियस्तस्य भूपतेः ॥ ६८ ॥
एकदा तत्पुरे ज्ञानी, गुरुः कोऽप्याययौ तदा । नृपः श्रेष्ठी च ते लोकाः, श्रीकांताशोकया समं ॥ ६९ ॥ विधिना श्रीगुरू-
न्नत्वो–पविष्टाः स्वोचितास्पदे । धर्माशीःपूर्वकं सूरिः, प्रारेभे धर्मदेशनां ॥७०॥ युग्मं ॥ यथा–तक्रादिव नवनीतं, पंकादिव
पद्ममभृतमिव जलधेः । मुक्ताफलमिव वंशा–द्धर्मः सारं मनुष्यभवात् ॥ ७१ ॥ देशनांते नृपः सूरिं, पप्रच्छ केन कर्मणा ।
वियोगोऽभूदशोकायाः, संयोगश्चेदृशः प्रभो ! ॥ ७२ ॥ गुरुः प्राह सुखं दुःखं, भुंक्ते प्राणी स्वकर्मतः । न त्वन्यः कर्म

१ " पतिते तदा । भग्नेष्वेकेषु पोतेष्व–थान्येषु वांतवस्तुषु " इति प्रतौ पाठः ॥

बध्नाति, तत्फलं लभतेऽपरः ॥ ७३ ॥

भवेऽतः प्राक्तृतीयेऽयं, सुलसः श्रेष्ठिजोऽभवत् । ततः प्राच्यभवेऽयं च, क्वाप्यभूत्कुलपुत्रकः ॥ ७४ ॥ तद्भवेऽभूदशोकेयं, कुलपुत्रकवल्लभा । अनया तद्भवे हास्या-त्कर्म बद्धं वियोगकृत् ॥ ७५ ॥ सुलसस्य भवेऽप्येषा, भद्राख्याभूच्च तत्प्रिया । चतुर्विंशतिवर्षाणि, वियोगोऽस्यास्तदाप्यभूत् ॥ ७६ ॥ अत्र सुलसकथा—आचामाम्लपंचशती, सुलसेन च सांतरा । चक्रे च भद्रया पत्न्या, द्विवारं सा निरंतरा ॥ ७७ ॥ तत्तत्पःप्रभावेण, स्वर्लोकं प्राप्य तौ ततः । सा भद्रा नृपपुत्र्येषा, सुलसश्चंदनोऽभवत् ॥ ७८ ॥ प्राग्जन्मस्नेहतः सेय-मकरोच्चंदनं वरं । अनयोश्च वियोगोऽत्र, जज्ञे तेनैव कर्मणा ॥ ७९ ॥ योऽनेन रसकूपांत-र्नरो निर्यासितः पुरा । स्वर्गाच्च्युतो भवेऽस्मिन् स, त्वमस्याभूः सुहृद्वरः ॥ ८० ॥ चंदनः प्राह सूरींद्र !, कर्माद्याप्यस्ति तद्यदि । तर्ह्युच्यतामिदं कर्मा-न्यद्वा यास्यति नः कथं ? ॥ ८१ ॥ सूरिः प्रोवाच रम्या(कर्मा)त्मन्, यदि निःशेषकर्मणां । क्षयमिच्छसि तत्त्वं हि, तत्त्वं शृणु जिनोदितं ॥ ८२ ॥ आचामाम्लवर्धमानं, तपः कुर्वागमोक्तितः । यथा तेनाखिलं हंसि, दुष्कर्मापि निकाचितं ॥ ८३ ॥ गुरुवाक्येन हर्षाच्च, सभार्यश्चंदनस्तदा । तत्तपः कर्तुमारेभे, तद्वच्चैः स्वजनैरपि ॥८४॥ धात्र्या तत्पालयित्र्या च, श्रेष्ठिभृत्येन हारिणा । प्रातिवेश्मिकनारीभि-स्ताभिः षोडशभिः समं ॥८५॥ लज्जातः प्रीतितः स्नेहा-द्भावाच्च बहुभिर्जनैः । प्रारब्धं तत्परं स्वल्पैः, पूर्णीचक्रे महत्तपः ॥८६॥ दधिदुग्धाज्यपक्वान्न-खाद्यस्वादिमवस्तुभिः । सर्वतः संभृते धाम्नि, तौ ताद्यतपःपरौ ॥ ८७ ॥ तन्मित्रं नरदेवस्त-त्तपःश्लाघां चकार वै । परं शङ्का कृता तेन, मुखशुद्ध्यादिवर्जनात् ॥ ८८ ॥ तपःसमाप्तौ विधिना, ताभ्यामुद्यापनादिकं । सर्वं सविस्तरं चक्रे, सप्तक्षेत्र्याश्च पोषणं ॥ ८९ ॥ कालं कृत्वा

सभूर्वेद्रः, संयमाद्यंदनोऽच्युते । अशोकश्रीश्च तत्रैवा–भूत्तत्सामानिकः सुरः ॥ ९० ॥ अच्युतेंद्रस्ततश्च्युत्वा, श्रीचंद्रोऽभूत्कुशस्थले । सोऽयं त्वं त्वत्सुहृद्देवः, सेयं चंद्रकला प्रिया ॥९१॥ शुकातो नरदेवोऽपि, भवं भ्रांत्वा सुबह्वपि । अभूतिसंहपुरे विप्रो, भरणस्तान्नगाश सः ॥ ९२ ॥ श्रीमतिसत्राद्रिमायातो, गुणचंद्रः प्रधानधः । सोऽप्येषोऽस्मिन् भवेऽप्यासी–त्सुहृत्प्राणप्रियस्तव ॥ ९३ ॥ स शुरगः सा च त्व(त)द्भागी, त्व(त)त्पुण्ययोगतोऽधुना । तत्रैवाभूत्पुरे लक्ष्मी–दत्तो लक्ष्मीवती प्रिया (परा) ॥ ९४ ॥ ताभ्यां च पालितः शाक्य–स्नेहतस्त्वं स्वपुत्रवत् । जाताः षोडश नार्यस्ता, राजपुत्र्यः प्रियाश्च ते ॥ ९५ ॥ सुलसस्य भवे वेश्या, या सा मिहोश(मिल्लगन)मोहिनी । इत्यादि सफलं सूरिः, श्रीचंद्रचरितं जगौ ॥ ९६ ॥ तन्निशम्य कुमारस्य, जज्ञे जातिस्मृतिस्तदा । दृष्टास्ते प्राग्भवास्तेन, साक्षादिव गुरूदिताः ॥ ९७ ॥ ताभिश्चंद्रकलाद्याभिः, प्रियाभिः सुहृदापि च । यथागतप्राग्भवा दृष्टाः, स्तुतास्तैः सूरयस्तदा ॥ ९८ ॥

तदा सुग्रीवपुत्र्यापि, प्राग्भवस्मृतियोगतः । रत्नवत्या धृतः स्नेहात्, श्रीचंद्रोऽधिकदीप्तिवान् ॥९९॥ श्रीचंद्रेण तदा तत्र, धापिता गुरुसाक्षिकं । सर्वे ते रत्नपेगाद्या, रत्नचूडमभोजयन् ॥८०॥ सुग्रीवमणिचूडाभ्यां, क्षामणं कारितं मिथः । तैः समं नागरीना च, प्रविवेश सपुत्सवं ॥ १ ॥ तत्र याम्योत्तरश्रेणि–द्वयसत्काः खगाधिपाः । आदायैताः सुतां स्वां स्वां, रत्नादिनामधेय मे ॥ २ ॥ ततो रत्नवती रत्न–चूडा सा मणिचूलिका । अन्याश्च रत्नकांताद्या, विद्याधरसुताः पराः ॥ ३ ॥ परिणीता दयावेग, तातां च करमोचने । खगामिन्यादिका विद्याः, प्रासाश्च कामरूपिणी ॥ ४ ॥ युग्मं ॥ सुग्रीवाद्याः खगाधीशा, श्रीचंद्रराज्यपाः । [illegible] तत्र सोरमाहं, पलभाग्याधिकत्वतः ॥ ५ ॥ श्रीचंद्रं सद्विधेश्चक्रु–र्विद्याभृच्चक्रवर्तिनं । सिद्धशृंगे

ततस्तेन, यात्रा चक्रे सुनिस्तरा ॥ ६ ॥ युग्मं ॥ पितृमातृकलत्रादि-युक्तो विद्याधरैः सह । सर्वाणि नगराणीक्षां-चक्रे चक्री स तद्गिरो ॥ ७ ॥ ततश्च चित्रयन्त्राभ्रं, विद्याभृद्वर(द्वंश)सैन्ययुक् । रत्नविद्युल्लतादंडो, निःस्वानध्वानगर्जितः ॥ ८ ॥ द्विपक्षरन्मदांभोमि-र्भुवं सिंचन् रसात्मकः । शुक्लध्वजबलाकौघः, सर्वतः शस्यवर्धकः ॥ ९ ॥ दारिद्र्यग्रीष्मसं(जं)तापं, प्राणिनां शमयन् स्वतः । क्रमात्कुशस्थलं प्राप, श्रीचंद्रेंद्रघनाघनः ॥ १० ॥ त्रिभिर्विशेषकं ॥ मंचोन्मंचमहामंचै, रंभास्तंभैः सतोरणैः । मौक्तिकस्वस्तिकाद्यैश्च, प्रोद्यत्कुंकुमहस्तकैः ॥ ११ ॥ पुष्पस्रग्भिर्वितानैश्च, विचित्रैः पटमंडपैः । नानाविधैर्ध्वजैर्गीतै-र्वाद्यैर्नृत्यैरनेकधः ॥ १२ ॥ स्त्रीणां धवलगानैश्च, स्थाने स्थानेऽतिशोभिते । श्रीखंडकुंकुमांभोभिः, संस्कृते(संसक्ते) राजसद्मनि ॥ १३ ॥ स्फारशृंगारसंशोभि-नरनारीमनोहरे । कुशस्थलपुरे श्रीमान्, श्रीचंद्रः प्राविशत्तदा ॥ १४ ॥ चतुर्भिः-कलापकं ॥ मंगलार्थं कृतैः पूर्ण-कुंभैरक्षतपात्रकैः । तदाजनि पुरं सर्वं, संकीर्णं राजसद्म च ॥ १५ ॥ अक्षतैः सधवस्त्रीभि-र्वर्धापितः स मौक्तिकैः । मट्टचट्टैः कवींद्रैश्च, स तत्रानेकधा स्तुतः ॥ १६ ॥

ततः सिंहासनासीन-पितृपादांतिके स्थितः । श्रीचंद्रः खेचरैर्भूपैः, सेव्यमानः सदस्यभात् ॥ १७ ॥ तदा च कुंडिनाधीशो, द्वारपालकथ्यचितः । तत्रागात्प्राभृतं मुक्त्वा, तदग्रे वानरीं च तां ॥ १८ ॥ सभ्यान् विस्मापयन् भक्त्या, तं ननाम वदन्निति । क्षम्यतामपराधो मे, मया श्रागज्ञानतोऽजनि ॥ १९ ॥ युग्मं ॥ केयं च कोऽपराधः प्रा-गिति पृष्टो नृपेंदुना । करौ नियोज्य सोऽप्यादी-च्चरित्रं यथास्थितं ॥ २० ॥ ततः पितृगिरा कृष्णां-जनं प्रक्षिप्य तदृशोः । सरस्वतीं पटूचक्रे, श्रीचंद्रः सर्वसाक्षिकं ॥ २१ ॥ तया सलज्जया तत्र, नत्वा श्वशुरपादयोः(मात्मनः) । श्वश्रूं चंद्रकलाद्याश्च, नत्वास्थायि सखीयुजा ॥२२॥

अरिमर्दनभूपोऽसौ(ऽपि), धिक्कुर्वन् स्वसुतं तदा । निवारितः कुमारेण, स तत्पादाब्जमाश्रितः ॥ २३ ॥ सा मोहिन्यपि तत्रागा–च्छ्रिष्ठे रत्नादिभिः सह । श्रीचंद्रः स्वास्पदद्वारे–ऽस्थापयत्ताद्दशीं च तां ॥ २४ ॥ तेनोक्तमार्हतं धर्मं, सा बाला ब्रह्मचारिणी । कुर्वंती शिरसा नित्यं, श्रीचंद्रोपानहौ वहन्(हित) ॥ २५ ॥ ब्राह्मण्याः शिवमत्यास्त–च्छायकं पुरम(मा)र्पयत् । दरीतस्तद्धनं लात्वा, सर्वं व्यापारयच्च सः ॥२६॥ ततो विद्यावलाद्विद्या–धरभूमिभृतां बलात् । बलात्ताद्दक्सहायानां, चतुरंगचमूबलात् ॥ २७ ॥ स्वभाग्यस्य बलाद् बुद्धि–बलात् श्रीचंद्रभूभुजा । आसमुद्रं त्रिखंडोर्वी, हेलयासाधि सर्वतः ॥ २८ ॥ युग्मं ॥ स षोडशसहस्राणां, देशानामधिपैर्नतः । रथाश्वेभभटाद्यैश्चा–र्धचक्रिप्रभुताश्रुतः ॥ २९ ॥ सुदिने शुभलग्ने च, शास्त्रोक्तविधिना तदा । पित्रा प्रतापसिंहेन, तैः खगैस्तैर्नृपैः सह ॥ ३०॥ श्रीचंद्रस्य महान् राज्या–भिषेको विदधे मुदा । स श्रीराजाधिराजोऽभू–देकातपत्रराज्यभृत् ॥ ३१ ॥ युग्मं ॥ जज्ञे पट्टमहादेवी, तस्य चंद्रकला प्रिया । तदधःस्थाः पट्टराज्ञ्यो–ऽभूवन् षोडश ता इमाः ॥ ३२ ॥ कनकावली १ पद्मश्री २–नाम्न्यौ मदनसुंदरी ३ । प्रियंगुमंजरी ४ रत्न–चूला ५ रत्नवती ६ तथा ॥३३॥ मणिचूला ७ ष्टमी तार–लोचना ८ गुणवत्यपि ९ । सा च चंद्रमुखी १० चंद्र–लेखा ११ तिलकमंजरी १२ ॥३४॥ कनकाद्यपती १३ सेने १४, सुलोचना १५ सरस्वती १६ । तस्यासंश्च ततोऽधस्ता–द्राज्ञीशतानि षोडश ॥३५॥ ताश्च चंद्रावलीरत्न–कांताधनवतीमुखाः । रूपलावण्यसौभाग्य–लक्ष्मीकेलिनिकेतनं ॥ ३६ ॥ चतुराकोविदामुख्या, भोगपत्न्यः सहस्रशः । तस्याभवंस्तथा प्राज्य–तद्भोग(ग्य)फलकर्मतः ॥ ३७ ॥ कृत्वा तावंति रूपाणि, स्वैरं विद्याप्रयोगतः । स्वेच्छया बुभुजे भोगान्, श्रीश्रीचंद्रनृपार्यमा ॥ ३८ ॥ सुग्रीवस्योत्तरश्रेणि–राज्यं प्रादायि तेन तत् । याम्यश्रेणेश्च तद्रत्न–ध्वजाख्यमणिचूडयोः ॥ ३९ ॥

चंद्रकलाकुक्षे–श्चंद्रस्वमात्सुतोऽजनि ॥ ५७ ॥ पूर्णचंद्र इति नाम (इत्यभिधां), ददौ तस्य पितामहः । जज्ञिरे सर्वदेशेषु, तज्जन्मवृहदुत्सवाः ॥ ५८ ॥ अन्यासामपि राज्ञीनां, जाताः पुत्रा अनेकशः । तैः सुतैः शुशुभेऽत्यंतं, श्रीचंद्रनरवासवः ॥ ५९ ॥ इतो नृपमहामल्लः, पत्नी शशिकला तयोः । पुत्री प्रेमकलानाम्नी, तया सार्धं सुविस्तरं ॥ ६० ॥ एकांगवरवीरस्य, विवाहोऽकारि भूभुजा । तस्यैवं सकुटुंबस्य, वासरा यांति सोत्सवाः ॥ ६१ ॥ युग्मं ॥

तस्मिन् पुरेऽन्यदोद्याने, मुनिवृंदपरीवृताः । आययुः सुव्रताचार्याः, पुण्यपुंजा इवोज्ज्वलाः ॥६२॥ उद्यानपालकस्यास्याद्, ज्ञात्वा गुरुसमागमं । हृष्टाः प्रतापसिंहाद्याः, सप्रियाः श्रेष्ठिनश्च ते ॥६३॥ श्रीचंद्रश्च सशुद्धांतो, मंत्रिणस्तद्वनेऽखिलाः । विधिनेत्य गुरून्नत्वा, यथोचितमुपाविशन् ॥ ६४ ॥ गुरुर्धर्माशिषं तेभ्यो, दत्त्वा धर्ममुदाहरत् । जिनैरिह यतिश्राद्ध–भेदाद्धर्मो द्विधोदितः ॥६५॥ यतिधर्मो भवेत्पंच–महाव्रतैस्त्रिगुप्तितः । समितिभ्यश्च देवार्चा–दिको धर्मश्च गेहिनां ॥६६॥ तद्यथा( तथा च )–पूयाए मणसंती, मणसंतीए सुहावहं झाणं । सुहझाणाओ मुक्खो, मुक्खे सुहं (क्खं) अणाबाहं ॥ ६७ ॥ उक्कोसं दव्वथुइं, आराहिय जाइ अच्चुयं जाव । भावत्थवेण पावइ, अंतोमुहुत्तेण निव्वाणं ॥ ६८ ॥ तथा च–मणसा होइ चउत्थं, छट्ठफलं उट्ठियंमि संभवइ । गमणस्स य आरंभे, होइ फलं अट्ठमोवासो ॥ ६९ ॥ गमणे दसमं तु भवे, तह चेव दुवालसं गए किंपि । मग्गे पक्खोवासं, मासोवासं च दिट्ठेण ॥ ७० ॥ संपत्ते जिणभवणे, पावइ छम्मासियं फलं जीवो । संवच्छरियं च फलं, दारपएसट्ठिओ लहइ ॥ ७१ ॥ पायाहिणेण पावइ, वरिससयफलं तओ जिणे महिए । पावइ वरिससहस्सं, अणंतपुण्णं जिणे थुणिए ॥७४॥ उक्तं च–सयं पमज्जणे पुण्णं, सहस्सं च विलेवणे । सयसहस्सिया माला, अणंतं गीयवाइए ॥ ७२ ॥ अथ भावपूजा–

जयादीनां कियान् देश–श्चतुर्णामपि चार्पितः । सर्वत्र धर्मसाम्राज्यं, वितेने तेन भूभृता ॥ ४० ॥ षोडशसहस्रसंख्या, मंत्रिणस्तस्य जज्ञिरे । महामंत्रिण एतेभ्यो, मुख्याः शतानि षोडश ॥ ४१ ॥ महामात्यवरा मुख्या, लक्ष्मणाद्याश्च षोडश । एकः श्रीकरणस्तस्य, गुणचंद्रः प्रधानराट् ॥ ४२ ॥ द्विचत्वारिंशता लक्षै–र्गजैरश्वतरै रथैः । करभैः शकटैश्चापि, दशकोटितुरंगमैः ॥ ४३ ॥ धनुर्धरादिकोट्यष्ट–चत्वारिंशद्भटोत्तमैः । धनंजयेन सेनान्या, सोऽनिशं सेवितोऽभवत् (तो बभौ) ॥ ४४ ॥ युग्मं ॥ द्विचत्वारिंशत्सहस्रै–र्दीप्तैरुच्चैर्महाध्वजैः । निःस्वानैरखिलैर्वाद्यै–स्तावद्भिर्नरवाहनैः ॥ ४५ ॥ अदीपिष्ट स राजेंद्र–श्छत्रचामरधारिभिः । तैरंगरक्षकैः पुंभिः, कुंजराद्यवधानकैः ॥ ४६ ॥ युग्मं ॥ हरितारकभट्टैश्च, वीणारवादिगायनैः । कवींद्रैश्च स भूचंद्रः, स्तूयमानः सदाशुभत् ॥ ४७ ॥ तेन सर्वेषु देशेषु, सर्ववर्णेषु तन्नृणां । यथेप्सितं धनं दत्त्वा, बलान्मिषेण केनचित् ॥ ४८ ॥ सर्वा भूरनृणीचक्रे–ऽखिलनैमित्तिकैस्ततः । जज्ञे(ने) सर्वत्र शास्त्रादौ, चंद्रसंवत्सरो(रोऽ)ङ्कितः ॥ ४९ ॥ युग्मं ॥ सत्रागारप्रपाधर्म–शालाचैत्यमठादयः । प्रत्येकं कारितास्तेन, सहस्राणां च षोडश ॥ ५० ॥ पितृमात्रादिभिः सार्धं, तेन सप्तदशाद्भुताः । चक्रिरे तीर्थयात्रास्ता, बहूनां बोधिबीजदाः ॥ ५१ ॥ जिनार्चावश्यकादीनि, धर्मकृत्यानि सोऽनिशं । चक्रे भक्तिं च पित्रादेः, सामग्र्या गुरुपादयोः ॥ ५२ ॥ नित्यं साधर्मिकादीनां, वात्सल्यं तेन युक्तितः । अमारिपटहोद्घोषः, सर्वदेशेष्वकारि च ॥ ५३ ॥ प्रासादैर्जिनबिंबैश्च, ग्रामे ग्रामे गिरौ गिरौ । स्थापितैस्तेन सर्वत्र (विधिना स्थापितैस्तेन), चक्रे भूर्जिनमंडिता ॥ ५४ ॥ जिनाज्ञापालकः सोऽभू–त्सप्तक्षेत्र्यां धनं वपन् । चतुःपर्व्यां विशेषेण, कुव्यापारं निषेधयन् ॥ ५५ ॥ जिनोक्तसर्वतत्त्वानां, श्रद्धानात्सव्यधात्क्रियाः । तपांसि च जिनोक्तानि, सोद्यापनानि विस्तरात् ॥ ५६ ॥ एवं बहौ गते काले, मुख्यार्थत्रयसेवनात् । तस्य

चंद्रकलाकुक्षे–श्चंद्रस्वमात्सुतोऽजनि ॥ ५७ ॥ पूर्णचंद्र इति नाम (इत्यभिधां), ददौ तस्य पितामहः । जज्ञिरे सर्वदेशेषु, तज्जन्म-वृहदुत्सवाः ॥ ५८ ॥ अन्यासामपि राज्ञीनां, जाताः पुत्रा अनेकशः । तैः सुतैः शुशुभेऽत्यंतं, श्रीचंद्रनरवासवः ॥ ५९ ॥ इतो नृपमहामल्लः, पत्नी शशिकला तयोः । पुत्री प्रेमकलानाम्नी, तया सार्धं सुविस्तरं ॥ ६० ॥ एकांगवरवीरस्य, विवाहोऽकारि भूभुजा । तस्यैवं सकुटुंबस्य, वासरा यांति सोत्सवाः ॥ ६१ ॥ युग्मं ॥

तस्मिन् पुरेऽन्यदोद्याने, मुनिवृंदपरीवृताः । आययुः सुव्रताचार्याः, पुण्यपुंजा इवोज्ज्वलाः ॥६२॥ उद्यानपालकस्यास्याद्, ज्ञात्वा गुरुसमागमं । हृष्टाः प्रतापसिंहाद्याः, सप्रियाः श्रेष्ठिनश्च ते ॥६३॥ श्रीचंद्रश्च सशुद्धांतो, मंत्रिणस्तद्वनेऽखिलाः । विधिनेत्य गुरून्नत्वा, यथोचितमुपाविशन् ॥ ६४ ॥ गुरुर्धर्माशिषं तेभ्यो, दत्त्वा धर्ममुदाहरत् । जिनैरिह यतिश्राद्ध–भेदाद्धर्मो द्विधोदितः ॥६५॥ यतिधर्मो भवेत्पंच–महाव्रतैस्त्रिगुप्तितः । समितिभ्यश्च देवार्चा–दिको धर्मश्च गेहिनां ॥६६॥ तद्यथा( तथा च )–पूयाए मणसंती, मणसंतीए सुहावहं झाणं । सुहझाणाओ मुक्खो, मुक्खे सुहं (क्खं) अणाबाहं ॥ ६७ ॥ उक्कोसं दव्वथुइं, आराहिय जाइ अच्चुयं जाय । भावत्थवेण पावइ, अंतोमुहुत्तेण निवाणं ॥ ६८ ॥ तथा च–मणसा होइ चउत्थं, छट्ठफलं उट्ठियंमि संभवइ । गमणस्स य आरंभे, होइ फलं अट्ठमोवासो ॥ ६९ ॥ गमणे दसमं तु भवे, तह चेव दुवालसं गए किंपि । मग्गे पक्खोवासं, मासोवासं च दिट्ठेण ॥ ७० ॥ संपत्ते जिणभवणे, पावइ छम्मासियं फलं जीवो । संवच्छरियं च फलं, दारपएसट्ठिओ लहइ ॥ ७१ ॥ पायाहिणेण पावइ, वरिससयफलं तओ जिणे महिए । पावइ वरिससहस्सं, अणंतपुण्णं जिणे थुणिए ॥७४॥ उक्तं च–सयं पमज्जणे पुण्णं, सहस्सं च विलेवणे । सयसहस्सिया माला, अणंतं गीयवाइए ॥ ७२ ॥ अथ भावपूजा–

कंचणमणिसोवाणं, थंभसहस्सूसियं सुवन्नतलं । जो कारिज्ज जिणहरं, तओ वि तवसंजमो अहिओ ॥ ७३ ॥ इत्यादि श्रवणात्तत्र, गुरुपार्श्वे प्रतापराट् । काश्चिच्च सूर्यवत्याद्या, लक्ष्मीदत्तश्च सप्रियः ॥ ७४ ॥ मतिराजादयो सुद्धाः, श्रीचंद्रानुमतिं बलात् । लात्वा प्रवव्रजुः कलशा-ष्टाह्निकामहपूर्वकं ॥७५॥ तदा केचन सम्यक्त्वं, देशतो विरतिं परे । केचिच्च सर्वविरतिं, यथाशक्त्या(क्ति) प्रपेदिरे ॥७६॥ श्रीचंद्रस्तु सपत्नीको, गृहिधर्मं प्रपन्नवान् । सम्यक्त्वमूलपंचाणु-व्रतं सशोत्तरव्रतं ॥ ७७ ॥ तथाहि-

अरिहंतपयं पणमिय, करेमिभिग्गहपमाण सत्थी ( मिच्छा ) ए । सम्मत्तमूलवारस-वयाणुकमओ गुरुसमक्खं ॥ ७८ ॥ अरिहंतो महदेवो, जावज्जीवं सुसाहुणो गुरुणो । जिणपन्नत्तं तत्तं, इय सम्मत्तं मए गहियं ॥७९॥ जिणपूअणं तिसंज्झं, करेमि आवस्सयं उभयकालं । जिणगब्भगेहमज्झे, दसविह आसायणं न करे ॥ ८० ॥ तं जहा-तंबोल १ असुइखेवण २, विगहा ३ सुअणं च ४ भत्त ५ पाणं च ६ । कीलाइ ७ कलहु ८ वाणह ९, हास १० जिणासायणादसगं ॥ ८१ ॥ नवकारसहस्सेगं, गुणेमि उस्सग्गि तिसयसज्झायं । पइदिण पयावलक्खं, सत्त य खित्ताइं वचेमि ॥ ८२ ॥ पाणाइवायविरमण-पढमवए संविगप्पकाएणं । न वहे न वहावेमि, विणावराहं तसे जीवे ॥ ८३ ॥ न वए पणविहमलियं, बीयमुसावायविरमणवयम्मि । गोभूमिकन्नलीए, थाणिमोसे अलियसक्खिं ॥ ८४ ॥ गिह्णे किंपि न तईए, अदत्तादाणविरमणवयम्मि । थूलमदिन्नं निहिमाइ, सावराहाण मुत्तूणं ॥ ८५ ॥ तुरिए अबंभविरमण-वयंमि काएण नियकलत्ताइं । मुत्तूण जावजीवं, सीलं पाले न परिणेमि ॥ ८६ ॥ पंचमवए परिग्गह-पमाणि नवविहपरिग्गहोसरणं । जहसत्ति करोमि अहं, तिखंडरज्जाइमेलेणं ॥ ८७ ॥ धणधन्नरूपकणगे, कुविए वत्थू अ खित्तदुपए अ । चउप्पयंमियं नवहा, परिग्गहमहमित्तियं चेव ॥८८॥ दिसिविरमणछट्ठवए,

तिरिय तिरवंडं अहो अइगकोसं । उड्ढं वेअड्डुगिरिं, जिणजचं मुत्तु न उ लंघे ॥ ८९ ॥ भोगुवभोगपमाणे, सत्तमव-
इणंतकाईअ अभक्खे । वज्जे भत्तजलाइ य, वत्थाभरणाइ माणकरे ॥९०॥ तं जहा-सचाइं वज्जपिंडी १, मुहाइं कंदाइं सूरणं २
अद्दं ३ । आलू ४ तह पिंडालू ५, अद्दहलिद्द ६ छकच्चूरो ७ ॥ ९१ ॥ सत्तावरी ८ विराली ९, कुमारि १० थोहरि ११
गलोइ १२ विरुहाइं १३ । लसणं १४ वंसकरिल्ला १५, गज्जर १६ तह लोअणं १७ लोढा १८ ॥ ९२ ॥ गिरिकन्नि १९
किसलपत्ता २०, वंसेरुग २१ थिग्ग २२ अल्लमुत्था य २३ । तह लूणरुक्खछल्ली २४, खिल्लहडा २५ अमयवल्ली अ २६
॥ ९३ ॥ मूलय २७ छूअरवल्ली २८, पद्मादकवत्थला य २९ भूमिरुहा ३० । पल्लंक ३१ कोमलंबिलि ३२, वज्जे बत्तीसणं-
ताइं ॥ ९४ ॥ तथा-महु १ मज्ज २ मंस ३ नवणीअ ४, पंचुंबरि ९ रयणिभुत्त १० संधाणं ११ । विस १२ हिम १३
करगा १४ मट्टी १५, कच्चगोरसिविदल १६ णंताइं १७ ॥९५॥ पुप्फिय १८ चलियन्नरसे १९, अणायफलफुल्ल २० तुच्छ
२१ बहुबीए २२ । इय बावीस अभक्खे, वएमि जिपमिस्सपच्चफले ॥ ९६ ॥ पंपुट्टबिल्लपिंचू-काइमरिंगणयफणि(ण)सगुंदा
य । खसखसपिल्लुसेल्लर-गंगेटयपक्कगोल्हे अ ॥ ९७ ॥ रावणमउरकुडीत(भ)ड-जांबुडी(टीं)बरुअपक्ककरमंदे । वाल्हउलिमहु-
यघामण-गुरुघोरेकच्चलूणतिले ॥९८॥ नवि लेमि उक्कधारं, जलमलियक्कयं फलं च मुहे । दुदिणुद्ध दहिय फागुण-उड्ढं भक्खेमि
नेव तिले ॥९९॥ तथा-इंगाल १ वणह २ साघड ३-भाडय ४ फोडीइ ५ कम्मजीवणयं । न(त)हदंत ६ लक्ख ७ रस ८-विस ९
केस १० सावज्जवाणिज्जं ॥१००॥ कम्मं ज जंतपिल्लण ११-निल्लंछण १२ सरदहाइसोसवणं १३ । दवदाण १४ मसइपोसं १५
पनरस एयाइं वज्जेमि ॥ १ ॥ अट्ठम अणट्ठदंड-त्थाए (त्राय) वए अट्टरुद्दमवज्झाणं । पावुवएसं न करे, हिंसपदाणं पमाय-

१७

रणं ॥ २ ॥ सत्थग्गिमुसलजंतग–भेसज्जेमंतमूलव(च)णकज्जे । जियसुद्धजुअरमणं, न देमि न करेमि व अणत्थं ॥ ३ ॥ सामाइयनवमवए, अट्टं रुद्दं च झाण मुत्तूणं । कुव्वे मुहुत्तमित्तं, समयाभावं जहासत्ती ॥ ४ ॥ देसावगासिअवए, दसमे, जं दिसिवयस्स परिमाणं । तं संखेवेमि दिणे, रयणिंमि अभिग्गहा अन्ने ॥५॥ भत्ताइ १ विगइ २ वाहण ३, सचित्त ४ दिसि ५ दव ६ वत्थ ७ तंबोले ८ । सयण ९ विलेवणु १० वाणह ११, न्हाण १२ कुसुम १३ वंभचिंतेमि ॥ ६ ॥ इग सचित्त दु सग ( सागे )–त्ति विगइ चउजाणफुल्लफलजयणा । पण सिज्जासण अट्ठ य, पत्ते दसदव्वमहदियहे ॥ ७ ॥ पोसहवए इगारसि, चउपव्वे पावकम्मवावारं । न करे न कारवेमि, तह चउविह पोसहो तत्थ ॥८॥ तह संविभागबारस–वयंमि वियरेमि अतिहिसाहूणं । चउहाहारं वसहि–सयणासण(णोसह)वत्थपत्ताई ॥९॥ एवं पंचेव अणु–वयाइं सिक्खावयाणि चत्तारि । तिणि ( ण्णि ) गुणवयाणि–माइं मह बारस वयाइं ॥१०॥ अह सेसारंभेसु, सव्वेसु अहं करेमि जहसत्ती । तसथावरजीवाणं, रक्खं जयणं पइपइम्मि ॥११॥ मुत्तूण रायगुरुगण–बलसुरअभिओगवित्तिकंतारं ६ । सव्वसमाहि ७ महत्तर ८, सहसा ९ णाभोग १० मवि नियमा ॥१२॥ अरिहंतसिद्धसाहू––सुदिट्ठिसुरअप्पसक्खिगिहिधम्मो । सिरिसुव्वयगुरुपासे, सिरिचंदनिवेण पडिवन्नो ॥१३॥ सम्मत्तमूलो गुणआलवालो, सीलप्पवालो वयसंधमालो । गिहत्थधम्मो वरकप्परुक्खो, फलेउ मे–सासयसुक्खसुक्खो ॥ १४ ॥

इति धर्मं प्रपद्यैष, प्रणम्य श्रीगुरुक्रमान् । प्रतापसिंहराजर्षि–प्रभृतीन्नवदीक्षितान् ॥ १५ ॥ साधून् सुव्रतीमुख्याः, साध्वीस्ता अखिलास्तदा । नत्वा प्रत्येकमीडित्वा, क्षरन्नेत्राश्रुनिर्झरः ॥ १६ ॥ श्रीचंद्रस्तद्गुणांश्चित्ते, संस्मरन् सदने ययौ । राज्यश्चंद्रकलाद्याश्च, सर्वे पौरजना अपि ॥ १७ ॥ स्वस्वस्थाने ययुस्तस्मात्, श्रीगुरुः साधुभिः सह । नरेंद्रानुमतिं लात्वा,

विजहार भुवस्तले ॥१८॥ चतुर्भिःकलापकं ॥ इतः श्रीचंद्रभूमीशः, श्राद्धधर्मं प्रपालयन् । खगामिन्यादिविद्यानां, योगाद्भ्रात्रादिसंघयुक् ॥ १९ ॥ सिद्धक्षेत्रादितीर्थेषु, यात्राश्चक्रे महीतले । शाश्वतेषु च वैताढ्य–गिरिनंदीश्वरादिषु ॥ २० ॥ युग्मं ॥ इत्यनेन महातीर्थ–यात्राः पितृमतादनु । चक्रिरेऽष्टादश स्फारा–स्ता लघ्व्यः पितरौ विना ॥ २१ ॥ तद्राज्यं धर्मसाम्राज्यं, कुर्वन्नेव सुखेन सः । तत्रैत्यागमयत्कालं, कियंतं दीप्तधर्मधीः ॥ २२ ॥

इतो मातृपितृश्रेष्ठि–न्याद्यास्ते हि तपोविधेः । शुद्धं प्रपाल्य चारित्र–मेकावतारिणोऽभवन् ॥ २३ ॥ इतः श्रीचंद्रभूपेन, तत्स्थाने सुविशुद्धिकृत् । भक्त्या महोन्नतस्तूप–मकारि करुणात्मना ॥ २४ ॥ रथयात्रा महीपेन, सर्वदेशेषु कारिता । ताश्च चंद्रकलाद्याभिः, पत्नीभिश्चक्रिरे पृथक् ॥ २५ ॥ क्रमात् श्रीचंद्रभूभानोः, पुत्राः पुत्र्यश्च जज्ञिरे । शतानि षोडशैतेषु, पुत्राः सप्तदशाद्भुताः ॥ २६ ॥ तेष्वाद्यः पूर्णचंद्राख्यः, पुत्ररत्नं सुभाग्यवान् । रेजे कनकसेनाद्यै–र्भ्रातृभिः सोऽतिधर्मवान् ॥ २७ ॥ एवं श्रीचंद्रभूशक्रः, कुमारपदवीं वरां । भुक्त्वा द्वादश वर्षाणि, प्राप्तवानखिलाः कलाः ॥ २८ ॥ ततो वर्षशतं ह्येकं, राज्यमेकातपत्रितं(त्रकं) । प्रपाल्य वरवीरस्य, भ्रातुः श्रीपर्वते गिरौ ॥ २९ ॥ चंद्रपत्तनराज्यं त–द्दौ संविग्नमानसः । स्वयं व्रतं जिघृक्षुः सन्, पूर्णचंद्रतनूभुवः ॥ ३० ॥ पट्टाभिषेकं कृतवान्, कुशस्थलेऽतिविस्तरात् । सोऽमाचंद्रकलापुत्रो, राजा पूर्णकलापतिः ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ ततः कनकसेनस्य, कनकादेहजन्मनः । रम्यं कनकपूराज्यं, नवलक्षाधिपत्यभृत् ॥ ३२ ॥ वैताढ्यगिरिराज्ये द्वे, रत्नचूडसुतस्य च । समर्प्य कौंडलं राज्यं, श्रीमल्लगनपस्य च ॥ ३३ ॥ राज्यं तद्रत्नमालस्य, शिवचंद्रांगजन्मनः । दत्त्वा मदनचंद्रस्य, राज्यं मलयदेशजं ॥ ३४ ॥ दत्त्वा

रणं ॥ २ ॥ सत्थग्गिमुसलजंतग-मेसज्जेयंतमूलत(व)णकट्ठे । जियजुद्धजूअरमणं, न देमि न करेमि व अणत्थं ॥ ३ ॥ सामाइयनवमवए, अट्टं रुद्दं च झाण मुत्तूणं । कुवे मुहुत्तमित्तं, समयामावं जहासत्ती ॥ ४ ॥ देसावगासिअवए, दसमे, जं दिसिवयस्स परिमाणं । तं संखेवेमि दिणे, रयणिंमि अभिग्गहा अन्ने ॥५॥ भत्ताइ १ विगइ २ वाहण ३, सचित्त ४ दिसि ५ दव ६ वत्थ ७ तंबोले ८ । सयण ९ विलेवणु १० वाणह ११, न्हाण १२ कुसुम १३ बंभर्चितेमि ॥ ६ ॥ इग सचित्त दु सग ( सागे )-त्ति विगइ चउजाणफुल्लफलजयणा । पण सिज्जासण अट्ठ य, पचे दसदवमहदियहे ॥ ७ ॥ पोसहवए इगारसि, चउपवे पावकम्मवावारं । न करे न कारवेमि, तह चउविह पोसहो वत्थ ॥८॥ तह संविभागबारस-वयंमि वियरेमि अतिहिसाहूणं । चउहाहारं वसहि-सयणासण(पोसह)वत्थपत्ताइं ॥९॥ एवं पंचेव अणु-वयाइं सिक्खावयाणि चत्तारि । तिणि ( ण्णि ) गुणवयाणि-माइं मह बारस वयाइं ॥१०॥ अह सेसारंभेसु, सवेसु अहं करेमि जहसत्ती । तसथावरजीवाणं, रक्कं जयणं पइपइम्मि ॥११॥ मुत्तूण रायगुरुगण-बलसुरअभिओगवित्तिकंतारं ६ । सवसमाहि ७ महत्तर ८, सहसा ९ णाभोग १० मवि नियमा ॥१२॥ अरिहंतसिद्धसाहू—सुदिट्ठिसुरअप्पसक्खिगिहिधम्मो । सिरिसुवयगुरुपासे, सिरिचंदनिवेण पडिवक्को ॥१३॥ सम्मत्तमूलो गुणआलवालो, सीलप्पवालो वयसंघसालो । गिहत्थधम्मो वरकप्परुक्को, फलेउ मे—सासयमुक्खसुक्खो ॥ १४ ॥

इति धर्मं प्रपद्यैप, प्रणम्य श्रीगुरुक्रमान् । प्रतापसिंहराजर्षि-प्रभृतीन्नवदीक्षितान् ॥ १५ ॥ साधून् सूर्यवतीमुख्याः, साध्वीस्ता अखिलास्तदा । नत्वा प्रत्येकमीडित्वा, क्षरन्नेत्राश्रुनिर्झरः ॥ १६ ॥ श्रीचंद्रस्तद्गुणांश्चित्ते, संस्मरन् सदने ययौ । राज्यश्चंद्रकलाद्याश्च, सर्वे पौरजना अपि ॥ १७ ॥ स्वस्वस्थाने ययुस्तस्मात्, श्रीगुरुः साधुभिः सह । नरेंद्रानुमतिं लात्वा,

विजहार भुवस्तले ॥१८॥ चतुर्भिः कलापकं ॥ इतः श्रीचंद्रभूमीशः, श्राद्धधर्मं प्रपालयन् । खगामिन्यादिविद्यानां, योगाद्रा-
ग्रादिसंघयुक् ॥ १९ ॥ सिद्धक्षेत्रादितीर्थेषु, यात्राश्चक्रे महीतले । शाश्वतेषु च वैताढ्य-गिरिनंदीश्वरादिषु ॥ २० ॥ युग्मं ॥
इत्यनेन महातीर्थ-यात्राः पितृव्रतादनु । चक्रिरेऽष्टादश स्फारा-स्ता लब्ध्यः पितरौ विना ॥ २१ ॥ तद्राज्यं धर्मसाम्राज्यं,
कुर्वन्नेव सुखेन सः । तत्रैत्यागमयत्कालं, कियंतं दीप्तधर्मधीः ॥ २२ ॥

इतो मातृपितृश्रेष्ठि-न्याधास्ते हि तपोविधेः । शुद्धं प्रपाल्य चारित्र-मेकावतारिणोऽभवन् ॥ २३ ॥ इतः श्रीचंद्र-
भूपेन, तत्स्थाने सुविशुद्धिकृत् । भक्त्या महोन्नतस्तूप-मकारि करुणात्मना ॥ २४ ॥ रथयात्रा महीपेन, सर्वदेशेषु
कारिता । ताश्च चंद्रकलाद्याभिः, पत्नीभिश्चक्रिरे पृथक् ॥ २५ ॥ क्रमात् श्रीचंद्रभूभानोः, पुत्राः पुत्र्यश्च जज्ञिरे ।
शतानि षोडशैतेषु, पुत्राः सप्तदशाद्भुताः ॥ २६ ॥ तेष्वाद्यः पूर्णचंद्राख्यः, पुत्ररत्नं सुभाग्यवान् । रेजे कनकसेनाद्यै-
र्भ्रातृभिः सोऽतिधर्मवान् ॥ २७ ॥ एवं श्रीचंद्रभूशक्रः, कुमारपदवीं वरां । भुक्त्वा द्वादश वर्षाणि, प्राप्तवानखिलाः
कलाः ॥ २८ ॥ ततो वर्षशतं ह्येकं, राज्यमेकातपत्रितं(त्रकं) । प्रपाल्य वरवीरस्य, भ्रातुः श्रीपर्वते गिरौ ॥ २९ ॥ चंद्र-
पत्तनराज्यं त-द्ददौ संविग्नमानसः । स्वयं व्रतं जिघृक्षुः सन्, पूर्णचंद्रतनूभुवः ॥ ३० ॥ पट्टाभिषेकं कृतवान्, कुशस्थले-
ऽतिविस्तरात् । सोऽभाच्चंद्रकलापुत्रो, राजा पूर्णकलापतिः ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ ततः कनकसेनस्य, कनकादेहजन्मनः ।
दत्त्वा कनकपूराज्यं, नवलक्षाधिपत्यभृत् ॥ ३२ ॥ वैताढ्यगिरिराज्ये द्वे, रत्नचूडसुतस्य च । समर्प्य कौंडलं राज्यं, श्रीमल्ल-
तनयस्य च ॥ ३३ ॥ राज्यं तद्रत्नमालस्य, शिवचंद्रांगजन्मनः । दत्त्वा मदनचंद्रस्य, राज्यं मलयदेशजं ॥ ३४ ॥ दत्त्वा

रणं ॥ २ ॥ सत्थग्गिमुसलजंतग-मेसजेसंतमूलत(व)णकट्ठे । जियजुद्धजूअरमणं, न देमि न करेमि व अणत्थं ॥ ३ ॥ सामाइयनवमवए, अट्टं रुद्दं च झाण मुत्तूणं । कुवे मुहुत्तमित्तं, समयाभावं जहासत्ती ॥ ४ ॥ देसावगासिअवए, दसमे, जं दिसिवयस्स परिमाणं । तं संखेवेमि दिणे, रयणिमि अभिग्गहा अन्ने ॥५॥ भत्ताइ १ विगइ २ वाहण ३, सचित्त ४ दिसि ५ दव्व ६ वत्थ ७ तंबोले ८ । सयण ९ विलेवणु १० वाणह ११, न्हाण १२ कुसुम १३ बंभचितेमि ॥ ६ ॥ इग सचित्त दु सग ( सागे )-त्ति विगइ चउजाणफुल्लफलजयणा । पण सिज्जासण अट्ठ य, पत्ते दसदव्वमहदियहे ॥ ७ ॥ पोसहवए इगारसि, चउपव्वे पावकम्मवावारं । न करे न कारवेमि, तह चउविह पोसहो तत्थ ॥८॥ तह संविभागबारस-वयंमि वियरेमि अतिहिसाहूणं । चउहाहारं वसहि-सयणासण(णोसह)वत्थपत्ताइं ॥९॥ एवं पंचेव अणु-वयाइं सिक्खावयाणि चत्तारि । तिणि ( ण्णि ) गुणव्वयाणि-माइं मह बारस वयाइं ॥१०॥ अह सेसारंभेसु, सव्वेसु अहं करेमि जहसत्ती । तसथावरजीवाणं, रक्खं जयणं पइपइम्मि ॥११॥ मुत्तूण रायगुरुगण-बलसुरअभिओगवित्तिकंतार ६ । सव्वसमाहि ७ महत्तर ८, सहसा ९ णाभोग १० मवि नियमा ॥१२॥ अरिहंतसिद्धसाहू--सुदिट्ठिसुरअप्पसक्खिगिहिधम्मो । सिरिसुव्वयगुरुपासे, सिरिचंदनिवेण पडिवन्नो ॥१३॥ सम्मत्तमूलो गुणआलवालो, सीलप्पवालो वयसंघमालो । गिहत्थधम्मो वरकप्परुक्खो, फलेउ मे-सासयमुक्खसुक्खो ॥ १४ ॥

इति धर्मं प्रपद्यैप, प्रणम्य श्रीगुरुक्रमान् । प्रतापसिंहराजर्षि-प्रभृतीन्नवदीक्षितान् ॥ १५ ॥ साधून् सूर्यवतीमुख्याः, साध्वीस्ता अखिलास्तदा । नत्वा प्रत्येकमीडित्वा, क्षरन्नेत्राश्रुनिर्झरः ॥ १६ ॥ श्रीचंद्रस्तद्गुणांश्चित्ते, संस्मरन् सदने ययौ । राज्यश्चंद्रकलाद्याश्च, सर्वे पौरजना अपि ॥ १७ ॥ स्वस्वस्थाने ययुस्तस्मात्, श्रीगुरुः साधुभिः सह । नरेंद्रानुमतिं लात्वा,

विजहार भुवस्तले ॥१८॥ चतुर्भिःकलापकं ॥ इतः श्रीचंद्रभूमीशः, श्राद्धधर्मं प्रपालयन् । खगामिन्यादिविद्यानां, योगाद्धाऱ्यादिसंघयुक् ॥ १९ ॥ सिद्धक्षेत्रादितीर्थेषु, यात्राश्चक्रे महीतले । शाश्वतेषु च वैताढ्य-गिरिनंदीश्वरादिषु ॥ २० ॥ युग्मं ॥ इत्यनेन महातीर्थ-यात्राः पितृव्रतादनु । चक्रिरेऽष्टादश स्फारा-स्ता लघ्व्यः पितरौ विना ॥ २१ ॥ तद्राज्यं धर्मसाम्राज्यं, कुर्वन्नेव सुखेन सः । तत्रेत्यागमयत्कालं, कियंतं दीप्तधर्मधीः ॥ २२ ॥

इतो मातृपितृश्रेष्ठि-न्याद्यास्ते हि तपोविधेः । शुद्धं प्रपाल्य चारित्र-मेकावतारिणोऽभवन् ॥ २३ ॥ इतः श्रीचंद्रभूपेन, तत्स्थाने सुविशुद्धिकृत् । भक्त्या महोन्नतस्तूभ-मकारि करुणात्मना ॥ २४ ॥ रथयात्रा महीपेन, सर्वदेशेषु कारिता । ताश्च चंद्रकलाद्याभिः, पत्नीभिश्चक्रिरे पृथक् ॥ २५ ॥ क्रमात् श्रीचंद्रभूभानोः, पुत्राः पुत्र्यश्च जज्ञिरे । शतानि षोडशैतेषु, पुत्राः सप्तदशाद्भुताः ॥ २६ ॥ तेष्वाद्यः पूर्णचंद्राख्यः, पुत्ररत्नं सुभाग्यवान् । रेजे कनकसेनाद्यै-र्भ्रातृभिः सोऽतिधर्मवान् ॥ २७ ॥ एवं श्रीचंद्रभूशक्रः, कुमारपदवीं वरां । भुक्त्वा द्वादश वर्षाणि, प्राप्तवानखिलाः कलाः ॥ २८ ॥ ततो वर्षशतं ह्येकं, राज्यमेकातपत्रितं(त्रकं) । प्रपाल्य वरवीरस्य, भ्रातुः श्रीपर्वते गिरौ ॥ २९ ॥ चंद्रपत्तनराज्यं त-द्दौ संविग्नमानसः । स्वयं व्रतं जिघृक्षुः सन्, पूर्णचंद्रतनूभुवः ॥ ३० ॥ पट्टाभिषेकं कृतवान्, कुशस्थलेऽतिविस्तरात् । सोऽमाचंद्रकलापुत्रो, राजा पूर्णकलापतिः ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ ततः कनकसेनस्य, कनकादेहजन्मनः । दत्त्वा कनकपूराज्यं, नवलक्षाधिपत्यभृत् ॥ ३२ ॥ वैताढ्यगिरिराज्ये द्वे, रत्नचूडसुतस्य च । समर्प्य कौंडलं राज्यं, श्रीमल्लतनयस्य च ॥ ३३ ॥ राज्यं तद्रत्नमालस्य, शिवचंद्रांगजन्मनः । दत्त्वा मदनचंद्रस्य, राज्यं मलयदेशजं ॥ ३४ ॥ दत्त्वा

कनकचंद्रस्य, राज्यं कर्कोटसंभवं । राज्यं तत्तारचंद्रस्य, श्रीनंदिपुरसंभवं ॥ ३५ ॥ एवं सर्वान् निजान् पुत्रान्, कं कुत्र कं च कुत्रचित् । राज्ये प्रस्थाप्य संत्यज्य, नवधापि परिग्रहं ॥ ३६ ॥ श्रीचंद्रराजराजेंद्रः, समं चंद्रकलादिभिः । राज्ञीभिश्च समस्ताभि-र्गुणचंद्रादिभिस्तथा ॥ ३७ ॥ सहस्रैरष्टभिः पौरै-र्मंत्रिभिः श्रेष्ठिभिर्नरैः । चतुःसहस्रसंख्याभिः, पौरनारीभि-रन्वितः ॥ ३८ ॥ श्रीधर्मघोषसूरींद्र-पार्श्वे जग्राह सद्व्रतं । ततो विजह्रे गुरुभिः, सार्धं तैर्मुनिभिस्तदा ॥ ३९ ॥ अष्टभिः कुलकं ॥ अधीतद्वादशांगीक-स्तपस्तप्त्वातिदारुणं । भुक्त्वा छद्मस्थपर्याय-मष्टौ वर्षाणि शुद्धधीः ॥४०॥ घनघातीनि कर्माणि, क्षित्वा चत्वार्यपि क्षणात् । प्राप श्रीचंद्रराजर्षिः, केवलज्ञानमुत्तमं (मद्भुतं) ॥ ४१ ॥ चक्रे सुरासुरैस्तत्र, भूमींद्रैश्च महान् महः । सुवर्णकमलस्वर्ण-सिंहासनादिकस्ततः ॥ ४२ ॥ श्रीचंद्रः केवली सर्व-देशेषु विहरन् सदा । दशपद्सहस्रसाधून्, साध्वीस्तदर्धमानतः ॥४३॥ अभितो दीक्षयामास, धर्मोपदेशशक्तितः । सम्यक्त्वादिक्रियादानैः, श्राद्धीचक्रे बहून् जनान् ॥४४॥ युग्मं ॥ गुणचंद्रादिसाधूनां, बहूनां कर्मसंक्षयात् । तथा चंद्रकलाद्यानां, साध्वीनां च तदाजनि ॥ ४५ ॥ परमं केवलज्ञानं, तथा च कमलश्रियाः । शीलात्सा मोहनी स्वर्गे, प्रागान्मोक्षेऽपि यास्यति ॥ ४६ ॥ युग्मं ॥ एवं केवलिपर्यायं, पंचत्रिंश-त्प्रमाः समाः । श्रीचंद्रः पालयामास, भव्यांस्तान् प्रतिबोधयन् ॥ ४७ ॥ प्रपाल्यायुर्वर्षशतं, पंचपंचाशदुत्तरं । श्रीचंद्रकेवली प्राप, निर्वाणपदमव्ययं ॥ ४८ ॥ उक्तं च—

साहिय वाससयं जो, तिखंडनिवसयलमइयपयकमलो । एगच्छत्तं रज्जं, पालइ इंदु व सिरिचंदो ॥ ४९ ॥ कम्मट्ठगं-ठिअट्ठं (धरं), अट्ठहिं वरिसेहिं जोगसत्थेण । संखवियं जेण मुणी सो, सिरिचंदो केवली जयउ ॥ ५० ॥ भवियकमलाण

वयणु-करेइं जो दिणयरु व्व बोहिंतो । विहरइ केवलिणं तं, वंदे सिरिचंदरायरिसिं ॥ ५१ ॥ निव्वाणधम्मातित्थे, पणपन्नसयाउअं च पालित्ता । सिद्धिं पत्तो जो तं, मंहं सिरिचंदं णमह निच्चं ॥ ५२ ॥ निर्ग्रंथा ये तथा साध्व्यः, श्रीचंद्रज्ञानिदीक्षिताः । तन्मध्ये केवलज्ञान-मासाद्यैके शिवं ययुः ॥ ५३ ॥ केचित्सर्वार्थसिद्धिं च, प्रापुः शेषा दिवं च ये । एकावतारिणो भूत्वा, सिद्धौ यास्यंति तेऽखिलाः ॥ ५४ ॥

इत्याचाम्लवर्धमान-तपोमहिम्न्यसौ कथा । श्रेणिकाग्रे पुरा यादृक्, श्रीवीरस्वामिनोदिता ॥५५॥ तादृशी चेटकक्ष्माप !, त्वदग्रे बोधिहेतवे । श्रीचंद्रकेवलज्ञानि-कथेयं कथिता मया ॥ ५६ ॥ किंच-चतुर्विंशतिका अष्ट-शतं यावदिदं तपः । कर्ता श्रीचंद्रभूपोऽयं, ज्ञानिभिर्वर्णयिष्यते ॥ ५७ ॥ ततः श्रीचेटको राजा, श्रीगौतममुखात्तदा । श्रीचंद्रचरितं श्रुत्वा, तपःकर्मोद्यतोऽभवत् ॥ ५८ ॥ वस्वंकेषुमिते वर्षे ( ५९८ ), श्रीसिद्धर्षिरिदं महत् । प्राक्प्राकृतचरित्राद्धि, चरित्रं संस्कृतं व्यधात् ॥ ५९ ॥ तस्मान्नानार्थसंदोहा-दुध्धृतेयं कथात्र च । न्यूनाधिकान्यथायु(यु)क्त-मिथ्या दुःकृतमस्तु मे ॥ ६० ॥ एला यत्र दया क्षमा च लवुली सत्यं लवंगं परं, कारुण्यं क्रमुकीफलानि विदितश्चूर्णः स तत्त्वोदयः । कर्पूरं मुनिदानमुत्तमगुणं शीलं सुपत्रोच्चयो, गृह्णीध्वं गुणकृज्जिनेंद्रगदितं तांबूलमेतद्वरं(जनाः) ॥ ६१ ॥ संघोऽयं गुणरत्नरोहणगिरिः संघः सतां मंडनं, संघोऽयं प्रबलप्रतापतरणिः संघो महामंगलं। संघोऽभीप्सितदानकल्पविटपी संघो गुरुभ्यो गुरुः, संघः सर्वजिनाधिनाथमहितः संघश्चिरं नंदतात् ॥ ६२ ॥

१ ' सिरिचंदं णमह णंतणहं ' इति प्रतौ पाठः ॥ २ ' चतुर्विंशत्यष्टशतं, शुद्धं याव० ' इति प्रतौ पाठः ॥

इति श्रीश्रीचंद्रचरित्रे श्रीश्रीचंद्रनृपभागभवत्रिखंडराजाधिराजत्वतीर्थयात्रादिधर्म-
कृत्यदीक्षाकेवलज्ञाननिर्वाणवर्णनो नाम चतुर्थोऽधिकारः समाप्तः ॥ श्रीरस्तु ॥

॥ इति श्रीश्रीचंद्रचरित्रं समाप्तं ॥